नमो नमो निम्मल दंसणस्स
पंचम गणधर श्री सुधर्मा स्वामिने नमः

# ४२ दशवैकालिक-मूलसूत्रं

सटीकं

[तृतीय मूलसूत्रम्]
शय्यंभवसूरि विरचित मूलं + भद्रबाहुस्वामिरचितंनिर्युक्तिः
( भाष्यगाथा )+हरिभद्रसूरिरचितावृत्तिः

## उपोद्घातः निर्युक्तिः

जयति विजितान्यतेजाः सुरासुराधीशसेवितः श्रीमान् ।
विमलस्त्रासविरहितस्त्रिलोकचिन्तामणिर्वीरः ॥

वृ. इहार्थतोऽर्हत्प्रणीतस्य सूत्रतो गणधरोपनिबद्धपूर्वगतोद्धृतस्य शारीरमानसादिकटुकदुःख-संतानविनाशहेतोर्दशकालिकाभिधानस्य शास्त्रस्यातिसूक्ष्ममहार्थगोचरस्य व्याख्या प्रस्तूयते-तत्र प्रस्तुतार्थप्रचिकटयिषयैवेष्टदेवतानमस्काद्वारेणाशेषविघ्नविनायकापोहसमर्थां परम-मङ्गलालयामिमां प्रतिज्ञागाथामाह निर्युक्तिकारः -

नि.[१] सिद्धिगइमुवगयाणं कम्मविसुद्धाण सव्वसिद्धाणं।
नमिऊण दसकालियनिज्जुत्तिं कित्तइस्सामि।

वृ. सिद्धिगतिमुपगतेभ्यो नत्वा दशकालिकनिर्युक्तिं कीर्तयिष्यामीति क्रिया। तत्र सिद्धयन्ति-निष्ठितार्था भवन्त्यस्यामिति सिद्धिः-लोकाग्रक्षेत्रलक्षणा, तथा चोक्तम् - "इह बोंदिं चइत्ता णं, तत्थ गंतूण सिज्झइ"। गम्यत इति गतिः, कर्मसाधनः सिद्धिरेव गम्यमानत्वाद्गतिः सिद्धिगति-स्तामुपसामीप्येन गताः - प्राप्तास्तेभ्यः, सकललोकान्तक्षेत्रप्राप्तेभ्य इत्यर्थः, प्राकृतशैल्या चतुर्थ्यर्थे षष्ठी, यथोक्तम् - "छट्ठीविभत्तीए भण्णइ चउत्थी"। तत्र एकेन्द्रियाः पृथिव्यादयः सकर्मका अपि तदुपगमनमात्रमधिकृत्य यथोक्तस्वरूपा भवन्त्यत आह - 'कर्मविशुद्धेभ्यः' क्रियते इति कर्म-ज्ञानावरणीयादिलक्षणं तेन विशुद्धा-वियुक्ताः कर्मविशुद्धाः-कर्मकलङ्करहिता इत्यर्थः, तेभ्यः कर्मविशुद्धेभ्यः। आह-एवं तर्हि वक्तव्य, न सिद्धिगतिमुपगतेभ्यः, अव्यभिचारात्, तथाहि-कर्म-विशुद्धाः सिद्धिगतिमुपगता एव भवन्ति, न, अनियतक्षेत्रविभागोपगतसिद्ध-प्रतिपादनपरदुर्नयनिरासार्थत्वादस्य, तथा चाहुरेके -

"रागादिवासनामुक्तं, चित्तमेव निरामयम्।
सदाऽनियतदेशस्थं, सिद्ध इत्यभिधीयते॥

इत्यलं प्रसङ्गेन। ते च तीर्थादिसिद्धभेदादनेकप्रकार भवन्ति, तथा चोक्तम् - "तित्थसिद्धा अतित्थसिद्धा तित्थगरसिद्धा अतित्थगरसिद्धा सयंबुद्धसिद्धा पत्तेयबुद्धसिद्धा बुद्धबोहियसिद्धा

इत्थीलिंगसिद्धा पुरिसलिंगसिद्धा नपुंसगलिंगसिद्धा सलिंगसिद्धा अन्नलिंगसिद्धा गिहिलिंग-सिद्धा एगसिद्धा अनेगसिद्धा" इत्यत आह – 'सर्वसिद्धेभ्यः' सर्वे च त सिद्धाश्चेति समासस्तेभ्यः, अथवा – 'सिद्धिगतिमुपगतेभ्यः' इत्यनेन सर्वथा सर्वगतात्मसिद्धपक्षप्रतिपादनपरदुर्नयस्य व्यवच्छेदमाह, तथा चोक्तमधिकृतनयमतानुसारिभिः –

"गुणसत्त्वान्तरज्ञानान्निवृत्तप्रकृतिक्रियाः।
मुक्ताःसर्वत्र तिष्ठन्ति, व्योमवत्तापवर्जिताः॥"

व्यवच्छेदश्चैतेषां सामीप्येन सर्वात्मना सिद्धिगतिगमनाभावात्, 'कर्मविशुद्धेभ्यः' इत्यनेन तु सकर्मकाणिमादिविचित्रैश्वर्यवत्सिद्धप्रतिपादनपरस्येति, उक्तं च प्रक्रान्तनयदर्शनाभिनिविष्टैः –

"अणिमाद्यष्टविधं प्राप्यैश्वर्यं कृतिनः सदा।
मोदन्ते सर्वभावज्ञास्तीर्णाः परमदुस्तरम्॥१॥"

इत्यादि, व्यवच्छेदश्चैतेषांकर्मसंयोगेन अनिष्ठितार्थत्वाद्वस्तुतः सिद्धत्वानुपपत्तेरिति, 'सर्वसिद्धेभ्यः' इत्यनेन तु भङ्ग्यैव सर्वथा अद्वैतपक्षसिद्धप्रतिपादनपरस्येति, तथा चोक्तं –

"एक एव हि भूतात्मा, भूते भूते व्यवस्थितः।
एकधा बहुधा चैव, दृश्यते जलचन्द्रवत्॥"

व्यवच्छेदश्चास्य सर्वथा अद्वैते बहुवचनगर्भसर्वज्ञशब्दाभावात् (सिद्धिगतिगमनाभावात्)। 'नत्वा' प्रणम्येति, अनेन तु समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानान्नित्यानित्यैकान्त-वादासाधुत्वमाह, तत्र क्त्वाप्रत्यार्थानुपपत्तेः, तत्र नित्यैकान्तवादे तावदात्मन एकान्तनित्यत्वाद-प्रच्युतानुत्पन्नस्थिरैकस्वभावत्मादिभन्नाकालक्रियाद्वयकर्तृत्वानुपपत्तेः, क्षणिकैकान्तवादे चात्मन उत्पतिव्यतिरेकेण व्यापाराभावादिभन्नकालक्रियाद्वयकर्तृत्वानुपपत्तिरेवेत्यलं विस्तरेण, गमनि-कामात्रमेवैतदिति। भवति च चतुर्थ्यप्येवं नमनक्रियायोगे, अधिकृतगाथासूत्रान्यथानुपपत्तेः, आप्तश्चनिर्युक्तिकारः, 'पित्रे सवित्रे च सदा नमामी' त्येवमादिविचित्रप्रयोगदर्शनाच्च, कर्मणि वा षष्ठी। सर्वसिद्धेभ्यो नत्वा किमित्याह – 'दशकालिकनिर्युक्तं कीर्तयिष्यामि' तत्र कालेन निर्वृत्तं कालिकं, प्रमाणकालनेति भावः, दशाध्ययनभेदात्मकत्वाद्दशप्रकारं कालिकं प्रकारशब्द-लोपाद्दशकालिकं, विशब्दार्थं तूत्तरत्र व्याख्यास्यामः, तत्र निर्युक्तिरिति–निर्युक्तानामेव सूत्रार्थानां युक्तिः–परिपाट्या योजनं निर्युक्तयुक्तिरिति वाच्ये युक्तशब्दलोपान्निर्युक्तिस्तां–विप्रकीर्णार्थ-योजनां व्याख्यास्यामि कीर्तयिष्यामीति गाथार्थः॥ शास्त्राणि चादिमध्यावसानङ्गलभाञ्जि भवन्तीत्यत आह –

**नि.[२/१]** आइमज्झवसाणे काउं मंगलपरिग्गहं विहिणा।

**वृ.** शास्त्रस्यादौ–प्रारम्भे मध्ये–मध्यविभागे अवसाने–पर्यन्ते, किं? कृत्वा मङ्गलपरिग्रहम्, कथम्? –'विधिना' प्रवचनोक्तेन प्रकारेण, आह–किमर्थं मङ्गलत्रयपरिकल्पनम्? इति, उच्यते, इहादिमङ्गलपरिग्रहः संकलविघ्नापोहेनाभिलषितशास्त्रार्थपारगनार्थं, तत्स्थिरीकरणार्थं च मध्यमङ्गलपरिग्रहः, तस्यैव शिष्यप्रशिष्यसन्तानाव्यवच्छेदायावसानमङ्गलपरिग्रह इति। अत्र चाक्षेपपरिहारावश्यकविशेषविवरणादवसेयाविति। सामान्यतस्तु सकलमपीदं शास्त्रं मङ्गलं, निर्जरार्थत्वात्तपोवत्, न चासिद्धो हेतुः, यतो वचनविज्ञानरूपं शास्त्रं, ज्ञानस्य च निर्जरार्थता

प्रतिपादितैव, यत उक्तम्-

"जं नेरईओ कम्मं खवेइ बहुयाहि वासकोडीहिं।
तं नाणी तिहि गुत्तो खवेइ ऊसासमेत्तेणं॥"

इत्यादि। इह चादिमङ्गलं द्रुमपुष्पिकाध्ययनादि, धर्मप्रशंसाप्रतिपादकत्वात्तत्स्वरूपत्वादिति, मध्यमङ्गलं तु धर्मार्थकामाध्ययनादि, प्रपञ्चाचारकथाद्यभिधायकत्वात्, चरममङ्गलं तु भिक्ष्व-ध्ययनादि, भिक्षुगुणाद्यवलम्बनत्वादित्येवमध्ययनविभागतो मङ्गलत्रयविभागो निदर्शितः, अधुना सूत्रविभागेन निदर्श्यते- तत्र चादिमङ्गलम् 'धम्मो मंगल' इत्यादिसूत्रं, धर्मोपलक्षितत्वात्, तस्य च मङ्गलत्वादिति, मध्यमङ्गलं पुनः 'नाणदंसणे' त्यादि सूत्रं, ज्ञानोपलक्षितत्वात्, तस्य च मङ्गल-त्वादिति, अवसानमङ्गलं तु 'निक्खममाणा इय' इत्यादि, भिक्षुगुणस्थिरीकरणार्थं विविक्त-चर्याभिधायकत्वात्, भिक्षुगुणानां च मङ्गलत्वादिति। आह-मङ्गलमिति कः शब्दार्थः ?, उच्यते, 'अगिरगिलवगिमगीति' दण्डकधातुः, अस्य "इदितो नुम् धातो" रिति नुमि विहिते औणादि-कालचप्रत्ययान्तस्य अनुबन्धलोपे कृते प्रथमैकवचनान्तस्य मङ्गलमितिरूपं भवति। मङ्ग्यते हितमनेनेति मङ्गलं. मङ्ग्यतेऽधिगम्यते साध्यत इतियावत्, अथवा मङ्ग इति धर्माभिधानं, 'ला आदाने' अस्य धातोर्मङ्ग उपपदे "आतोऽनुपसर्गे कः" इति कप्रत्ययान्तस्यानुबन्धलोपेकृते "आतो लोप इटि च" क्ङिति इत्यनेन सूत्रेणाकारलोपे च कृते प्रथमैकवचनान्तस्यैव मङ्गलमिति भवति, मङ्गं लातीति मङ्गलं, धर्मोपादानहेतुरित्यर्थः, अथवा मां गालयति भवादिति मङ्गलं, संसारादपनयतीत्यर्थः तच्च नामादि चतुर्विधं, तद्यथानाम मङ्गलं स्थापनामङ्गलं द्रव्यमङ्गलं भावमङ्गलं चेति, एतेषां च स्वरूपमावश्यकविशेषविवरणादवसेयमिति॥

अमुमेव गाथार्थमुपसंहरन्नाह निर्युक्तिकारः-

नि. [२/२] नामाईमंगलंपिय चउव्विहं पन्नवेऊणं॥

वृ. नामादिमङ्गलं चतुर्विधमपि 'प्रज्ञाप्य' प्ररूप्येति गाथार्थः॥ तत्र समानकर्तृकयोः पूर्वकाले क्त्वाप्रत्ययविधानात् प्रज्ञाप्य किमत आह-

नि. [३] सुयनाणे अनुओगेणाहिगयं सो चउव्विहो होइ।
चरणकरणानुओगे धम्मे गणिए (काले) य दविए य॥

वृ. श्रुतं च तद् ज्ञानं च श्रुतज्ञानं तस्मिन् श्रुतज्ञाने अनुयोगेनाधिकृतम्, अनुयोगेनाधिकार इत्यर्थः, इयमत्र भावना - भावमङ्गलाधिकारे श्रुतज्ञानेनाधिकारः, तथा चोक्तम् -

"एत्थं पुन अहिगारो सुयनाणेणं जओ सुएणं तु।
सेसाणमप्पणाऽविय अनुओगु पईवदिट्ठंतो॥"

तस्य चोद्देशादयः प्रवर्तन्ते इति, उक्तं च - "सुअनाणस्स उद्देसो समुद्देसो अणुन्ना अनुओगो पवत्तइ" तत्रादावेवोद्दिष्टस्य समुद्दिष्टस्य समनुज्ञा-तस्य च सतः अनुयोगो भवतीत्यतो निर्युक्ति-कारेणाभ्य-धायि 'श्रुतज्ञानेऽनुयोगेनाधिकृत' मिति। 'सः' अनुयोगश्चतुर्विधो भवति, कथम्? - 'चरणकरणा-नुयोगः' चर्यत इति चरणं-व्रतादि, यथोक्तम्, -

"वय समणधम्मसंजमवेयावच्चं च बंभगुत्तीओ।
नाणादितियं तव कोहनिग्गहाई चरणमेयं॥"

क्रियते इति करणं-पिण्डविशुद्ध्यादि, उक्तं च -

"पिंडविसोही समिई भावन पडिमा य इंदियानिरोहो।

पडिलेहण गुत्तीओ अभिग्गहा चेव करणं तु॥"

चरणकरणयोरनुयोगश्चरणकरणानुयोगः, अनुरूपो योगोऽनुयोगः-सूत्रस्यार्थेन सार्द्धमनुरूपः सम्बन्धो, व्याख्यानमित्यर्थः, एकारान्तः शब्दः प्राकृतशैल्या प्रथमा[द्वितीया]न्तोऽपि द्रष्टव्यः, यथा "कयरे आगच्छइ दित्तरूवे" इयतादि, 'धर्मे' इती धर्मकथानुयोगः 'काले' चेति कालानुयोगश्च गणितानुयोगश्चेत्यर्थः 'द्रव्य चे' ति द्रव्यानुयोगश्च। तत्र कालिकं श्रुतं चरणकरणानुयोगः ऋषि-भाषितान्युत्तराध्ययनादीनि धर्मकथानुयोगः, सूर्यप्रज्ञप्त्यादीनि गणितानुयोगः, दृष्टिवा दस्तु द्रव्यानु-योग इति उक्तं च- कालियं सुअं च इसिभासियाइं तइया य सूरपन्नत्ती सव्वो य दिट्ठिवाओ चउत्थओ होइ अनुओगो॥"

इति गाथार्थः॥ इह चार्थतोऽनुयोग द्विधा-अपृथक्त्वानुयोगः पृथक्त्वानुयोगश्च, तत्रापृथक्त्वा-नुयोगो यत्रैकस्मिन्नेव सूत्रे सर्व एव चरणादयः प्ररूप्यन्ते, अनन्तगमपर्यात्वात्सूत्रस्य, पृथक्त्वानु-योगश्च क्वचित्सूत्रे चरणकरणमेव क्वचित्पुनर्धर्मकथेत्यादि, अनयोश्च वक्तव्यता-

"जावंत अज्जवइरा अपुहुत्तं कालियानुओगस्स।

तेनारेण पुहुत्तं कालियसुय दिट्ठिवाए य॥"

इत्यादेर्ग्रन्थादावश्यकविशेषविवरणाच्चावसेयेति॥ इह पुनः पृथक्त्वानुयोगेनाधिकारः,

नि.[४] अपुहुत्तपुहुत्ताई निद्दिसिउं एत्थ होइ अहिगारो।

चरणकरणानुओगेन तस्स दारा इमे हुंति॥

वृ. 'अपृथक्त्वपृथक्त्वे' लेशतो निर्दिष्टस्वरुपे निर्दिश्य 'अत्र' प्रक्रमे भवत्यधिकारः, केन? -'चरणकरणानुयोगेन' 'तस्य' चरणकरणानुयोगस्य 'द्वाराणि' प्रवेशमुखानि 'अमूनि' वक्ष्यमाण-लक्षणानि भवन्तीति गाथार्थः॥

नि.[५] निक्खेवेगट्ठनिरुत्तविही पवित्ती य केन वा कस्स?

तद्दारभेयलक्खण तयरिहपरिसा य सुत्तत्थो॥

वृ. अस्याः प्रपञ्चार्थः आवश्यकविशेषविवरणादवसेयः, स्थानशून्यार्थं तु संक्षेपार्थः प्रतिपाद्यत इति, 'निक्खेव' त्ति अनुयोगस्य निक्षेपः कार्यः, तद्यथा-नामानुयोग इत्यादि, 'एगट्ठत्ति' तस्यैव एकार्थिकानि वक्तव्यानि, तद्यथा-अनुयोगो नियोग इत्यादि, 'निरुत्ति' त्ति तस्यैव निरुक्तं वक्तव्यम्, अनुयोजनमनुयोगः अनुरूपो वा योग इत्यादि, 'विहि' त्ति तस्यैव विधिर्वक्तव्यो, वक्तुः श्रोतुश्च तत्र वक्तुः

"सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिओ।

तइओ य निरवसेसो एस विही होइ अनुओगे॥"

श्रोतुश्चायम्-"मूयं हुंकारं वा बाढक्कार पडिपुच्छ वीमंसा।

तत्तो पसंगपारायणं च परिनिट्ठ सत्तमए॥"

पवित्ती य' त्ति अनुयोगस्य प्रवृत्तिश्च वक्तव्या, सा चतुर्भङ्गानुसारेण विज्ञेया, उक्तं च -

"निच्चं गुरू पमाई सीसा य गुरू न सीसगा तह य।

अपमाइ गुरू सीसा पमाइणो दोवि अपमाई ॥१॥
पढमे नत्थि पवित्ती बीए तइए य णत्थि थोवं वा ।
अत्थि चउत्थि पवित्ती एत्थं गोणीए दिट्ठंतो ॥२॥
अप्पण्हुया उ गोणी नेव य दोद्धा समुज्जओ दोद्धुं ।
खीरस्स कओ पसवो ? जइवि य बहुखीरदा सा उ ॥३॥
गोणिसरिच्छो उ गुरू दोहा इव साहुणो समक्खाया ।
खीरं अत्थपवित्ती नत्थि तहिं पढमबितिएसु ॥५॥
अहवा अनिच्छमाणं अवि किंचि उ जोगिणो पवत्तंति ।
तइए सारंतमी होज्ज पवित्ती गुणित्ते वा ॥६॥
अपमाई जत्थ गुरू सीसाविय विनयगहणसंजुत्ता ।
धणियं तत्थ पवित्ती खीरस्सव चरिमभंगंमि ॥७॥

'केन'त्ति केनानुयोगः कर्तव्य इति वक्तव्यं, तत्र य इत्थंभूत आचार्यस्तेन कर्तव्यः, तद्यथा–

''देसकुलजाइरूवी संघयणाधिइजुओ अनासंसी ।
अविकत्थणो अमाई थिरपरिवाडी गहियवक्को ॥१॥
जियपरिसो जियनिद्दो मज्झत्थो देसकालभावन्नू ।
आसन्नलद्धपइभो नाणाविहदेसभासन्नू ॥२॥
पंचविहे आयारे जुत्तो सुत्तत्थतदुभयविहिन्नू ।
आहरणहेउकारणनयनिउणो गाहणाकुसलो ॥३॥
ससमयपरसमयविऊ गंभीरो दित्तियं सिवो सोमो ।
गुणसयकलिओ जुग्गो पवयणसारं परिकहेउं ॥४॥

आसामर्थः कल्पादवसेयः, प्राथमिकदशकालिकव्याख्याने तु लेशत उच्यते–आर्यदेशोत्पन्नः, सुखावबोधवाक्यो भवतीति देशग्रहणं, पैतृकं कुलं विशिष्टकुलोद्भवो यथोत्क्षिप्तभारवहने न श्राम्यति, मातृकी जातिः तत्सम्पन्नो विनयान्वितो भवति, रूपवानादेयवचनो भवति, आकृतौ च गुणा वसन्ति, संहननधृतियुक्तो व्याख्यानतपोऽनुष्ठानादिषु न खेदं याति, अनाशंसी न श्रोतृभ्यो वस्त्राद्याकांक्षति, अविकत्थनो बहुभाषी न भवति, अमायी न शाठ्येन शिष्यान् वाहयति, स्थिरपरिपाटी स्थिरपरिचितग्रन्थस्य सूत्रं न गलति, गृहीतवाक्योऽप्रतिघातवचनो भवति, जितपरिषत् परप्रवादिक्षोभ्यो न भवति, जितनिद्रोऽप्रमत्तत्वाद् व्याख्यानरतिर्भवति प्रकामनिकामशायिनश्च शिष्यांश्चोदयति, मध्यस्थः संवादको भवति, देशकालभावज्ञो देशादिगुणानबुद्ध्याप्रतिबद्धो विहरति देशनां च करोति, आसन्नलब्धप्रतिभोऽजात्युत्तरादिना निगृहीतः प्रत्युत्तरदानसमर्थो भवति, नानाविधदेशभाषाविधिज्ञो नानादेशजविनेयप्रत्यायनसमर्थो भवति, ज्ञानादिपञ्चविधाचारयुक्तः श्रद्धेयवचनो भवति, सूत्रार्थोभयज्ञः सम्यगुत्सर्गापवादप्ररूपको भवति, उदाहरणहेतुकारणनयनिपुणस्तद्गम्यान् भावान् सम्यक् प्ररूपयति नागममात्रमेव, ग्राहणाकुशलः शिष्याननेकधा ग्राहयति, स्वसमयपरसमयवित् सुखं परमातक्षेपमुखेन स्वसमयं प्ररूपयति, गम्भीरो महत्यप्यकार्ये न रुष्यति, दीप्तिमान् परप्रवादिक्षोभमुत्पादयति, शिवो

मारिरोगाद्युपद्रवविघाताकृद् भवति, सौम्यः प्रशान्तदृष्टितया सकलजनप्रीत्युत्पादको भवति, इत्थंभूत एव गुणशतकालितो योग्यः प्रवचनम्-आगमस्तस्य सारस्तं कथयितुमिति, यतोऽसावनेक-भव्यसत्त्वप्रबोधहेतुर्भवति, उक्तं च-

"गुणसुट्ठिअस्स वयणं घयमहुसित्तोव्व पावओ भाइ।
गुणहीनस्स न सोहइ नेहविहीणो जह पईवो॥"

तथा चान्येनाप्युक्तम्-

"क्षीरं भाजनसंस्थं न तथा वत्सस्य पुष्टिमावहति।
आवल्गमानशिरसो यथा हि मातृस्तनात्पिबतः॥१॥
तद्वत्सुभाषितमयं क्षीरं दुःशीलभाजनगतं तु।
न तथा पुष्टिं जनयति यथा हि गुणवन्मुखात्पीतम्॥२॥
शीतेऽपि यत्नलब्धो न सेव्यतेऽग्निर्यथा श्मशानस्थः।
शीलविपन्नस्य वचः पथ्यमपि न गृह्यते तद्वत्॥३॥
चारित्रेण विहीनः श्रुतवानपि नोपजीव्यते सद्भिः।
शीतलजलपरिपूर्णः कुलजैश्चाण्डालकूप इव॥४॥

'कस्स'त्ति कस्यानुयोग? इति वक्तव्यं, तत्र सकलश्रुतज्ञानस्याप्यनुयोगो भवति, अमुं पुनः प्रारम्भमाश्रित्य दशकालिकस्येति। अत्राह-ननु 'दसकालियनिज्जुत्तिं कित्तइस्सामित्ति" अस्मादेव वचनतः प्रकृतद्वारार्थस्यागतत्वात् तदुपन्यासोऽनर्थक इति, न अधिकृतनिक्षेपाद्वार-कलापस्याशेषश्रुतस्कन्धविषयत्वात्, तद्बलेनैव च निर्युक्तिकारेणापि तथोपन्यस्तत्वात्, अस्मादेव स्थानादन्यत्राप्यादौ शास्त्राभिधानपूर्वक उपन्यासः क्रियत इति भावना। व्याख्यातं लेशतो निर्युक्तिगाथादलं, पश्चार्द्धं त्वध्ययनाधिकारे यथाऽवसरं व्याख्यास्यामः, यतस्तत्रैवोपक्र-माद्यनुयोगद्वारानुपूर्व्यादितद्भेदसूत्रादिलक्षणतदर्हपर्षदादयश्च वक्तुं शक्यन्ते, नान्यत्र, निर्विषयत्वा-दित्यलं प्रसङ्गेन॥ साम्प्रतं प्रकृतयोजनामेवोपदर्शयन्नाह निर्युक्तिकारः-

नि.[६] एयाइँ परूवेउं कप्पे वण्णियगुणेण गुरुणा उ।
अनुओगो दसवेयालियस्स विहिणा कहेयव्वो॥

वृ. 'एतानि' निक्षेपादिद्वाराणि 'प्ररूप्य' व्याख्याय कल्पे वर्णितगुणेन गुरुणा, षट्त्रिंशद्-गुणसमन्वितेनेत्यर्थः। अनुयोगो दशवैकालिकस्य 'विधिना' प्रवचनोक्तेन 'कथयितव्य' आख्यातव्य इति गाथार्थः॥ सम्प्रत्यजानानः शिष्यः पृच्छति-यदि दशकालिकस्यानुयोग-स्ततस्तद्दशकालिकं भदन्त! किमङ्गमङ्गानी? श्रुतस्कन्धः श्रुतस्कन्धाः? अध्ययनमध्ययनानि? उद्देशक उद्देशका? इत्यष्टौ प्रश्नाः, एतेषां मध्ये त्रयो विकल्पाः खलु प्रयुज्यनते, तद्यथा-दश-कालिकं श्रुतस्कन्धः अध्ययनानि उद्देशकाश्चेति, यतश्चैवमतो दशादीनां निक्षेतः कर्त्तव्यः, तद्यथा-दशानां कालस्य श्रुतस्कन्धस्याध्ययनस्य उद्देशकस्य चेति, तथा चाह निर्युक्तिकारः-

नि.[७] दसकालियंति नामं संखाए कालओ य निद्देसो।
दसकालियसुअखंधं अज्झयणुद्देस निक्खिविउं॥

वृ. 'दशकालिकं' प्राग्निरुपितशब्दार्थम् 'इति' एवंभूतं यत् 'नाम' अभिधानं, इदं किम्? -

संख्यानं संख्या तया, तथा 'कालतश्च' कालेन चायं-'निर्देशः' निर्देशनं निर्देशः, विशेषभिधानमित्यर्थः, अस्य च निबन्धनं विशेषेण वक्ष्यामः 'मनगं पडुच्च' इत्यादिना ग्रन्थेन, यतश्चैवमतः 'दसकालियं'ति कालेन निर्वृत्तं कालिकं दशशब्दस्य कालशब्दस्य च निक्षेपः, निर्वृत्तार्थस्तु निक्षेपः, तथा श्रुतस्कन्धं तथाऽध्ययनं 'उद्देशं' तदेकदेशभूतं, किम्? -निक्षेप्तु-मनुयोगोऽस्य कर्त्तव्य इति गाथार्थः ॥ तत्र 'यथोद्देशं निर्देश' इति न्यायादधिकृतशास्त्राभिधानो-पयोगित्वाञ्च दशशब्दस्यैवादौ निक्षेपः प्रदर्श्यते-तत्र दशैकाद्यायत्ता वर्त्तन्ते, एकाद्यभावे दशा-नामप्यभावाद्, अत एकस्यैव तावन्निक्षेपप्रतिपिपादयिषयाऽऽह-

नि.[८] नामं ठवणा दविए माउयपयसंगहेक्कए चेव।
पज्जावभावे य तहा सत्तेए एक्कगा होंति ॥

वृ. इहैक एव एककः, तत्र 'नामैककः' एक इति नाम 'स्थापनैककः' एक इति स्थापना, 'द्रव्यैककं' त्रिधा-सचित्तादि, तत्र सचित्तमेकं पुरुषद्रव्यं, अचित्तमेकं रूपकद्रव्यं, मिश्रं तदेव कटकादिभूषितं पुरुषद्रव्यमिति, 'मातृकापदैककम्' एकं मातृकापदं, तद्यथा-'उप्पन्ने इ वे' त्यादि, इह प्रवचने दृष्टिवादे समस्तनयवादबीजभूतानि मातृकापदानि भवन्ति, तद्यथा-"उत्पन्ने इ वा विगमे इ वा धुवे इ वा" अमूनि च मातृकापदानि "अ आ इ ई" इत्येवमादीनि, सकलशब्द-व्यवहारव्यापकत्वान्मातृकापदानि, इह चाभिधेयवल्लिङ्गवचनानि भवन्तीति कृत्वेत्थमुपन्यासः, 'सङ्ग्रहैककः' शालिरिति, अयमत्र भावार्थः-संग्रहः-समुदायः तमप्याश्रित्यैकवचनगर्भ-शब्दप्रवृत्तेः, अथवा नैकोऽपि शालिः शालिरित्युच्यते बहवोऽपि शालयः शालिरिति, लोके तथादर्शनात्, अयं चादिष्टानादिष्टभेदेन द्विधा-तत्रानादिष्टो यथा शालिः, आदिष्टो यथा कलम-शालिरिति, एवमादिष्टानादिष्टभेदावुत्तरद्वारेष्वपि यथारूपमायोज्यौ, 'पर्यायैककः' एकः पर्यायः, पर्यायो विशेषो धर्म इत्यनर्थान्तरं, स चानादिष्टो वर्णादिः आदिष्टः कृष्णादिरिति

अन्ये तु समस्तश्रुतस्कन्धवस्त्वपेक्षयेत्थं व्याचक्षते-अनादिष्टः श्रुतस्कन्धः आदिष्टो दशकालिकाख्य इति, अन्यस्त्वनादिष्टो दशकालिकाख्यः आदिष्टस्तु तदध्ययनविशेषो द्रुमपुष्पिकादिरिति व्याचष्टे, न चैतदतिचारु, दशकालिकाभिधानत एवादेशसिद्धेः। 'भावैककः' एको भावः, स चानादिष्टो भाव इति, आदिष्टस्त्वौदयिकादिरिति। सप्त एते अनन्तरोक्ता एकका भवन्ति, इह च किल यस्माद्दश पर्याया-अध्ययनविशेषाः संग्रहैककेन संगृहीतास्तस्मात्तेना-धिकारः, अन्ये तु व्याचक्षते-यतः किल श्रुतज्ञानं क्षायोपशमिके भावे वर्त्तते तस्माद् भवैकके-नाधिकार इति गाथार्थः ॥ इदानीं द्यादीन् विहाय दशशब्दस्यैव निक्षेपं प्रतिपादयन्नाह-

नि.[९] नामं ठवणा दविए खित्ते काले तहेव भावे अ।
एसो खलु निक्खेवो दसगस्स उ छव्विहो होइ ॥

वृ. आह-किमिति द्वयादीन् विहाय दशशब्दः उपन्यस्तः?, उच्यते, एतत्प्रतिपादनादेव द्वयादीनां गम्यमानत्वात्, तत्र नामस्थापने सुगमे, द्रव्यदशकं दश द्रव्याणि सचित्ताचित्तमिश्राणि मनुष्यरूपककटकादिविभूषितानीति, क्षेत्रदशकं दश क्षेत्रप्रदेशाः, कालदशकं दश कालाः, वर्त्तनादिरूपत्वात्कालस्य दशावस्थाविशेषा इत्यर्थः वक्ष्यति च-'बाला किड्डा मंदे' त्यादिना, भावदशकं दश भावाः, ते च सान्निपातिकभावे स्वरूपतो भावनीयाः, अथ चैत (चैत) एव

विवक्षया दशाध्ययनविशेषा इति. 'एष' एवंभूतः खलु 'निक्षेपो' न्यासो दशशब्दस्य बहुवचनान्तत्वाद्दशानां षड्विधो भवति, तत्र खलुशब्दोऽवधारणार्थः, एष एव प्रकान्तोपयोगीति, तुशब्दो विशेषणार्थः, किं विशिनष्टि ? नायं दशशब्दमात्रस्य, किन्तु तद्वाच्यस्यार्थस्यापीति गाथार्थः साम्प्रतं प्रस्तुतोपयोगित्वात्कालस्य कालदशकद्वारे विशेषार्थप्रतिपिपादयिषयेदमाह-

**नि.[१०]**　बाला किड्डा मंदा बला य पन्ना य हायनि पवंचा।
पब्भार मम्मुही सायनी य दसमा उ कालदसा॥

**वृ.** बाला क्रीडा च मन्दा च बला प्रज्ञा च हायिनि ईषत्प्रपञ्चा प्राग्भारा मन्मुखो शायिनी तथा। एता हि दश दशाः-जन्त्ववस्थाविशेषलक्षणा भवन्ति।

आसां च स्वरूप-मिदमुक्तं पूर्वमुनिभिः-

"जायमित्तस्स जंतुस्स, जा सा पढमिया दसा।
न तत्थ सुहदुक्खाइं, बहुं जाणंति बालया॥१॥
बिइयं च दसं पत्तो, नानाकिड्डाहिं किड्डइ।
न तत्थ कामभोगेहिं, तिव्वा उप्पज्जई मई॥२॥
तइयं च दसं पत्तो, पंच कामगुणे नरो।
समत्थो भुंजिउं भोए, जइ से अत्थि घरे धुवा॥३॥
चउत्थी उ बला नाम, जं नरो दसमस्सिओ।
समत्थो बलं दरिसिउं, जइ कोइ निरुवद्दवो॥४॥
पंचमिं तु दसं पत्तो, आनुपुव्वीइ जो नरो।
इच्छियत्थं विचिंतेइ, कुडुंबं वाऽभिकंखई॥५॥
छट्ठी उ हायणी नाम, जं नरो दसमस्सिओ।
विरज्जइ य कामेसु, इंदिएसु य हायई॥६॥
सत्तमिं च दसं पत्तो, आनुपुव्वीइ जो नरो।
निट्ठुहइ चिक्कणं खेलं, खासइ य अभिक्खणं॥७॥
संकुचियवलीचम्मो, संपत्तो अट्ठमिं दसं।
नारीनमनभिप्पेओ, जराए परिणामिओ॥८॥
नवमी मम्मुही नाम, जं नरो दसमस्सिओ।
जराघरे विनस्संतो, जीवो वसइ अकामओ॥९॥
हीनभिन्नसरो दीनो, विवरीओ विचित्तओ।
दुब्बलो दुक्खिओ सुवइ, संपत्तो दसमिं दसं॥१०॥

इत्यलं विस्तरेणेति गाथार्थः॥ इदानीं कालनिक्षेपप्रतिपादानायमह-

**नि.[११]**　दव्वे अद्ध अहाउअ उवक्कमे देसकालो य।
तह य पमाणे वण्णे भावे पगयं तु भावेणं॥

**वृ.** 'द्रव्य' इति वर्त्तनादिलक्षणो द्रव्यकालो वाच्यः, 'अद्धे'त्ति चन्द्रसूर्यादिक्रिया-विशिष्टोऽर्द्ध-तृतीयद्वीपसमुद्रान्तर्वर्त्यद्धाकालः समयादिलक्षणो वाच्यः, तथा 'यथायुष्ककालो' देवाद्यायुष्क-

लक्षणो वाच्यः, तथा 'उपक्रमकालः' अभिप्रेतार्थसामीप्यानयनलक्षणः सामाचार्या-युष्कभेदभिन्नो वाच्यः, तथा देशकालो वाच्यः, देशः प्रस्तावोऽवसरो विभागः पर्याय इत्यनर्थान्तरम्, ततश्चाभीष्टवस्त्ववाप्त्यवसरः काल इत्यर्थः, तथा कालकालो वाच्यः, तत्रैकः कालशब्दः प्राग्निरूपितशब्दार्थ एव, द्वितीयस्तु सामयिकः, कालो मरणमुच्यते, मरणक्रियायाः कलनं काल इत्यर्थः, चः समुच्चये, तथा 'प्रमाणकालः' अद्धाकालविशेषो दिवसादिलक्षणो वाच्यः, तथा वर्णकालो वाच्यः, वर्णश्चासौ कालश्चेति, 'भावे'त्ति औदयिकादिभावकालः सादिस-पर्यवसानादिभेदभिन्नो वाच्य इति। प्रकृतं तु 'भावेने'त्ति भावकालेन, इह पुनर्दिवसप्रमाण-कालेनाधिकारः, तत्रापि तृतीयपौरुष्याः तत्रापि बह्वतिक्रान्तयेति। आह-यदुक्तं - 'पगयं तु भावेणंति' तत्कथं न विरुध्यते इति ?, उच्यते, क्षायोपशमिकभावकाले शय्यम्भवेन निर्व्यूढं प्रमाणकाले चोक्तलक्षण इत्यविरोधः, अथवा प्रमाण कालोऽपि भावकाल एव, तस्याद्धा-कालस्वरूपत्वात्, तस्य च भावत्वादिति गाथा-समुदायार्थः ॥ अवयवार्थस्तु सामायिकविशेष- विवरणादवसेयः। तथा चाह निर्युक्तिकारः-

नि.[१२] सामाइयअनुकमओ वण्णेउं विगयपोरिसीए ऊ।
निज्जूढं किर सेज्जंभवेण दसकालियं तेनं॥

**वृ.** सामायिकम्-आवश्यकप्रथमाध्ययनं तस्यानुक्रमः-परिपाटीविशेषः सामायिके वाऽनुक्रमः सामायिकानुक्रमः ततः सामायिकानुक्रमतः-सामायिकानुक्रमेण वर्णयितुम्, अनन्तरोपन्यस्तगाथाद्वाराणीतिप्रक्रमाद् गम्यते, विगतपौरुष्यामेव, तुशब्दस्यावधार्थत्वात्, 'निर्यूढं' पूर्वगतादुद्धृत्य विरचितं, किलशब्दः परोक्षागमवादसंसूचकः शय्यम्भवेन चतुर्दशपूर्वविदा 'दशकालिकं' प्राग्निरूपिताक्षरार्थं 'तेन' कारणेनोच्यत इति गाथार्थः

श्रुतस्कन्धयोस्तु निक्षेपश्चतुर्विधो द्रष्टव्यो यथाऽनुयोगद्वारेषु, स्थानाशून्यार्थं किञ्चिदुच्यते-इह नोआगमतः ज्ञशरीरभव्यशरीरव्यतिरिक्तं द्रव्यश्रुतं पुस्तकपत्रन्यस्तं, अथवा सूत्रमण्डजादि, भावश्रुतं त्वागमतो ज्ञाता उपयुक्तः, नोआगमतस्त्विदमेव दशकालिकं, नोशब्दस्य देशवचनत्वात्, एवं नोआगमतो ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्यस्कन्धः सचेतनादिः, तत्र सचित्तो द्विपदादिः, अचित्तो द्विप्रदेशिकादिः, मिश्रः सेनादि(दे)र्देशादिरिति, तथा भावस्कन्धस्त्वागमतस्तदर्थोपयोगपरिणाम एवं, नोआगमतस्तु दशकालिकश्रुतस्कन्ध एवेति, नोशब्दस्य देशवचनत्वादिति, इदानीमध्ययनोद्देशकन्यासप्रस्तावः, तं चानुयोगद्वारप्रक्रमायातं प्रत्यध्ययनं यथासम्भवमोघनिष्पन्ने निक्षेपे लाघवार्थं वक्ष्याम इति॥ ततश्च यदुक्तं-"दसकालिय सुअक्खंधं अज्झयणुद्देस मिक्खिविउं" अनुयोगोऽस्य कर्त्तव्य इति, तद्देशतः सम्पादितमिति।

साम्प्रतं प्रस्तुतशास्त्र-समुत्थवक्तव्यताभिधित्सयाह-

नि.[१३] जेण व जं व पडुच्चा जत्तो जावंति जह य ते ठविया।
सो तं च तओ ताणिय तहा य कमसो कहेयव्वं॥

**वृ.** 'येन वा' आचार्येण 'यदा' वस्तु 'प्रतीत्य' अङ्गीकृत्य "यतो वा" आत्मप्रवादादिपूर्वतो 'यावन्ति वा' अध्ययनानि 'यथा च' येन प्रकारेण 'तानि' अध्ययनानि 'स्थापितानि' न्यस्तानि, स च-आचार्यः तच्च वस्तु ततः-तस्मात्पूर्वात् तानि च-अध्ययनानि तथा च-तेनैव प्रकारेण 'क्रमशः' क्रमेणानुपूर्व्या 'कथयितव्यं' प्रतिपादयितव्यमिति गाथासमासार्थः॥ अवय-वार्थ

तु प्रतिद्वारं निर्युक्तिकार एव यथाऽवसरं वक्ष्यति।

तत्राधिकृतशास्त्रकर्तुः स्तवद्वारेणाद्यद्वारावयवार्थप्रतिपादनायाह-

**नि.[१४]** सेज्जंभवं गणधरं जिनपडिमादंसणेन पडिबुद्धं।
मनगपिअरं दसकालियस्स निज्जूहगं वंदे॥

**वृ.** 'सेज्जंभव'मिति नाम 'गणधर' मिति अनुत्तरज्ञानदर्शनादिधर्मगणं धारयतीति गणधरस्तं, 'जिनप्रतिमादर्शनेन प्रतिबद्धं' तत्र रागद्वेषकषायेन्द्रियपरीषहोपसर्गादिजेतृत्वा-ज्जिनस्तस्य प्रतिमा-सद्भावस्थापनारूपा तस्या दर्शनमिति समासः, तेन-हेतुभुतेन, किम्? - 'प्रतिबुद्धं' मिथ्यात्वाज्ञाननिद्रापगमेन सम्यक्त्वविकाशं प्राप्तं 'मनकपितर' मिति मनकाख्याप-त्यजनकं 'दशकालिकसय' प्रागिनरूपिताक्षरार्थस्य 'निर्यूहकं' पूर्वगतोद्धृतार्थजिरचनाकर्त्तारं 'वन्दे' स्तौमि इति गाथाक्षरार्थः॥

भावार्थः कथानकादवसेयः, तच्चेदम्- एत्थ वद्धमानसामिस्स चरमतित्थगरस्स सीसो तित्थसामी सुहम्मो नाम गणधरो आसी, तस्सवि जंबूनामो, तस्सवि य पभवोत्ति, तस्सऽन्नया कयाइ पुव्वरत्तावरत्तंमि चिंता समुप्पन्ना-को मे गणहरो होज्जत्ति ? अप्पणो गणे य संघे य सव्वओ उवओगो कओ, न दीसइ कोई अव्वोच्छित्तिकरो, ताहे गारत्थेसु उवउत्तो, उवओगे कए रायगिहे सेज्जंभवं माहणं जन्नं जयमाणं पासइ, ताहे रायगिहं नगरं आगंतूणं संघाडयं वावारेइ-जन्नवाडगं गंतुं भिक्खट्ठा धम्मलाहेह, तत्थ तुब्भे अदिच्छाविज्जिहिह, ताहे तुब्भे भणिज्जइ- ''अहो कष्टं तत्त्वं न ज्ञायते' इति, तओ गया साहू अदिच्छाविया अ, तेहिं भणिअं- ''अहो कष्टं तत्त्वं न ज्ञायते', तेन य सेज्जंभवेण दारमूलेठिएण तं वयणं सुअं, ताहे सो विचिंतेइ-एए उवसंता तवस्सिणो असच्चं न वयंतित्तिकाउं अज्झावगसगासं गंतुं भणइ-किं तत्तं ?, सो भणइ-वेदाः, ताहे सो असिं कड्डिऊण भणइ-सीसं ते छिंदामि जइ मे तुमं तत्तं न कहेसि, तओ अज्झावओ भणइ-पुण्णो मम समओ, भणियमेयं वेयत्थे-परं सीसेच्छेए कहियव्वंति, संपयं कहयामि जं एत्थ तत्तं, ताहे सो तस्स पाएसु पडिओ, सो य जन्नवाडओवक्खेवो तस्स चेव दिन्नो, ताहे सो गंतूणं ते साहू गवेसमाणो गओ आयरियसगासं, आयरियं वंदित्ता साहुणो(य) भणइ-मम धम्मं कहेह, ताहे आयरिया उवउत्ता-जहा इमो सोत्ति, ताहे आयरिएहिं साहुधम्मो कहिओ, संबुद्धो पव्वइओ सो, चउद्दपुव्वी जाओ।

जया य सो पव्वइओ तया य तस्स गुव्विणी महिला होत्था, तम्मि य पव्वइए लोगो निभक्षओ तंतमस्सति-जहा तरुणाए भत्ता पव्वइओ अपुत्ताए, अवि अत्थि तव किंचि पोट्टेत्ति पुच्छइ, सा भणइ-उवलक्खेमि मनगं, तओ समएण दारगो जाओ। ताहे निव्वत्तबारसाहस्स नियल्लगेहिं जम्हा पुच्छिज्जंतीए मायाए से भणिअं 'मनगं'ति तम्हा मनओ से नामं कयंति। जया सो अट्ठवारिसो जाओ ताहे सो मातरं पुच्छइ-को मम पिआ?, सा भणइ-तव पिआ पव्वइओ, ताहे सो दारओ न ासिऊणं पिउसगासं पट्ठिओ। आयरिया य तं कालं चंपाए विहरंति, सोऽवि अ दारओ चंपयमेवागओ, आयरिएण य सण्णाभूमिं गएण सो दारओ दिट्ठो, दारएण वंदिओ आयरिओ, आयरियस्स य तं दारगं पिच्छंतस्स नेहो जाओ, तस्सवि दारगस्स तहेव, तओ आयरिएहिं पुच्छियं-भो दारगा ! कुतो ते आगमनंति ?, सो दारगो भणइ-रायगिहाओ, आयरिएण भणियंरायगिहे

तुमं कस्स पुत्तो नत्तुओ वा ?, सो भणइ–सेज्जंभवो नाम बंभणो तस्साहं पुत्तो, सो य किर पव्वइओ, तेहिं भणियं–तुमं केन कज्जेण आगओऽसि ?, सो भणइ- अहंपि पव्वइस्सं, पच्छा सो दारओ भणइ–तं तुम्हे जाणह ?, आयरिया भणंति- जाणेमो, तेन भणियं ! -- सो कहिंति ?, ते भणंति--सो मम मित्तो एगसरीरभूतो, पव्वयाहि तुमं मम सगासे, तेन भणियं--एवं करोमि। तओ आयरिया आगंतुं पडिस्सए आलोअंति–सच्चित्तो पडुप्पन्नो, सो पव्वइओ, पच्छा आयरिया उवउत्ता–केवतिकालं एस जीवइत्ति ?, नायं जावं छम्मासा, ताहे आयरियाणं बुद्धी समुप्पन्ना-- इमस्स थोवगं आउं, किं कायव्वंति ? तं चउद्दसपुव्वी कम्हिवि कारणे समुप्पन्ने णिज्जूहति, दसपुव्वी पुन अपिच्छमो अवस्समेव निज्जूहइ, ममंपि इमं कारणं समुप्पन्नं, तो अहमवि निज्जूहामि, ताहे आढत्तो निज्जूहिउं, ते अ निज्जूहिज्जंता वियाले निज्जूढा थोवावसेसे दिवसे, तेन तं दसवेयालियं भनिज्जति" । अनेन च कथाननेन न केवलं 'येन वे' त्यत्सैव द्वारस्य भावार्थोऽभिहित:, किन्तु यद्वा प्रतीत्यैतस्यापीति, तथा चाह निर्युक्तिकार: –

नि.[१५] मनगं पडुच्च सेज्जंभवेन निज्जूहिया दसऽज्झयणा।
वेयालियाइ ठविया तम्हा दसकालियं नामं ॥

वृ. 'मनकं प्रतीत्य' मनकाख्यमपत्यमाश्रित्य 'शय्यम्भवेन' आचार्येण 'निर्यूढानि' पूर्वगतादुद्धृत्य विरचितानि 'दशाध्ययनानि' द्रुमपुष्पिकादीनि 'वेयालियाइ ठविय' त्ति विगत: कालो त्रिकाल: विकलनं वा विकाल इति, विकालोऽसकल: खण्डश्चेत्यनर्थान्तरम्, तस्मिन् विकाले--अपराण्हे 'स्थापितानि' न्यस्तानि द्रुमपुष्पिकादीन्यध्ययनानि यत: तस्माद्दशकालिकं नाम, व्युत्पत्ति: पूर्ववत्, दशवैकालिकं वा, विकालेन निर्वृत्तम्, संशादिपाठश्चातुर्थिकष्ठक तद्धितेष्वचामादे रित्यादिवृद्धेर्वैकालिकं, दशाध्ययननिर्माणं च तद्वैकालिकं च दशवैकालिकमिति गाथार्थ: ॥ एवं येन वा यद्वा प्रतीत्येति व्याख्यातम्, इदानीं यतो निर्व्यूढानीत्येतद् व्याचिख्यासुराह–

नि.[१६] आयप्पवायपुव्वा निज्जूढा होइ धम्मपन्नत्ती।
कम्मप्पवायपुव्वा पिंडस्स उ एसणा तिविहा ॥

नि.[१७] सच्चप्पवायपुव्वा निज्जूढा होइ वक्कसुद्धी उ।
अवसेसा निज्जूढा नवमस्स उ तइयवत्थूओ ॥

नि.[१८] बीओऽवि अ आएसो गणिपिडगाओ दुवालसंगाओ।
एअं किर निज्जूढं मनगस्स अनुग्गहट्ठाए ॥

वृ.-इहात्मप्रवादपूर्वं-यत्रात्मन: संसारिमुक्ताद्यनेकभेदभिन्नस्य प्रवदनमिति, तस्मान्निर्व्यूढा भवति धर्मप्रज्ञप्ति:, षड्जीवनिका इत्यर्थ:, तथा कर्मप्रवादपूर्वात्, किम् ? पिण्डस्य तु एषणा त्रिविधा, निर्व्यूढेतिर्त्तते, कर्मप्रवादपूर्वं नाम–यत्र ज्ञानावरणीयादिकर्मणो निदानादि-प्रवदनमिति तस्मात्, किम् ?–पिण्डस्यैषणा त्रिविधा–गवेषणाग्रहणैषणाग्रासैषणाभेदभिन्ना निर्व्यूढा, सा पुनस्तत्रामुना सम्बन्धेन पतति–आधाकर्मोपभोक्ता ज्ञानावरणीयादिकर्म–प्रकृतीर्बध्नाति, उक्तं च–"आहाकम्मं णं भुंजमाणे समणे अट्ठकम्पपगडीओ बंधइ" इत्यादि, शुद्धपिण्डोपभोक्ता वा शुभाँ बध्नातीत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुम: सत्यप्रवादपूर्वान्निर्व्यूढा भवति वाक्यशुद्धिस्तु, तत्र सत्यप्रवादं नाम–यत्र जनपदसत्यादे: प्रवदनमिति, वाक्यशुद्धिर्नाम सप्तममध्ययनम्,

'अवशेषाणि' प्रथमद्वितीयादीनि निर्व्यूढानि नवमस्यैव प्रत्याख्यानपूर्वस्य तृतीयवस्तुन इति। द्वितीयोऽपि चादेशः 'आदेशो' विध्यन्तरं 'गणिपिटकाद्' आचार्यसर्वस्वाद् 'द्वादशाङ्गाद्' आचारादिलक्षणात् 'इदं' दशकालिकं, किलेति पूर्ववत्, निर्व्यूढमिति च, किमर्थम? - 'मनकस्य' उक्तस्वरूपस्य अनुग्रहार्थमिति गाथात्रयार्थः ॥

एवं यत इति व्याख्यातम्, अधुना यावन्ती-त्येतत्प्रतिपाद्यते -

नि.[१९] दुमपुप्फियाइया खलु दस अज्झयणा सभिक्खुयं जाव।
अहिगारेवि य एत्तो वोच्छं पत्तेयमेक्केक्के ॥

वृ. तत्र द्रुमपुष्पिकेति प्रथमाध्ययननाम, तदादीनि दशाध्ययनानि 'सभिक्खुयं जाव'त्ति सभिक्ष्वध्ययनं यावत्, खलुशब्दो विशेषार्थः, किं विशिनष्टि? तदन्ये द्वे चूडे, यावन्तीति व्याख्यातं। यथा चेत्येतत् पुनरधिकाराभिधानद्वारेणैव च व्याचिख्यासुः सम्बन्धकत्वेनेदं गाथादलमाह - अधिकारानपि चातो वक्ष्ये प्रत्येकमेकैकस्मिन् अध्ययने, तत्रा अध्ययनपरिसमाप्तेर्योऽनुवर्तते सोऽधिकार इति गाथार्थः ॥

नि.[२०] पढमे धम्मपसंसा सो य इहेव जिनसासनम्मित्ति।
बिइए धिइए सक्का काउं जे एस धम्मोत्ति ॥

नि.[२१] तइए आयारकहा उ खुड्डिया आयसंजमोवाओ।
तह जीवसंजमोऽवि य होइ चउत्थंमि अज्झयणे ॥

नि.[२२] भिक्खविसोही तवसंजमस्स गुणकारिया उ पंचमए।
छट्ठे आयारकहा महई जोग्गा महयणस्स ॥

नि.[२३] वयणविभत्ति पुन सत्तमम्मि पणिहाणमट्ठमे भणियं।
नवमे विनओ दसमे समानियं एस भिक्खुत्ति ॥

वृ. प्रथमाध्ययने कोऽर्थाधिकार इत्यत आह- 'धर्मप्रशंसा' दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः तस्य प्रशंसा-स्तवः सकलपुरुषार्थानामेव धर्मः प्रधानमित्येवंरूपा, तथाऽन्यैरप्युक्तम्-

"धनदो धनार्थिनां प्रोक्तः, कामिनां सर्वकामदः।
धर्म एवापवर्गस्य, पारम्पर्येण साधकः ॥"

इत्यादि। स चात्रैव-जिनशासने धर्मो नान्यत्र, इहैव निरवद्यवृत्तिसद्भावाद्, एतच्चोत्तरत्र न्यक्षेण वक्ष्यामः। धर्माभ्युपगमे च सत्यपिमा भूदभिनवप्रव्रजितस्याधृतेः सम्मोह इत्यतस्तन्निराकरणार्थाधिकारवदेव द्वितीयाध्ययनम्, आह च-द्वितीयेऽध्ययनेऽयमर्थाधिकारः-धृत्या हेतुभूतया शक्यते कर्तुम्, 'जे' इति पूरणार्थो निपातः 'एष' जैनो धर्म इति, उक्तं च -

"जस्स धिई तस्स तवो जस्स तवो तस्स सोग्गई सुलहा।
जे अधितिमंत पुरिसा तवोवि खलु दुल्लहो तेसिं ॥"

सा पुनर्धृतिराचारे कार्या न त्वनाचारे इत्यस्तदर्थाधिारवदेवं तृतीयाध्ययनम्, आह च-तृतीयेऽध्ययने कोऽर्थाधिकार इत्यत आह-आचारगोचरा कथा आचारकथा, सा चेहैवानुविस्तरभेदात्, य(अ)त आह- 'क्षुल्लिका' लघ्वी, सा च 'आत्मसंयमोपायः' संयमनं संयमः आत्मनः संयम आत्मसंयमस्तदुपायः, उक्तं च-

"तस्यात्मा संयमो यो हि, सदाचारे रतः सदा।
स एव धृतिमान् धर्मस्तस्यैव च जिनोदितः॥"

इति, स चाचारः षड्जीवनिकायगोचरः प्राय इत्यतश्चतुर्थमध्ययनम्, अथवाऽऽत्मसंयमः - तदन्यजीवपरिज्ञानपरिपालनमेव तत्त्वत इत्यतस्तदर्थाधिकारवदेव चतुर्थमध्ययनम्, आह च- 'तथा जीवसंयमोऽपि च' भवति चतुर्थेऽध्ययनेऽर्थाधिकार इति, अपिशब्दादात्मसंयमोऽपि तद्भावभाव्येव वर्त्तते, उक्तं च-

"छसु जीवनिकाएसुं, जे बुहे संजए सया।
से चेव होइ विन्नेए, परमत्थेण संजए॥"

इत्यादि। एवमेव च धर्म्मः, स च देहे स्वस्थे सति सम्यक् पाल्यते, स चाहारमन्तरेण प्रायः स्वस्थो न भवति, स च सावद्येतरभेद इत्यनवद्यो ग्राह्य इत्यतस्तदर्थाधिकारवदेव पञ्चममध्ययनमिति, आह च- 'भिक्षाविशोधिस्तपः संयमस्य गुणकारिकैव पञ्चमेऽध्ययनेऽर्थाधिकार' इति, तत्र भिक्षणं तस्याः विशोधिः - सावद्यपरिहारेणेतरस्वरूपकथनमित्यर्थः, तपःप्रधानः संयमस्तपः- संयमस्तस्य गुणकारिकैवेयं वर्त्तत इति, उक्तं च-

से संजए समक्खाए, निरवज्जाहार जे विऊ।
धम्मकायट्ठिए सम्मं, सुहजोगाण साहए॥"

इत्यादि। गोचरप्रविष्टेन च सता स्वाचारं पृष्टेन तद्विदापि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्यः, अपि तु आलये, गुरवो वा कथयन्तीति वक्तव्यमतस्तदर्थाधिकारवदेव षष्ठमध्ययनमिति, आह च-षष्ठेऽध्ययनेऽर्थाधिकारः आचारकथा साऽपि महती, न क्षुल्लिका, 'योग्या' उचिता 'महाजनस्य' विशिष्टपरिषद इत्यर्थः, वक्ष्यति च-

"गोअरग्गपविट्ठो उ न निसिएज्ज कत्थई।
कहं च न पबंधिज्जा चिट्ठित्ताण व संजए॥" इत्यादि

आलयगतेनापि तेन गुरुणा (वा) वचनदोषगुणाभिज्ञेन निरवद्यवचसा कथयितव्य इत्यतस्तदर्थाधिकारवदेव सप्तममध्ययनमिति, आह च-"वयणविभत्ती" त्यादि, वचनस्य विभक्तिर्वचनविभक्तिः, विभजनं विभक्तिः-एवंभूतमनवद्यमित्थंभूतं च सावद्यमित्यर्थः, पुनःशब्दः शेषाध्ययनार्थाधिकारेभ्यः अस्याधिकृतार्थाधिकारस्य विशेषणार्थ इति सप्तमेऽध्ययनेऽर्थाधिकार इति,

"सावज्जणवज्जाणं वयणाणं जो न याणइ विसेसं।
वोत्तुं पि तस्स न खमं किमंग पुन देसणं काउं?॥" इत्यादि

तच्च निरवद्यं वचः आचारे प्रणिहितस्य भवति इत्यतस्तदर्थाधिकारवदेवाष्टममध्ययनमिति, आह च-प्रणिधानमष्टमेऽध्ययनेऽर्थाधिकारत्वेन 'भणितम्' उक्तम्, प्रणिधानं नामविशिष्टचेतोधर्म इति, उक्तं च-

"पणिहाणरहियस्सेह, निरवज्जंपि भासियं।
सावज्जतुल्लं विन्नेयं, अज्झत्थेणेह संवुडं॥" इत्यादि

आचारप्रणिहितश्च यथोचितविनयसम्पन्न एव भवतीत्यतस्तदर्थाधिकारवदेव नवममध्ययनमिति, आह च-'नवमेऽध्ययनेन विनयोऽर्थाधिकारः' इति, उक्तं च-

"आयारपणिहाणंमि, से सम्मं वट्टई बुहे।
नाणादीनं विनीए जे, मोक्खट्ठा निव्विगिच्छए।।" इत्यादि

एतेषु एव नवस्वध्ययनार्थेषु यो व्यवस्थितः स सम्यग् भिक्षुरित्यनेन सम्बन्धेन सभिक्ष्वध्ययनमिति, आह च -'दशमेऽध्ययने समाप्तिं नीतमिदं साधुक्रियाभिधायकं शास्त्रम्' एतत्क्रियासमन्वित एव भिक्षुर्भवत्यत आह-एष भिक्षुरिति गाथा चतुष्टयार्थः ॥ स एवंगुणयुक्तोऽपि भिक्षुः कदाचित् कर्मपरतन्त्रत्वात्कर्मणश्च बलत्वा(वत्त्वा)त्सीदेत् ततस्तस्य स्थिरीकरणं कर्त्तव्यमतस्तदर्थाधिकारवदेव चूडाद्वयमित्याह-

नि.[२४] दो अज्झयणा चूलिय विसीययंते थिरीकरणमेगं।
बिइए विवित्तचरिया असीयणगुणाइरेगफला।।

वृ. द्वे अध्ययने, किम् ?-'चूडा' चूडेव चूडा, तत्र प्रमादवशाद्विषीदति सति साधौ संयमे स्थिरीकरणाम् 'एकं' प्रथमं स्थिरीकरणफलमित्यर्थः, तथा च तत्रावधावनप्रेक्षिणः साधोः दुष्प्रजीवित्वनरकपातादयो दोषा वर्ण्यन्त इति। तथा च द्वितीयेऽध्ययने विविक्तचर्या वर्ण्यते, किंभूता ?-'असीदनगुणातिरेकफला' तत्र 'विविक्तचर्या' एकान्तचर्या-द्रव्यक्षेत्रकालभावेष्व-सम्बद्धता, उपलक्षणं चैषाऽनियतचर्यादीनामिति, असीदनगुणातिरेकः फलं यस्याः सा तथाविधेति गाथार्थः ॥

नि.[२५] दसकालिअस्स एसो पिंडत्थो वण्णिओ समासेनं।
एत्तो एक्केक्कं पुन अज्झयणं कित्तइस्सामि।।

वृ. 'दशकालिकस्य' प्रागिनरूपतिशब्दार्थस्य 'एषः' अनन्तरोदितः 'पिण्डार्थः' सामान्यार्थो 'वर्णितः' प्रतिपादितः 'समासेन' संक्षेपेण, अतः ऊर्ध्वं पुनरेकैकमध्ययनं 'कीर्ति-यिष्यामि' प्रतिपादयिष्यामीति, पुनः-शब्दस्य व्यवहित उपन्यास इति गाथार्थः ॥ तत्र प्रथमाध्ययनं द्रुमपुष्पिका, अस्य च चत्वार्यनुयोगद्वाराणि भवन्ति, तद्यथा-उपक्रमो निक्षेपोऽनुगमो नयः, एषां चतुर्णामप्यनुयोगद्वाराणामध्ययनादावुपन्यासः तथेत्थं च क्रमोपन्यासे प्रयोजनमावश्यक-विशेषविवरणादवसेयं स्वरूपं च प्रायश इति। प्रकृताध्ययनस्य च शास्त्रीयोपक्रमे आनुपूर्व्यादि-भेदेषु स्वबुद्धयाऽवतारः कार्यः, अर्थाधिकारश्च वक्तव्यः, तथा चाह निर्युक्तिकारः-

## अध्ययनं -१ द्रुमपुष्पिका

नि.[२६] पढमज्झयणं दुमपुप्फियंति चत्तारि तस्स दाराइं।
वण्णेउवक्कमाई धम्मपसंसाइ अहिगारो।।

वृ. प्रथमाध्ययनं द्रुमपुष्पिकेति, अस्य नामनिष्पन्ननिक्षेपावसर एव शब्दार्थं वक्ष्यामः, चत्वारि तस्य 'द्वाराणि' अनुयोगद्वाराणि, किम् ?-वर्णयित्वोपक्रमादीनीति, किम् ? - धर्मप्रशंस-याऽधिकारो वाच्य इति गाथार्थः ॥ तथा निक्षेपः, स च त्रिविधः, तद्यथा-ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्चेति, तत्रौघः- सामान्यं श्रुताभिधानम्, तथा चाह निर्युक्तिकारः-

नि.[२७] ओहो जं सामन्नं सुआभिहाणं चउव्विहं तं च।
अज्झयणं अज्झीणं आय ज्झवणा य पत्तेअं।।

वृ. ओघो यत्सामान्यं 'श्रुताभिधानं' श्रुतनाम चतुर्विधं तच्च, कथम्? अध्ययन-मक्षीणमायः क्षपणा च इदं च 'प्रत्येकं' पृथक् पृथक्॥ किम्?

नि.[२८] नामाइ चउब्भेयं वण्णेऊणं सुआनुसारेणं।
दुमपुप्फिअ आओज्जा चउसुंपि कमेण भावेसुं॥

वृ. नामादिचतुर्भेदं वर्णयित्वा, तद्यथा-नामाध्ययनं स्थापनाध्ययनं द्रव्याध्ययनं भावा-ध्ययनं चेति, एवमक्षीणादीनामपि न्यासः कर्तव्यः, 'श्रुतानुसारेण' अनुयोगद्वाराख्यसूत्रानुसारेण, किम्?-'द्रुमपुष्पिका आयोज्या' प्रकृताध्ययनं सम्बन्धनीयम्, चतुर्ष्वप्यध्ययनादिषु क्रमेण भावेष्विति गाथार्थः॥ साम्प्रतं भावाध्ययनादिशब्दार्थं प्रतिपादयन्नाह-

नि.[२९] अज्झप्पस्साणयणं कम्माणं अवचओ उवचिआणं।
अनुवचओ अ नवाणं तम्हा अज्झयणमिच्छंति॥

नि.[३०] अहिगम्मंति व अत्था इमेण अहिगं च नयनमिच्छंति।
अहिगं च साहु गच्छइ तम्हा अज्झयणमिच्छंति॥

नि.[३१] जह दीवा दीवसयं पइप्पई सो अ दिप्पई दीवो।
दीवसमा आयरिआ दिप्पंति परं च दीवेंति॥

नि.[३२] नाणस्स दंसणस्सऽवि चरणस्स य जेन आगमो होई।
सो होइ भावआओ आओ लाहो त्ति निद्दिट्ठो॥

नि.[३३] अट्ठविहं कम्मरयं पोराणं जं खवेइ जोगेहिं।
एयं भावज्झयणं नेअव्वं आनुपुव्वीए॥

वृ. आसां गमनिका-इह प्राकृतशैल्या छान्दसत्वाच्च अज्झप्पस्साणयणं पकारस(स्स)कार आकारणकारलोपे अज्झयणं ति भण्णइ, तच्च संस्कृतेऽध्ययनम्, भावार्थस्त्वयं-अधि आत्मनि वर्तत इति निरुक्तादध्यात्मं चेतः तस्यानयनम् आनीयतेऽनेनेत्यानयनम्, इह कर्म-मलरहितः खल्वात्मैव चेतःशब्देन गृह्यते, यथाऽवस्थितस्य शुद्धस्य चेतस आनयनमित्यर्थः, तथा चैतदभ्यासाद्भवत्येव, किम्? - 'कर्मणां' ज्ञानावरणीयादीनाम् 'अपचयो' ह्रासः, किंवि-शिष्टानाम्?-'उपचितानां' मिथ्यात्वादिभिरुपदिग्धानां बद्धानामितिभावः, तथा 'अनुपचयश्च' अवृद्धिलक्षणः 'नवानां' प्रत्यग्राणांकर्मणाम्, यतश्चैवं तस्मात् प्राकृतशैल्याऽध्यात्मानयनमेता-ध्ययनमिच्छन्त्याचार्या इति गाथार्थः॥

'अधिगम्यन्ते' परिच्छिद्यन्ते वा अर्था अनेनेत्यधिगममेव प्राकृतशैल्या तथाविधार्थप्रदर्श-कत्वाच्चास्य वचसोऽध्ययनमिति, तथा अधिकं च नयनमिच्छन्त्यस्याप्य(पि तथाविधा)-र्थप्रदर्शकत्वादेव वचसोऽयमर्थः, 'अय वय' इत्यादिदण्डकधातुपाठान्नीतिर्नयनम्, भावे ल्युट्प्रत्ययः परिच्छेद इत्यर्थः, अधिकं नयनमधिकनयनं चार्थतोऽध्ययनमिच्छन्ति, चशब्दस्य च व्यवहित उपन्यासः, अधिकं च साधुर्गच्छति, किमुक्तं भवति?-अनेन करणभूतेन साधुर्बोध-संयममोक्षान् प्रत्यधिकं गच्छति, यस्मादेवं तस्मादध्ययनमिच्छन्ति, इह च सर्वत्र अधिकं नयन-मध्ययनमित्येवं योजना कार्येति गाथार्थः॥

27/2

इदानीमक्षीणम- तच्च भावाक्षीणमिदमेव, शिष्यप्रदानेऽप्यक्षयत्वात्, तथा चाह- यथा दीपाद्दीपशतं प्रदीप्यते, स च दीप्यते दीपः, एवं 'दीपसमा' दीपतुल्या आचार्या दीप्यन्ते स्वतो विमलमत्याद्युपयोगयुक्तत्वात् 'परं च' विनेयं 'दीपयन्ति' प्रकाशयन्त्युज्जवलं वा कुर्वन्तीति गाथार्थः ॥इदानीमायः - स च भावत इदमेव, यत आह- 'ज्ञानस्य' मत्यादेः 'दर्शनस्य' चौपशमिकादेः 'चरणस्य च' सामायिकादेः 'येन' हेतुभूतेन 'आगमो भवति' प्राप्तिर्भवति स भवति भावायः, आयो लाभ इति निर्दिष्टः, अध्ययनेन च हेतुभूतेन ज्ञानाद्यागमो भवतीति गाथार्थः ॥

अधुना क्षपणा, साऽपि भावत इदमेवेति, आह च- 'अष्टविधम्' अष्टप्रकारं कर्मरजः तत्र जीवगुण्डनपरत्वात्कर्मैव रजः कर्मरजः 'पुराणं' प्रागुपात्तं 'यत्' यस्मात्क्षपयति 'योगी:' अन्तः-करणादिभिरध्ययनं कुर्वन्, तस्मादिदमेव कारणे कार्योपचारात् क्षपणेति । तथा चाह- इदं भावाध्ययनं 'नेतव्यं' योजनीयम् 'आनुपूर्व्या' परिपाट्या अध्ययनाक्षीणादिष्विति गाथार्थः ॥

उक्त ओघनिष्पन्नो निक्षेपः, साम्प्रतं नामनिष्पन्न उच्यते- तत्रौघनिष्पन्नेऽध्ययनं नामनिष्पन्ने द्रुमपुष्पिकेति, आह- द्रुम इति कः शब्दार्थः ?, उच्यते, "द्रु द्रु गतौ" इत्यस्य द्रुस्मिन् देशे विद्यत इति तदस्यास्त्यस्मिन्निति मतुपि प्राप्ते "द्रुद्रुभ्यां मः" इति मप्रत्ययान्तस्य द्रुम इति भवति । साम्प्रतं द्रुमपुष्पनिक्षेपप्ररूपणायाह-

नि.[३४] नामदुमो ठवणदुमो दव्वदुमो चेव होइ भावदुमो ।
एमेव य पुप्फस्स वि चउव्विहो होइ निक्खेवो ॥

वृ. 'नामद्रुमो' यस्य द्रुम इति नाम द्रुमाभिधानं वा, स्थापनाद्रुमो द्रुम इति स्थापना, 'द्रव्यद्रुमश्चैव भवति भावद्रुमः' तत्र द्रव्यद्रुमो द्विधा- आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुप-युक्तः, नोआगमतस्तु ज्ञशरीर भव्यशरीरोभयव्यतिरिक्तस्त्रिविधः, तद्यथा- एकभविको बद्धा-युष्कोऽकस्तु येन द्रुमनामगोत्रे कर्मणी बद्धे इति, अभिमुखनामगोत्रस्तु येन ते नामगोत्रे कर्मणी उदीरणावलिकायां प्रक्षिप्ते इति, अयं च त्रिविधोऽपि भाविभावद्रुमकारणत्वाद्द्रव्यद्रुम इति, भाव-द्रुमोऽपि द्विविधः- आगमतो नोआगमतश्च, तत्रागमतो ज्ञातोपयुक्तः, नोआगमतस्तु द्रुम एव द्रुमनामगोत्रे कर्मणी वेदयन्निति । 'एवमेव च' यथा द्रुमस्य तथा किम् ?- 'पुष्पस्यापि' वस्तुतस्त-द्विकारभूतस्य चतुर्विधो भवति निक्षेप इति गाथार्थः ॥ साम्प्रतं नानादेशजविनेयगणासम्मोहार्थमागमे द्रुमपर्यायशब्दान् प्रतिपादयन्नाह-

नि.[३५] दुमा पायवा रुक्खा, अगमा विडिमा तरू ।
कुहा महीरुहा वच्छा, रोवगा रुंजगावि अ ॥

वृ. द्रुमाश्च पादपा वृक्षा अगमा विटपिनः तरवः कुहा महीरुहा वच्छा रोपका रुञ्जकाद-यश्च । तत्र द्रुमान्वर्थसंज्ञा पूर्ववत्, पद्भ्यां पिबन्तीति पादपा इत्येवमन्येषापि यथासम्भवमन्वर्थ-संज्ञा वक्तव्या, रूढिदेशीशब्दा वा एत इति गाथार्थः ॥ इदानीं पुष्पैकार्थिकप्रतिपादनायाह-

नि.[३६] पुप्फाणी अ कुसुमाणि अ फुल्लाणि तहेव होंति पसवाणी ।
सुमणाणि अ सुहुमाणि अ पुप्फाणं होंति एगट्ठा ॥

वृ. पुष्पाणि कुसुमानि चैव फुल्लानि प्रसवानि च सुमनांसि चैव 'सूक्ष्माणि' सूक्ष्मकायिकानि चेति ॥ साम्प्रतमेकवाक्यतया द्रुमपुष्पिकाध्ययनशब्दार्थ उच्यते- द्रुमस्य पुष्पं द्रुमपुष्पम्, अवयव-

लक्षणः षष्ठीसमासः, द्रुमपुष्पशब्दस्य "प्रागिवात्कः" इति वर्त्तमाने अज्ञाते कुत्सिते (के) संज्ञायां कनिति कनि प्रत्यये नकारलोपे च कृते द्रुमपुष्पक इति, प्रातिपदि[illegible] "अजाद्यतष्टाप्" इति टाप्प्रत्यये ऽनुबन्धलोपे च कृते "प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः इतीत्त्वे कृते "अकः सवर्णे दीर्घः" इति दीर्घत्त्वे परगमने च द्रुमपुष्पिकेति भवति, द्रुमपुष्पोदाहरणयुक्ता द्रुमपुष्पिकेति, द्रुमपुष्पिका चासौ अध्ययनं चेति समानाधिकरणस्तत्पुरुषः, द्रुमपुष्पिकाध्ययनमिति ॥ अस्य चैकाधिकानि प्रतिपादयन्नाह-

नि.[३७] दुमपुप्फिआ य आहारएसणा गोअरे तया उंछो।
मेस जलूगा सप्पे वणऽक्खइसुगोलपत्तुदए।

वृ. तत्र द्रुमपुष्पोदाहरणयुक्ता द्रुमपुष्पिकेति, वक्ष्यति च-"जहा दुमस्स पुप्फेसु" इत्यादि, तथा आहारस्यैषणा आहारैषणा, एषणाग्रहणाद् गवेषणादिग्रहः, ततश्च तदर्थसूचकत्वादाहारैषणेति, तथा गोचरः सामयिकत्वाद् गोरिव चरणं गोचरोऽन्यथा गोचारः, तदर्थसूचकत्वाच्चाधिकृताध्ययनविशेषो गोचर इति, एवं सर्वत्र भावना कार्येति, भावार्थस्तु यथा गौश्चरत्येवमविशेषेण साधुनाऽप्यटितव्यं, न विभवमङ्गीकृत्योत्तमाधममध्यमेषु कुलेष्विति, वणिग्वत्सकदृष्टान्तेन वेति, तथा 'त्वगिति' त्वगिवासारं भोक्तव्यमित्यर्थसूचकत्वात् त्वगुच्यत इति, उक्तं च परममुनिभिः-"जहा चत्तारि घुणा पन्नत्ता, तंजहा-तयक्खाए छल्लिक्खाए कट्ठक्खाए सारक्खाए, एवामेव चत्तारि भिक्खुगा पन्नत्ता, तंजहा-तयक्खाए छल्लिक्खाए कट्ठक्खाए सारक्खाए, तयक्खाए नामं एगे नो सारक्खाए सारक्खाए णामं एगे नो तयक्खाए एगे तयक्खाए वि सारक्खाए वि एगे नो तयक्खाए नो सारक्खाए। तयक्खायसमाणस्स णं भिक्खुस्स सारक्खायसमाणे तवे भवई, एवं जहा ठाणे तहेव दट्ठव्वं"। भावार्थस्तु भावतस्त्वक्कल्पासारभोक्तव्यसूचकत्वादिति, तथा 'मेष' इति तथा मेषोऽल्पेऽप्यम्भसि अनुद्घालयन्नेवाम्भः पिबति, एवं साधुनाऽपि भिक्षाप्रविष्टेन बीजाक्रमणादिष्वनाकुलेन भिक्षा ग्राह्येत्येवंविधार्थसूचकत्वादधिकृताभिधानप्रवृत्तिरिति, तथा 'जलौका' इति अनेषणाप्रवृत्तदायकस्य मृदुभावनिवारणार्थसूचकत्वादिति, तथा 'सर्प' इति यथाऽसावेकदृष्टिर्भवत्येवं गोचरगतेन संयमैकदृष्टिना भवितव्यमित्यर्थसूचकत्वादिति, अथवा-यथा द्रागस्पृशन् सर्पो बिलं प्रविशत्येवं साधुनाऽप्यनास्वादयता भोक्तव्यमिति, तथा 'व्रण' इत्यरक्तद्विष्टेन व्रणलेपदानवद् भोक्तव्यम्, तथा 'अक्ष' इत्यक्षोपाङ्गदानवच्चेति, उक्तं च -

"व्रणलेपाक्षोपाङ्गवदसङ्गयोगभरमात्रयात्रार्थम्।
पन्नग इवाभ्यवहरेदाहारं पुत्रपलवच्च ॥"

इत्यादि, तथा 'इसु' त्ति तत्र 'इषुः' शरो भण्यते, तत्र सूचनात्सूत्रमिति कृत्वा

"जह रहिओऽनुवउत्तो इसुणा लक्खं न विंधइ तहेव।
साहू गोअरपत्तो संजमलक्खम्मि नायव्वो ॥"

गोल इति-

"जह जउगोलो अगणिस्स नाइदूरे न आवि आसन्ने।
सक्कइ काऊण तहा संजमगोलो गिहत्थाणं ॥
दूरे अनेसणाऽदंसणाइ इयरम्मि तेनसंकाइ।

तम्हामियभूमीए चिट्टिज्जा गोयरग्गओ ॥''

पुत्र' इति पुत्रमांसोपमया भोक्तव्यम्, सुसमाहृष्टान्तोऽत्र वक्तव्यः। 'उदक'मिति पूत्युदकोपमानतः खल्वन्नपानमुपभोक्तव्यमिति, अत्रोदाहरणमजहा एगेणं वाणियएणं दारिद्दुक्खाभिभूएणं कहंवि हिंडतेणं रयणदीवं पाविता तेलुक्कसुंदरा अनग्धेया रयणा समासादिआ, सो अ ते चोरकुलदीहद्धाणभएण ण सक्कइ नित्थारिऊणामुवओगभूमिमाणेडं, तओ सो बुद्धिकोसल्लेणतानि एगम्मि पएसे ठवेऊण अन्ने जरपाहाणे घेत्तुं पट्टिओ गहिल्लगवेसेणं ''रयणवाणिओ गच्छत्ति'' - भावितेण तिन्नि वारे, जाहे कोई न उट्ठइ ताहे घेत्तूण पलाओ, अडवीए तिव्वतिसाए गहिओ जाव कुहियपाणिअं छिल्लरं विनट्ठं पासइ, तत्थवि बहवे हरिणादयो मआ, तेन तं सव्वं उदगं वसा जायं, ताहे तं तेन अनुस्सासियाएअनासायंतेन पीअं, नित्थारियाणि यऽनेन रयणाणि। एवं रयणत्थाणगाणि णाणदंसणचरित्ताणि चोरत्थाणिआ विसया कुहिओदगत्थाणि - आणि फासुगेसणिज्जाणि अंतपंताणि आहाराइयाणि आहारंतेन।

ताहे तब्बलेण जहा वाणियगो इह भवे सुही जाओ, एवं साहू वि सुही भविस्सइत्ति। अडवित्थाणीअं संसारं नित्थरइत्ति। एवमेतान्यर्थैकार्थिकानि, अर्थाधिकारा एवान्ये इति गाथार्थः।

उक्तो नामनिष्पन्नः, साम्प्रतं सूत्रालापकनिष्पन्नस्यावसरः, स च प्राप्तलक्षणोऽपि न निक्षिप्यते, कस्मात् कारणात् ?, यस्मादस्ति इह तृतीयमनुयोगद्वारमनुगमाख्यामः। अत्र चाक्षेपपरिहारावावश्यकविशेषविवरणादवसेयौ, साम्प्रतमनुगमः, स च द्विधा-सूत्रानुगमो निर्युक्तनुगमश्च, तत्र निर्युक्त्यनुगमास्त्रिविधः, तद्यथा-निक्षेपनिर्युक्त्यनुगमः उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शकनिर्युक्त्यनुगमश्चेति, तत्र निक्षेपनिर्युक्त्यनुगमो गतः, य एषोऽध्ययनादिनिक्षेप इति, उपोद्घातनिर्युक्त्यनुगमस्तु द्वारगाथाद्वायादवसेयः, तच्चेदम् -

उद्देसे निद्देसे य निग्गमे खित्तकालपुरिसे य।
कारण पच्चय लक्खण नए समोयारणाऽनुमए ॥१॥
किं कइविहं कस्स कहिं केसु कहं केच्चिरं हवइ कालं।
कइसंतरमविरहियं भवागरिस फासण निरुत्ती ॥२॥''

अस्य च द्वारगाथाद्वयस्य समुदायार्थोऽवयवार्थश्चावश्यकविशेषविवरणादेवावसेय इति। प्रकृत-योजना पुनस्तीर्थकरोपोद्घातमभिधायार्यसुधर्मस्य च तत्प्रवचनस्य पश्चाज्जम्बूनाम्नस्ततः प्रभवस्य ततोऽप्यार्यशय्यम्भवस्य पुनयर्था तेनेदं निर्व्यूढमिति तथा कथनेन कार्या इति। आह च-''जेन व जं व पडुच्चे'' त्यादिना यत्पूर्वमुक्तं तदत्रैव क्रमप्राप्ताभिधानत्वात् तत्रायुक्तमिति, न, अपान्तरालोपोद्घातप्रतिपादकत्वेन तत्राप्युपयोगित्वादिति, आह-एवमपि महासम्बन्धपूर्वकत्वादपान्तरालोपोद्घातस्यात्रैवाभिधानं न्यायय्यमिति, न, प्रस्तुतशास्त्रान्तरङ्गत्वेन तत्राप्युपयोगित्वादिति कृतं प्रसङ्गेन, अक्षरगमनिकामात्रफलत्वात्प्रयासस्य। गत उपोद्घातनिर्युक्त्यनुगमः, साम्प्रतं सूत्रस्पर्शिकनिर्युक्त्यनुगमावसरः, स च सूत्रे सति भवति, आह-यद्येवमिहोपन्यासोऽनर्थकः, न, निर्युक्तिसामान्यादिति, सूत्रं च सूत्रानुगमे, च चावसरप्राप्त एव, इह चास्खलितादिप्रकारं शुद्धं सूत्रमुच्चारणीयम्, तद्यथा-अस्खलितममिलिमव्यत्याम्रेडितमित्यादि यथाऽनुयोगद्वारेषु, ततस्तस्मिन्नुच्चरिते सति केषाञ्चिद् भगवतां साधूनां केचनार्थाधिकारा अधिगता भवन्ति,

केचन त्वनधिगताः, तत्रानधिगताधिगमायाल्पमतिविनेयानुग्रहाय च प्रतिपदं व्याख्येयम्। व्याख्यालक्षणं चेदम्-

संहिता च पदं चैव, पदार्थः पदविग्रहः।
चालनाप्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा॥

इत्यलं प्रसङ्गेन, प्रकृतं प्रस्तुमः। किं च प्रकृतम्?, सूत्रानुगमे सूत्रमुच्चारणीयमिति, तच्चेदं

मू. (१) धम्मो मंगलमुक्किट्ठं, अहिंसा संजमो तवो।
*देवावि तं नमंसंति, जस्स धम्मे सया मणो॥*

**वृ.** तत्रास्खलितपदोच्चारणं संहिता, सा पाठसिद्धैव। अधुना पदानि-धर्मः मङ्गलम् उत्कृष्टम् अहिंसा संयमः तपः देवाः अपि तं नमस्यन्ति यस्य धर्मे सदा मनः। तत्र ''धृञ् धारणे'' इत्यस्य धातोर्मप्रत्ययान्तस्येदं रूपं धर्म इति। मङ्गलरूपं पूर्ववत्। तथा ''कृष् विलेखने'' इत्यस्य धातोरुत्पूर्वस्य निष्ठान्तसयेदं रूपमृत्कृष्टमिति। तथा 'तृहि हिंसि हिंसायाम्'' इत्यस्य ''इदितो नुम् धातोः'' इति नुमि कृते स्त्र्यधिकारे टाबन्तस्य नञ्पूर्वस्येदं रूपं यदुताहिंसेति। तथा ''यमु उपरमे'' इत्यसय धातोः संपूर्वस्याप्प्रत्यान्तस्य संयम इति रूपं भवति। तथा ''तप सन्तापे'' इत्यस्य धातोरसुन्प्रत्ययान्तस्य तप इति। तथा ''दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिस्वप्न-कान्तिगतिषु'' इत्यस्य धातोरच्प्रत्ययान्तस्य जसि देवा इति भवति। अपिशब्दो निपातः। तदित्येतस्य सर्वनाम्नः पुंस्त्वविवक्षायां द्वितीयैकवचनं तमिति भवति। तथा नमसित्यस्य प्रातिपदिकस्य ''नमोवरिवश्चित्रङः क्यच्'' इति क्यजन्तस्य लट्क्रियान्तादेशस्ततश्च नमस्यन्तीति भवति। तथा यदितिसर्वनाम्नः षष्ठ्यन्तस्य यस्येति भवति। धर्मः पूर्ववत्। सदेति सर्वस्मिन् काले दा'' इति दाप्रत्ययः ''सर्वस्य सोऽन्यतरस्यां दि'' इति स आदेशः सदा। तथा ''मन ज्ञाने'' इत्यस्य धातोरसुन्प्रत्ययान्तस्यमन इति भवति। इतिपदानि।

साम्प्रतं पदार्थ उच्यते-तत्र दुर्गतौ प्रपतन्तमात्मानं धारयतीति धर्मः, तथा चोक्तम्-

''दुर्गतिप्रसृतान् जीवान्, यस्माद्धारयते ततः।
धत्ते चैतान् शुभे स्थाने, तस्माद् धर्म इति स्मृतः॥''

मङ्ग्यते हितमनेनेति मङ्गलमित्यादि पूर्ववत्, 'उत्कृष्टं' प्रधानम्, न हिंसा प्राणातिपातविरति-रित्यर्थः, 'संयमः' आश्रवद्वारोपरमः, तापयत्यनेकभवोपात्तमष्टप्रकारं कर्मेति तपः-अनशनादि, दीव्यन्तीतिदेवाः क्रीडन्तीत्यादि भावार्थः, अपि सम्भावने देवा अपि मनुष्यास्तु सुतरां, 'त' मित्येवंविशिष्टं जीवं, नमस्यन्तीति प्रकट्यर्थम्, यस्य जीवस्य किम्? - 'धर्मे' प्रागभिहितस्वरूपे 'सदा' सर्वकालं 'मन' इत्यन्तःकरणम्। अयं पदार्थ इति। पदविग्रहस्तु परस्परापेक्षसमासभाक्-पदपूर्वकत्वेनेह निबन्धनाभावान्न प्रदर्शित इति। चालनाप्रत्यवस्थाने तु प्रमाणचिन्तायां यथा-वसरमुपरिष्टाद् वक्ष्यामः। प्रवृत्तिः पुनस्तयोरमुनोपायेनेति प्रदर्शनायाह-

नि. [३८] कत्थइ पुच्छइ सीसो कहिंचऽपुट्ठा कहंति आयरिया।
सीसाणं तु हियट्ठा विपुलतरागं तु पुच्छाए॥

**वृ.** क्वचित्किञ्चिदनवगच्छन् पृच्छति शिष्यः कथमेतदिति इयमेव चालना, गुरुकथनं प्रत्यवस्थानम्, इत्थमनयोः प्रवृत्तिः। तथा क्वचिदपृष्टा एव सन्तः पूर्वपक्षमाशङ्क्य किञ्चि-

त्कथयन्त्याचार्याः, तत्प्रत्यवस्थानमिति गम्यते, किमर्थं कथयन्त्यत आह-शिष्याणामेव हितार्थम्, तुशब्द एवकारार्थः, तथा 'विपुलतरं तु' प्रभुततरं तु कथयन्ति 'पुच्छाए' त्ति शिष्यप्रश्ने सति, पटुप्रज्ञोऽयमित्यवगमादिति गाथार्थः ॥

एवं तावत्समासेन, व्याख्यालक्षणयोजना ।
कृतेयं प्रस्तुते सूत्रे, कार्यैवमपरेष्वपि ॥१॥
ग्रन्थविस्तरदोषान्न, वक्ष्याम उपयोगि तु ।
वक्ष्यामः प्रतिसूत्रं तु, यत् सूत्रस्पर्शिकाऽधुना ॥२॥
प्रोच्यतेऽनुगमनिर्युक्तिविभागश्च विशेषतः ।
सामायिकबृहद्भाष्याज्ज्ञेयस्तत्रोदितं यतः ॥३॥
''होइ कयत्थो वोत्तुं सपयच्छेअं सुअं सुआनुगमो ।
सुत्तालावगनासो नामादिन्नासविनिओगं ॥१॥
सुत्तप्फासिअनिज्जुत्तिनिओगो सेसओ पयत्थाइ ।
पायं सोच्चियनेगमनयाइमयगोअरो होइ ॥२॥
एवं सुत्ताणुगमो सुत्तालावगकओ अ निक्खेवो ।
सुत्तप्फासिअनिज्जुत्ति नया अ समगं तु वच्चन्ति ॥३॥

इत्यलं प्रसङ्गेन, गमनिकामात्रमेतत्। तत्र धर्मपदमाधिकृत्य सूत्रस्पर्शिकनिर्युक्तिप्रदिपादन-

नि.[३९] नामंठवणाधम्मो दव्वधम्मो अ भावधम्मो अ ।
एएसिं नाणत्तं वुच्छामि अहाणुपुव्वीए ॥

वृ. 'नामंठवणाधम्मो' त्ति अत्र धर्मशब्दः प्रत्येकमभिसम्बध्यते, नामधर्मः स्थापनाधर्मो द्रव्यधर्मो भावधर्मश्च । एतेषां 'नानात्वं' भेदं 'वक्ष्ये' अभिधास्ये 'यथानुपूर्व्या' यथानुपरिपाट्येति गाथार्थः ॥ साम्प्रतं नामस्थापने क्षुण्णत्वादागमतो नोआगमतश्च ज्ञात्रनुपयुक्तज्ञशरीरेतरभेदांश्चानाहत्य ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यधर्माद्यभिधित्सयाऽऽह-

नि.[४०] दव्वं च अत्थिकायप्पयारधम्मो अ भावधम्मो अ ।
दव्वस्स पज्जवा जे ते धम्मा तस्स दव्वस्स ॥

वृ. इह त्रिविधोऽधिकृतो धर्मः, तद्यथा-द्रव्यधर्मः अस्तिकायधर्मः प्रचारधर्मश्चेति। तत्र द्रव्यं चेत्यनेन धर्मधर्मिणोः कथञ्चिदभेदाद् द्रव्यधर्ममाह, तथास्तिकाय इत्यनेन तु सूचनात् सूत्रमितिकृत्वा उपलक्षणत्वादवयव एव समुदायशब्दोपचारादस्तिकायधर्म इति, प्रचारधर्म-श्चेत्यनेन ग्रन्थेन द्रव्यधर्मदेशमाह । भावधर्मश्चेत्यनेन तु भावधर्मस्य स्वरूपमाह ॥ साम्प्रतं प्रथमोद्दिष्टद्रव्यधर्मस्वरूपाभिधित्सयाऽऽह-द्रव्यस्य पर्याया-ये उत्पादविगमादयस्ते धर्मास्तस्य द्रव्यस्य, ततश्च द्रव्यस्य धर्मा द्रव्यधर्मा इत्यन्यासंसक्तैकद्रव्यधर्माभावप्रदर्शनार्थो बहुवचननिर्देश इति गाथार्थः ॥ इदानीमस्तिकायादिधर्मस्वरूपप्रतिपिपादयिषयाऽऽह-

नि.[४१] धम्मत्थिकायधम्मो पयारधम्मो य विसयधम्मो य ।
लोइयकुप्पावयणिअ लोगुत्तर लोगऽणेगविहो ॥

वृ. धर्मग्रहणाद् धर्मास्तिकायपरिग्रहः, ततश्च धर्मास्तिकाय एव गत्युपष्टम्भकोऽसंख्येय-

प्रदेशात्मकः अस्तिकायधर्म इति। अन्ये तु व्याचक्षते-धर्मास्तिकायादि-स्वभावोऽस्तिकायधर्म इति, एतच्चायुक्तम्, तत्र धर्म्मास्तिकायादीनां द्रव्यत्वेन तस्य द्रव्यधर्मा-व्यतिरेकादिति। तथा प्रचारधर्मश्च विषयधर्म एव, तुशब्दस्यैवकारार्थत्वात्, तत्र प्रचरणं प्रचारः, प्रकर्षगमनमित्यर्थ, स एवात्मस्वभावत्वाद्धर्मः प्रचारधर्मः, स च किम् ? - विषीदन्त्येतेषु प्राणिन इति विषया-रूपादयस्तद्धर्म एव, तथा च वस्तुतो विषयधर्म एवायं यद्रागादिमान् सत्त्वस्तेषु प्रवर्तत इति, चक्षुरादीन्द्रियवशतो रूपादिषु प्रवृत्तिः प्रचारधर्म इति हृदयम्, प्रधानसंसारनिबन्ध-नत्वेन चास्य प्राधान्यख्यापनार्थं द्रव्यधर्मात् पृथगुपन्यासः। इदानीं भावधर्मः, स च लौकिका-दिभेदर्भिन्न इति, आह च-लौकिकः कुप्रावचनिकः लोकोत्तरस्तु, अत्र 'लोगोऽणेगविहो' त्ति लौकि-कोऽनेकविध इति गाथार्थः ॥ तदेवानेकविधत्वमुपदर्शयन्नाह-

नि. [४२] गम्मपसुदेसरज्जे पुरवरगामगणगोट्ठिराईणं।
सावज्जो उ कुतित्थियधम्मो न जिनेहि उ पसत्थो ॥

वृ. तत्र गम्यधर्मो-यथा दक्षिणापथे मातुलदुहिता गम्या उत्तरापथे पुनरगम्यैव, एवं भक्ष्या-भक्ष्यपेयापेयविभाषा कर्त्तव्येती, पशुधर्मो-मात्रादिगमनलक्षणः, देशधर्मो देशाचारः स च प्रतिनियत एव नेपथ्यादिलिङ्गभेद इति, राज्यधर्मः-प्रतिराज्यं भिन्नः, स च करादिः, पुरवरधर्मः-प्रतिपुरवरं भिन्नः क्वचित्किञ्चिद्विशिष्टोऽपि पौरभाषाप्रदानादिलक्षणः सद्वितीया योषिद्देहान्तरं गच्छती-त्यादिलक्षणो वा, ग्रामधर्मः-प्रतिग्रामं भिन्नः, गणधर्मो-मल्लादिगणव्यवस्था, यथा समपादपातेन विषमग्रह इत्यादि, गोष्ठीधर्म्मो-गोष्ठीव्यवस्था, इह च समवयसां समुदायो गोष्ठी, तद्व्यवस्था पुनर्वसन्तादाविदं कर्त्तव्यमित्यादिलक्षणा, राजधर्मो-दुष्टेतरनिग्रहपरिपालनादिरिति। भावधर्मता चास्य गम्यादीनां विवक्षया भावरूपत्वात् द्रव्यपर्यायत्वाद्वा, तस्यैव च द्रव्यानपेक्षस्य विवक्षितत्वात्, लौकिकैर्वा भावधर्मत्वेनेष्टत्वात्, देशराज्यादिभेदश्चैकदेश एवानेकराज्यसम्भव इत्येवं स्वधिया भाव्यम् इत्युक्तो लौकिकः, कुप्रावचनिक उच्यते-असावपि सावद्यप्रायो लौकिककल्प एव, यत आह-"सावज्जो उ" इत्यादि, अवद्यं-पापं सहावद्येन सावद्यं, तुशब्दस्त्वेवकारार्थः, स चावधारणे, सावद्य एव, कः? - 'कुतीर्थिकधर्मः' चरकपरिव्राजकादिधर्म इत्यर्थः, कुत एत-दित्याह-न 'जिनैः' अर्हद्भिः तुशब्दादन्यैश्च प्रेक्षापूर्वकारिभिः 'प्रशंसितः' स्तुतः सारम्भपरिग्रह-त्वात्, अत्र बहुवक्तव्यम तत्तु नोच्यते, गमनिकामात्रफलत्वात् प्रस्तुतव्यापारस्येति गाथार्थः ॥

उक्तः कुप्रावचनिकः, साम्प्रतं लोकोत्तरं प्रतिपादयन्नाह-

नि. [४३] दुविहो लोगुत्तरिओ सुअधम्मो खलु चरित्तधम्मो अ।
सुअधम्मो सज्झाओ चरित्तधम्मो समणधम्मो ॥

वृ. द्विविधो-द्विप्रकारो 'लोकोत्तरो' लोकप्रधानो, धर्म इति वर्त्तते, तथा चाह श्रुतधर्मः खलु चारित्र- धर्मश्च, तत्र श्रुतं-द्वादशाङ्गं तस्य धर्मः, खलुशब्दो विशेषणार्थः, किं विशिनष्टि? स हि वाचनादिभेदाच्चित्र इति, आह च-श्रुतधर्मः स्वाध्यायः-वाचनादिरूप, तत्त्वचिन्तायां धर्म-हेतुत्वाद्धर्म इति। तथा चारित्रधर्मश्च, तत्र "चर गतिभक्षणयोः" इत्यस्य "अर्त्तिलूधूसूखनसहचार इत्रन्" इतीत्रन्प्रत्ययान्तस्य चरित्रमिति भवति, चरन्त्यनिन्दितमनेनेति चरित्रं क्षयोपशमरूपं तस्य भावश्चारित्रम्, अशेषकर्मक्षपाय चेष्टेत्यर्थः, ततश्चारित्रमेव धर्मः चारित्रधर्म इति। चः समुच्चये।

अयं च श्रमणधर्म एवेत्याह- चारित्रधर्मः श्रमणधर्म इति, तत्र श्राम्यतीति श्रमणः "कृत्यल्युटो बहुलम्" इति वचनात् कर्त्तरि ल्युट्, श्राम्यतीति-तपस्यतीति, एतदुक्तं भवति- प्रव्रज्यादिवसादारभ्य सकलसावद्ययोगनिरतो गुरूपदेशादनशनादि यथाशक्त्याऽऽ प्राणोपरमात्तपश्चरतीति, उक्तं च-

"यः समः सर्वभूतेषु, त्रसेषु स्थावरेषु च।
तपश्चरति शुद्धात्मा, श्रमणोऽसौ प्रकीर्तितः ॥"

इति, तस्य धर्मः स्वभावः श्रमणधर्मः, स च क्षान्त्यादिलक्षणो वक्ष्यमाण इति गाथार्थः ॥ उक्तो धर्मः, साम्प्रतं मङ्गलस्यावसरः, तच्च प्राग्निरूपितशब्दार्थमेव, तत्पुनर्नामादिभेदतश्चतुर्धा, तत्र नामस्थापने क्षुण्णत्वात्त्वसाक्षादनादृत्त्य द्रव्यभावमङ्गलाभिधित्सयाऽऽह-

नि.[४४] दव्वे भावेऽवि अ मंगलाइं दव्वम्मि पुण्णकलसाई।
धम्मो उ भावमंगलमेत्तो सिद्धित्ति काऊणं ॥

वृ. 'द्रव्यं' इति द्रव्यमधिकृत्य भाव इति भावं च मङ्गले अपिशब्दान्नामस्थापने च। तत्र 'दव्वम्मि पुण्णकलसाई' द्रव्यमधिकृत्य पूर्णकलशादि, आदिशब्दात् स्वस्तिकादिपरिग्रहः, धर्मस्तु तुशब्दोऽवधारणे धर्म एव भावमङ्गलं। कुत एतदित्यत आह- 'अतः' अस्माद्धर्मात्क्षान्त्यादिलक्षणात् 'सिद्धिरितिकृत्वा' मोक्ष इतिकृत्वा, भवगालनादिति गाथार्थः ॥ अयमेव चोत्कृष्टप्रधानं मङ्गलम्, एकान्तिकत्वादात्यन्तिकत्वाच्च, न पूर्णकलशादि, तस्य नैकान्तिकत्वादनात्यन्तिकत्वाच्च ॥ साम्प्रतं 'यशोद्देशं निर्देश' इतिकृत्वा हिंसाविपक्षतोऽहिंसा, तां प्रतिपादयन्नाह-

नि.[४५] हिंसाए पडिवक्खो होइ अहिंसा चउव्विहा सा उ।
दव्वे भावे अ तहा अहिंसऽजीवाइवाओत्ति ॥

वृ. तत्र प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा, अस्याः हिंसायाः किम्? - प्रतिकूलः पक्षः प्रतिपक्षः-अप्रमत्ततया शुभयोगपूर्वकं प्राणाव्यपरोपणमित्यर्थः, किम्? - भवत्यहिंसेति, तत्र 'चतुर्विधा' चतुष्प्रकारा अहिंसा, 'दव्वे भावे अ'त्ति द्रव्यतो भावतश्चेत्येको भङ्गः, तथा द्रव्यतो नो भावतः तथा न द्रव्यतो भावतः, तथा न द्रव्यतो न भावत इति तथाशब्दसमुच्चितो भङ्गत्रयोपन्यासः, अनुक्तसमुच्चयार्थकत्वादस्येति, उक्तं च "तथा समुच्चयनिर्देशावधार-सादृश्य-प्रकारवचनेष्वित्यादि, तत्रायं भङ्गकभावार्थः-द्रव्यतो भावतश्चेति, "जहा केइ पुरिसे मिअवहपरिणामपरिणए मियं पासित्ता आयन्नाइड्ढियकोदंडजीवे सरं निसिरिज्जा, से अ मिए तेन सरेन विद्धे मए सिआ, एसा दव्वओ हिंसा भावओवि" ॥ या पुनर्द्रव्यतो न भावतः सा खल्वीर्यादिसमितस्य साधोः कारणे गच्छत इति, उक्तं च-

"उच्चालिअम्मि पाए इरियासमिअस्स संकमट्ठाए।
वावज्जेज्ज कुलिंगी मरिज्ज तं जोगमासज्ज ॥१॥
न य तस्स तन्निमित्तो बंधो सुहुमो वि देसिओ समए।
जम्हा सो अपमत्तो सा य पमाओत्ति निद्दिट्ठा ॥२॥"

इत्यादि। या पुनर्भावतो न द्रव्यतः, सेयम्-जहा केवि पुरिसे मंदमंदप्पगासप्पदेसे संठियं ईसिवलिअकायं रज्जुं पासित्ता एस अहित्ति तव्वहपरिणामपरिणए निकड्ढियासिपत्ते दुअं दुअं

छिंदिज्जा एसा भावओ हिंसा न दव्वओ। चरमभङ्गस्तु शून्य इति, एवंभूतायाः हिंसायाः प्रतिपक्षोऽहिंसेति। एकार्थिकाभिधित्सयाऽऽह- 'अहिंसऽजीवाइवाओत्ति' न हिंसा अहिंसा, न जीवातिपातः अजीवातिपातः, तथा च तद्वतः स्वकर्मातिपातो भवत्येव, अजीवश्च कर्मेति भावनीयमिति। उपलक्षणत्वाचेह प्राणातिपातविरत्यादिग्रह इति गाथार्थः॥ साम्प्रतं संयम-

नि.[४६] पुढविदगअगणिमारुयवणस्सईबितिचउपणिंदिअजज्जीवे॥
पेहोपेहपमज्जणपरिट्ठवणमनोवई काए॥

वृ.

पुढवाइयाणजाव य पंचिंदिय संजमो भवे तेसिं।
संघट्टणादि न करे तिविहेणं करणजोएणं॥१॥
अज्जीवेहिं जेहिं गहिएहिं असंजमो इहं भणिओ।
जह पोत्थदूसपणए तणपणए चम्मपणए अ॥२॥
गंडी कच्छवि मुट्ठी संपुडफलए तहा छिवाडी अ।
एयं पोत्थयपणयं पन्नत्तं वीअरागेहिं॥३॥
बाहल्लपुहुत्तेहिं गंडी पोत्थो उ तुल्लगो दीहो।
कच्छवि अंते तणुओ मज्झे पिहुलो मुणेअव्वो॥४॥
चउरंगुलदीहो वा वट्टागिति मुट्ठिपोत्थगो अहवा।
चउरंगुलदीहो चिअ चउरस्सो होइ विन्नेओ॥५॥
संपुडओ दुगमाई फलगा वोच्छं छिवाडिमेत्ताहे।
तनुपत्तोसिअरूवो होइ छिवाडी बुहा बेंति॥६॥
दीहो वा हस्सो वा जो पिहुलो होइ अप्पबाहल्लो।
तं मुणिअ समयसारा छिवाडिपोत्थं भणंतीह॥७॥
दुविहं च दूसपणअं समासओ तंपी होइ नायव्वं।
अप्पडिलेहियदूसं दुप्पडिलेहं च विन्नेयं॥८॥
अप्पडिलेहिअदूसे तूली उवधाणगं च नायव्वं।
गंडुवधाणालिंगिणि मसूरए चेव पोत्तमए॥९॥
पल्हवि कोयवि पावार नवतए तहय दाढिगालीओ।
दुप्पडिलेहिअ दूसे एवं बीअं भवे पणगं॥१०॥
पल्हवि हत्थुत्थरणं कोयवओ रूअपूरिओ पडओ।
दढगालि धोइ पोत्ती सेस पसिद्धा भवे भेदा॥११॥
तणपणगं पुन भणियं जिनेहि कम्मट्ठगंठिदहणेहिं।
साली वीही कोद्दव रालग रन्नेतणाइं च॥१२॥
अय एल गावि महिसी मियाणमजिनं च पंचमं होइ।
तलिगा खल्लग वद्धे कोसग कित्ती य बितिए य॥१३॥
तह विअडहिरण्णाइं ताइं न गेण्हइ असंजमं साहू।

ठाणाइ जत्थ चेए पेह पमज्जितु तत्थ करे ॥१४॥
एसा पेह उवेहा पुणोवि दुविहा उ होइ नायव्वा।
वावारावावारे वावारे जह उ गामस्स ॥१५॥
एसो उविक्खगो हू अव्वावारे जहा विनस्संतं।
किं एयं नु उविक्खसि ? दुविहाएवित्थ अहियारो ॥१६॥
वावारुव्विक्ख तहिं संभोइय सीयमाण चोएइ।
चोएई इयरं पिहु पावयणीअम्मि कज्जम्मि ॥१७॥
अव्वावारउवेक्खा नवि चोएइ गिहिं तु सीअंतं।
कम्मेसु बहुविहेसुं संजम एसो उवेक्खाए ॥१८॥
पडिसागरिए अपमज्जिएसु पाएसु संजमो होइ।
ते चेव पमज्जंते असागरिए संजमो होइ ॥१९॥
पाणाईसंसत्तं भत्तं पाणमहवा वि अविसुद्धं।
उवगरणभत्तमाई जंवा अइरित्त होज्जाहि ॥२०॥
तं परिट्ठप्पविहीए अवहट्टुसंजमो भवे एसो।
अकुसलमनवइरोहो कुसलाण उदीरणं चेव ॥२१॥
जुयलं मनवइसंजम एसो काए पुण जं अवस्सकज्जम्मि।
गमनागमनं भवइ तं उवउत्तो कुणइ सम्मं ॥२२॥
तव्वज्जं कुम्मस्स व सुसमाहियपाणिपायकायस्स।
हवइ य काइयसंजम चिट्ठंतस्सेव साहुस्स ॥२३॥

उक्तः संयमः। आह- अहिंसैव तत्त्वतः संयम इतिकृत्वा तद्भेदेनास्याभिधानमयुक्तम्, न, संयमस्याहिंसाया एव उपग्रहकारित्वात्, संयमिन एव भावतः खल्वहिंसकत्वादिति कृतं प्रसङ्गेन। साम्प्रतं तपः प्रतिपाद्यते-तच्च द्विधा-बाह्यमाभ्यन्तरं च। तत्र तावद्बाह्यप्रतिपादनायाह-

नि. [४७] अनसनमूनोअरिआ वित्ती संखेवणं रसच्चाओ।
कायकिलेसो संलीयणा य बज्झो तवो होइ॥

वृ. न अशनमनशनम्-आहारत्याग इत्यर्थः, तत्पुनर्द्विधा-इत्वरं यावत्कथिकं च, तत्रेत्वरं-परिमितकालं, तत्पुनश्चरमतीर्थकृत्तीर्थे चतुर्थादिषण्मासान्तम्, यावत्कथिकं त्वाजन्म-भावि, तत्पुनश्चेष्टाभेदोपाधिविशेषतस्त्रिधा, तद्यथा-पादपोपगमनमिङ्गितमरणं भक्तपरिज्ञा चेति, तत्रानशनिनः परित्यक्तचतुर्विधाहारस्याधिकृतचेष्टाव्यतिरेकेण चेष्टान्तरमधिकृत्यैकान्तनिष्प्रति-कर्मशरीरस्य पादपस्येवोपगमनं सामीप्येन वर्त्तनं पादपोपगमनमिति, तच्च द्विधा-व्याघात-वन्निर्व्याघातवच्च, तत्र व्याघातवन्नाम यत्सिंहाद्युपद्रवव्याघाते सति क्रियत इति, उक्तं च-

"सीहादिसु अभिभूओ पादवगमनं करेइ थिरचित्तो।
आउम्मि पहुप्पंते विआनिउं नवरि गीअत्थो॥"

इत्यादि, निर्व्याघातवत्पुनर्यत्सूत्रार्थतदुभयनिष्ठितः शिष्यान्निष्पाद्योत्सर्गतः द्वादश समाः कृत-परिकर्मा सन्काल एव करोति, उक्तं च -

"चत्तारि विचित्ताइं विगईनिज्जूहियाइं चत्तारि।
संवच्छरे अ दोन्नि उ एगंतरिअं च आयामं ॥१॥
नाइविगिट्ठो अ तवो छम्मासे परिमिअं च आयामं।
अन्ने वि अ छम्मासे होइ विगिट्ठं तवोकम्मं ॥२॥
वासं कोडीसहियं आयामं काउ आनुपुव्वीए ।
गिरिकंदरं तु गंतुं पायवगमणं अह करेइ ॥३॥" इत्यादि।

तथा इङ्गिते प्रदेशे मरणमिङ्गितमरणम्, इदं च संहननापेक्षमनन्तरोदितमशकुवतश्चर्विधाहार-विनिवृत्तिरूपं खत एवोद्वर्त्तनादिक्रियायुक्तस्यावगन्तव्यमिति, उक्तं च -

"इंगिअदेसंमि सयं चउव्विहाहारचायनिप्फन्नं।
उव्वत्तणादिजुत्तं नाणेन उ इंगिनीमरणं ॥" इत्यादि।

भक्तपरिज्ञा पुनस्त्रिविधचतुर्विधाहारविनिवृत्तिरूपा, सा नियमात्सप्रतिकर्मशरीरस्यापि धृतिसंहननवतो यथासमाधि भावतोऽवगन्तव्येति, उक्तं च -

"भत्तपरिण्णानसनं तिविहाहारइचायनिप्फन्नं।
सपडिक्कम्मं नियमा जहासमाहिं विनिद्दिट्ठं ॥" इत्यादि।

उक्तमनशनम्, अधुना ऊनोदरता-ऊनोदरस्य भाव ऊनोदरता, सा पुनर्द्विविधा-द्रव्यतो भावतश्च, तत्र द्रव्यत उपकरणभक्तपानविषया, तत्रोपकरणे जिनकल्पिकादीनामन्येषां वा तदभ्यास-पराणामवगन्तव्या, न पुनरन्येषाम्, उपध्यभावे समग्रसंयमाभावाद् अतिरिक्ताग्रहणतो वोनोदरतेति,

"जं वट्टइ उवयारे उवगरणं तं सि होइ उवगरणं।
अइरेगं अहिगरणं अजयं अजओ परिहरंतो ॥" इत्यादि।

भक्तपाननोदरता पुनरात्मीयाहारादिमानपरित्यागवतो वेदितव्या, उक्तं च -

"बत्तीसं किर कवला आहारो कुच्छिपूरओ भणिओ।
पुरिसस्स महिलिआए अट्ठावीसं हवे कवला ॥१॥
कवलाण य परिमाणं कुक्कुडिअंडयपमाणमेत्तं तु।
जो वा अविगिअवयणो वयणम्मि छुहेज्ज वीसत्थो ॥२॥" इत्यादि।

एवं व्यवस्थिते सत्यूनोदरता अल्पाहारादिभेदतः पञ्चविधा भवति, उक्तं च -

"अप्पाहार अवड्ढा दुभाग पत्ता तहेव किचूना।
अट्ठ दुवालस सोलस चउवीस तहेक्कतीसा य ॥"

अयमत्र भावार्थः-अल्पाहारोनोदरता नामैककवलादारभ्य यावदष्टौ कवला इति, अत्र चैक-कवलमाना जघन्या, अष्टकवलमाना पुनरुत्कृष्टा, शेषभेदा मध्यमा च, एवं नवभ्य आरभ्य यावद् द्वादश कवलास्तावदपार्धोनोदरता जघन्यादिभेदा भावनीया इति, एवं त्रयोदशभ्य आरभ्य यावत्षोडश तावद् द्विभागोनोदरता, एवं सप्तदशभ्य आरभ्य यावच्चतुर्विंशतिस्तावत्प्राप्ता, इत्थं पञ्चविंशतेराभ्य यावदेकत्रिंशत्तावत्किञ्चिदूनोदरता, जघन्यादिभेदाः सुधियाऽवसेयाः, एवमनेनानुसारेण पानेऽपि वाच्याः, एवं योषितोऽपि द्रष्टव्या इति, भावोनोदरता पुनः क्रोधादि-परित्याग इति, उक्तं च -

''कोहाईणमणुदिनं चाओ जिनवयणभावनाओ अ।
भावेनोमोदरिआ पन्नत्ता वीअरागेहिं॥'' इत्यादि।

उक्तौनोदरता, इदानीं वृत्तिसंक्षेप उच्यते-स च गोचराभिग्रहरूपः, ते चानेकप्रकाराः, तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतो निर्लेपादि ग्राह्यमिति, उक्तं च -

''लेवडमलेवडं वा अमुगं दव्वं च अज्ज घिच्छामि।
अमुगेन व दव्वेणं अह दव्वाभिग्गहो नाम॥१॥
अट्ठ उ गोअरभूमी एलुगविक्खंभमित्तगहणं च।
सग्गामपरग्गामे एवइय घरा य खित्तम्मि॥२॥
उज्जुअ गंतुंपच्चागई अ गोमुत्तिआ पयंगविही।
पेडा य अद्धपेडा अब्भिंतरबाहिसंबुक्का॥३॥
काले अभिग्गहो पुन आदि मज्झे तहेव अवसाने।
अप्पत्ते सइकाले आदी बिइ मज्झ तइअंते॥४॥
दितगपडिच्छयाणं भवेज्ज सुहुमं पि मा हु अचियत्तं।
इति अप्पत्तअतीते पवत्तणं मा य तो मज्झे॥५॥
उक्खित्तमाइचरगा भावजुआ खलु अभिग्गहा होंति।
गायंतो अं रुअंतो जं देइ निसन्नमादी वा॥६॥
ओसं[illegible] परंमुहालंकिओ [illegible] वावि।
भावन्नयरेण जुओ अह भावाभिग्गहो नाम॥७॥

उक्तो वृत्तिसंक्षेतः, साम्प्रतं रसपरित्याग उच्यते-तत्र रसाः क्षीरादयस्तत्परित्यागस्तप इति,

''विगइं विगईभीओ विगइगयं जो उ भुंजए साहू।
विगई विगइसहावा विगई विगइं बला नेइ॥१॥
विगई परिणइधम्मो मोहो जमुदिज्जए उदिन्ने अ।
सुट्ठुवि चित्तजयपरो कहं अकज्जे न विट्टिहिति?॥२॥
दावानलमज्झगओ को तदुवसमट्ठयाइ जलमाई।
सन्तेवि न सेविज्जा? मोहानलदीविएसुयमा॥३॥''

इत्यादि, उक्तो रसपरित्यागः, साम्प्रतं कायक्लेश उच्यते-स च वीरासनादिभेदाच्चित्र इति,

''वीरासन उक्कुडुगासणाइ लोआइओ य विन्नेओ।
कायकिलेसो संसारवासनिव्वेअहेउत्ति॥१॥
वीरासनाइसु गुणा कायानिरोहो दया अ जीवेसु।
परलोअमई अ तहा बहुमानो चेव अन्नेसिं॥२॥
निस्संगया य पच्छापुरकम्मविवज्जणं च लोअगुणा।
दुक्खसहत्तं नरगादिभावनाए य निव्वेओ॥३॥''

तथाऽन्यैरप्युक्तम्-

''पश्चात्कर्म पुरःकर्म (र्मई)र्यापथपरिग्रहः।

दोषा ह्येते परित्यक्ताः, शिरोलोचं प्रकुर्वता ॥" इत्यादि।

गतः कायक्लेशः, साम्प्रतं संलीनतोच्यते इयं चेन्द्रियसंलीनतादिभेदाच्चतुर्विधेति,

"इंदिअकसायजोए पडुच्च संलीनया मुणेयव्वा।
तहव विवित्ताचरिआ पन्नत्ता वीअरागेहिं ॥"

तत्र श्रोत्रादिभिरिन्द्रियैः शब्दादिषुसुन्दरेतरेषु रागद्वेषाकरणमिन्द्रियसंलीनतेति, उक्तं च -

"सद्देसु अ भद्दयपावएसु सोअविसयमुवगएसु।
तुट्ठेण व रुट्ठेण व समणेण सया न होअव्वं ॥"

एवं शेषेन्द्रियेष्वपि वक्तव्यम्, यथा - "रूवेसु अ भद्दगपावएसु" इत्यादि। उक्तेन्द्रियसंली-नता, अधुना कषायसंलीनता-सा च तदुदयनिरोधोदीर्णविफलीकरणलक्षणेति, उक्तं च -

"उदयस्सेव निरोहो उदयं पत्ताणवाऽफलीकरणं।
जं इत्थ कसायाणं कसायसंलीनता एसा ॥" इत्यादि।

उक्ता कषायासंलीनता, साम्प्रतं योगसंलीनता-सा पुनर्मनोयोगादीनानामकुशलानां निरोधः कुशलानामुदीरणमित्येवंभूतेति, उक्तं च -

"अपसत्थाण निरोहो जोगाणमुदीरणं च कुसलाणं।
कज्जम्मि य विहिगमनं जोए संलीणया भणिआ ॥" इत्यादि।

उक्ता योगसंलीनता, अधुना विविक्तचर्या, सा पुनरियम्-

"आरामुज्जाणादिसु थीपसुपंडगविवज्जिएसु जं ठाणं।
फलगादीण य गहणं तह भणियं एसणिज्जाणं ॥"

गता विविक्तचर्या, उक्ता संलीनता। 'बज्झो तवो होही' इति एतदनशनादि बाह्यं तपो-भवति, लौकिकैरप्यासेव्यमानं ज्ञायत इतिकृत्वा बाह्यमित्युच्यते विपरीतग्राहेण वा कुतीर्थिकैरपि क्रियत इतिकृत्वा इति गाथार्थः ॥ उक्तं बाह्यं तपः, इदानीमाभ्यन्तरमुच्यते। तच्च प्रायश्चित्ता-दिभेदमिति, आह च -

नि. [४८] पायच्छित्तं विनओ वेआवच्चं तहेव सज्झाओ।
झाणं उस्सग्गोऽवि अ अब्भिंतरओ तवो होइ ॥

वृ. तत्र पापं छिनत्तीति पापच्छित्, अथवा यथावस्थितं प्रायश्चितं शुद्धमस्मिन्निति प्राय-श्चित्तमिति, उक्तं च -

"पावं छिंदइ जम्हा पायच्छित्तंति भण्णए तम्हा।
पाएण वावि चित्तं विसोहई तेण पच्छित्तं ॥१॥"

तत्पुनरालोचनादि दशधेति, उक्तं च -

"आलोयणपडिक्कमणे मीसविवेगे तहा विउस्सग्गे।
तवछेअमूल अनवट्ठया य पारंचिए चेव ॥

भावार्थोऽस्या आवश्यकविशेषविवरणादवसेय इति। उक्तं प्रायश्चित्तं, साम्प्रतं विनय उच्यते - तत्र विनीयतेऽनेनाष्टप्रकारं कर्मेति विनय इति, उक्तं च -

"विनयफलं शुश्रूषा गुरुशुश्रूषाफलं श्रुतज्ञानम्।

ज्ञानस्य फलं विरतिर्विरतिफलं च आस्रवनिरोधः ॥१॥
संवरफलं तपोबलमथ तपसो निर्जरा फलं दृष्टम्।
तस्मात्क्रियानिवृत्तिः क्रियानिवृत्तेरयोगित्वम् ॥२॥
योगनिरोधाद्भवसन्ततिक्षयः सन्ततिक्षयान्मोक्षः।
तस्मात्कल्याणानां सर्वेषां भाजनं विनयः ॥३॥

स च ज्ञानादिभेदात् सप्तधा, उक्तं च -

"नाणे दंसणचरणे मनवइकाओवयारिओ विनओ।
नाणे पंचपगारो मइनाणाईण सद्दहणं ॥१॥
भत्ती तह बहुमानो तद्दिट्ठत्थाण सम्मभावनया।
विहिगहणब्भासोवि अ एसो विनओ जिनाभिहिओ ॥२॥
सुस्सूसणा अनासायणा य विनओ अ दंसणे दुविहो।
दंसणगुणाहिएसुं कज्जइ सुस्सूसणाविनओ ॥३॥
सक्कारब्भुट्ठाणे सम्माणासण अभिग्गहो तह य।
आसनअनुप्पयाणं किइकम्मं अंजलिगहो अ ॥४॥
एंतस्सनुगच्छणया ठिअस्स तह पज्जुवासणा भणिया।
गच्छंतानुव्वयणं एसो सुस्सूसणाविनओ ॥५॥

इत्थ य सक्कारो - थुणणवंदनादि अब्भुट्ठाणं - जओ दीसइ तओ चेव कायव्वं, संमानो वत्थ-पत्तादीहिं पूअणं, आसनाभिग्गहो पुण - अच्छंतस्सेवायरेनासनानयनपुव्वगं उवविसह एत्थत्ति भण्णंति, आसनअनुप्पदानं तु ठाणाओ ठाणं संचारणं, किइकम्मादओ पगडत्था।

अनासायणा - विनओ पुण पन्नरसविहो, तंजहा -

"तित्थगर धम्म आयरिअ वायगे थेर कुलगणे संघे।
संभोइय किरियाए मइनाणाईण य तहेव ॥१॥"

एत्थ भावना - तित्थगराणमणासायणाए तित्थगरपन्नत्तस्स धम्मसस अनासायणाए।
एवं सर्वत्र द्रष्टव्यम्।

"कायव्वा पुन भत्ती बहुमानो तह य वण्णवाओ अ।
अरिहंतमाइयाणं केवलनाणावसाणाणं ॥१॥"

उक्तो दर्शनविनयः, साम्प्रतं चारित्रविनयः -

"सामाइयाइचरणस्स सद्दहाणं तहेव काएणं।
संफासणं परूवणमह पुरओ भव्वसत्ताणं ॥१॥
मनवइकाइयविनओ आयरियाईण सव्वकालंपि।
अकुसलमनोनिरोहो कुसलाण उदीरणं तहय ॥२॥

इदानीमौपचारिकविनयः, स च सप्तधा,

"अब्भासऽच्छणछंदानुवत्तणं कयपडिकिई तहय।
कारियनिमित्तकरणं दुक्खत्तगवेसणा तहय ॥१॥

तह देसकालजानन सव्वत्थेसु तहयनुमई भणिया।
उवआरिओ उ विनओ एसो भणिओ समासेणं ॥२॥

तत्थ अब्भासऽच्छणं आएसत्थिणा निच्चमेव आयरियस्स अब्भासे-अदुरसामत्थे अच्छे-अव्वं, छंदोऽणुवत्तियव्वो, कयपडिकिई णाम पसण्णा आयरिया सुत्तत्थतदुभयाणि दाहिंति न नाम निज्जरत्ति आहारादिणा जइयव्वं, कारियनिमित्तकरणं सम्ममत्थपदमहेज्जावित्तिएण विणएण विसेसेण वट्टिअव्वं, तयट्ठानुट्ठाणं च कायव्वं, सेस भेदा पसिद्धा। उक्तो विनयः, इदानीं वैयावृत्त्यम्-तत्र व्यापृतभावो वैयावृत्त्यमिति, उक्तं च-

"वेआवच्चं वावडभावो इह धम्मसाहणनिमित्तं।
अन्नादियाण विहिणा संपायणमेस भावत्थो ॥१॥
आयरिअ उवज्झाए थेर तवस्सी गिलाणसेहाणं।
साहम्मियकुलगणसंघसंगयं तमिह कायव्वं ॥२॥

तत्थ आयरिओ पंचविहो, तंजहा-पव्वावणायरिओ दिसायरिओ सुत्तस्स उद्देसणायरिओ, सुत्तस्स समुद्देस्सणायरिओ वायणायरिओत्ति, उवज्झाओ पसिद्धो चेव, थेरो नाम जो गच्छस्स संठितिं करेइ, जाइसुअपरियायाइसु वा थेरो, तवस्सी नाम जो उग्गतवचरणओ, गिलाणो नाम रोगाभिभूओ, सिक्खगो नाम जो अहुणा पव्वइओ, साहम्मिओ नाम एगो पवयणओ न लिंगओ, एगो लिंगओ न पवयणओ, एगो लिंगओ वि पवयणओ वि, एगो न लिंगओ न पवयणओ, कुलगणसंघा पसिद्धा चेव। इदानीं सज्झाओ, सो अ पंचविहो--वायणा पुच्छणा परिअट्टणा अनुप्पेहा धम्मकहा, वायणा नाम सिस्सस्स अज्झावणं, पुच्छणा सुत्तस्स अत्थस्स वा हवइ, परिअट्टणा नाम परिअट्टणंति वा अब्भस्सणंति वा गुणणंति एगट्ठा, अनुप्पेहा नाम जो मनसा परिअट्टेइ णो वायाए, धम्मकहा नाम जो अहिंसाइलक्खणं सव्वन्नुपणीअं धम्मं अनुओगं वा कहेइ, सा धम्मकहा। गतः स्वाध्यायः इदानीं ध्यानमुच्यते-तत्पुनरार्त्तादिभेदाच्चतुर्विधम्, तद्यथा-आर्त्तध्यानं रौद्रध्यानं धर्मध्यानं शुक्लध्यानं चेति, तत्र-

राज्योपभोगशयनासनवाहनेषु, स्त्रीगन्धमाल्यमणिरत्नविभूषणेषु।
इच्छाभिलाषमतिमात्रमुपैति मोहाद्, ध्यानं तदार्त्तमिति तत्प्रवदन्ति तज्ज्ञाः ॥१॥
संछेदनैर्दहनभञ्जनमारणैश्च, बन्धप्रहारदमनैर्विनिकृन्तनैश्च।
यो याति रागमुपयाती च नानुकम्पां, ध्यानन्तु रौद्रमिति तत्प्रवदन्ति तज्ज्ञाः ॥२॥
सूत्रार्थसाधनमहाव्रतधारणेषु, बन्धप्रमोक्षगमनागमहेतुचिन्ता।
पञ्चेन्द्रियव्युपरमश्च दया च भूते, ध्यानं तु धर्ममिति तत्प्रवदन्ति तज्ज्ञाः ॥३॥
यस्येन्द्रियाणि विषयेषु पराङ्मुखानि, सङ्कल्पकल्पनविकल्पविकारदोषैः।
योगैः सदा त्रिभिरहो निभृतान्तरात्मा, ध्यानोत्तमं प्रवरशुक्लमिदं वदन्ति ॥४॥

आर्त्ते तिर्यग्गतिस्तथा गतिरधो ध्याने तु रौद्रे सदा, धर्मे देवगतिः शुभं बत फलं शुक्ले तु जन्म-क्षयः।
तस्माद् व्याधिरुगांतकेहितकरे संसारनिर्वाहके, ध्याने शुक्लवरे रजःप्रमथने कुर्यात् प्रयत्नं बुधः
उक्तं समासतो ध्यानं, विस्तरतस्तु ध्यानशतकादवसेयमिति।

साम्प्रतं व्युत्सर्गः, स च द्विधा-द्रव्यतो भावतश्च, द्रव्यतश्चतुर्धा-गणशरीरोपध्याहारभेदात्,

भावतश्चित्र:, क्रोधादिपरित्याग-रूपत्वात्तस्येति, उक्तं च -

''दव्वे भावे अ तहा दुहा विसग्गो चउव्विहो दव्वे।
गणदेहोवहिभत्ते भावे कोहादिचाओ त्ति ॥१॥
काले गणदेहाणं अतिरित्तासुद्धभत्तपाणाणं।
कोहाइयाण सययं कायव्वो होइ चाओ त्ति ॥२॥

उक्तो व्युत्सर्गः 'अब्भिंतरओ तवो होइ' त्ति, इदं प्रायश्चित्तादि व्युत्सर्गान्तमनुष्ठानं लौकिकैरनाभिलक्ष्यत्वात्तन्त्रान्तरीयैश्च भावतोऽनासेव्यमानत्वान्मोक्षप्राप्त्यन्तरङ्गत्वाच्चाभ्यन्तरं तपो भवतीति गाथार्थः ॥ शेषपदानां प्रकटार्थत्वात् सूत्रपदस्पर्शिका निर्युक्तिकृता नोक्ता, स्वधिया तु विभागे(न) स्थापनीयेति ॥ अत्राह- 'धर्मो मङ्गलमुत्कृष्ट' मित्यादौ धर्मग्रहणे सति अहिंसा-संयमतपोग्रहणमयुक्तं, तस्याहिंसासंयमतपोरूपत्वाव्यभिचारादिति, उच्यते, न, अहिंसादीनां धर्मकारणत्वाद्धर्मस्य च कार्यत्वात्कार्यकारणयोश्च कथञ्चिद्भेदात्, कथंचिद्भेदश्च तस्य द्रव्य-पर्यायोभयरूपत्वात्, उक्तं च--

''नत्थि पुढवीविसिट्ठो घडोत्ति जं तेन जुज्जइ अनन्नो।
जं पुण घडुत्ति पुव्वं नासी पुढवीइ तो अन्नो ॥'' इत्यादि।

गम्यादिधर्मव्यवच्छेदेन तत्स्वरूपज्ञापनार्थं वाऽहिंसादिग्रहणमदुष्टमित्यलं विस्तरेण ॥ आह- अहिंसासंसयमतपोरूपो धर्मो मङ्गलमृत्युकृष्टमित्येतद्वचः किमाज्ञासिद्धमाहोस्विद्युक्तिसिद्ध-मपि?, अत्रोच्यते, उभयसिद्धं, कुतो?, जिनवचनत्वात्, तस्य च विनेयत्त्वापेक्षयाऽऽज्ञादिसिद्ध-त्वात्, आह च निर्युक्तिकारः-

नि.[४९] जिनवयणं सिद्धं चेव भण्णइ कत्थई उदाहरणं।
आसज्ज उ सोयारं हेऊऽवि कहिंचि भण्णेज्जा ॥

**वृ.** जिनाः प्रागिनरूपितस्वरूपाः तेषां वचनं तदाज्ञया सिद्धमेव-सत्यमेव प्रतिष्ठितमेव अवि-चार्यमेवेत्यर्थः, कुतः?, जिनानां रागादिरहितत्वात्, रागादिमतश्च सत्यवचनासम्भवात्,

''रागाद्वा द्वेषाद्वा मोहाद्वा वाक्यमुच्यते ह्यनृतम्।
यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात्?॥१॥

'' इत्यादि, तथापि तथाविधश्रोत्रपेक्षया तत्रापि भण्यते क्वचिदुदाहरणम्, तथा आश्रित्य तु श्रोतारं हेतुरपि कचिद्भण्यते, न तु नियोगतः तुशब्दः श्रोतृविशेषणार्थः, किंविशिष्टं श्रोतारम्?- पटुधियं मध्यमधीस्तु तेनैव बोध्यते, न त्वितर इत्यर्थः । तत्र साध्यसाधनान्वय-व्यतिरेकप्रदर्शनमुदाहरणमुच्यते, दृष्टान्त इत्यर्थः, साध्यधर्मान्वयव्यतिरेकलक्षणश्च हेतुः, इह च हेतुमुल्लंघ्य प्रथममुदाहरणाभिधानं न्यायानुगत्वात्तद्बलेनैव हेतोः साध्यार्थसाधकत्वोपपत्तेः क्वचिद्धेतुमनभिधाय दृष्टान्त एवोच्यत इति न्यायप्रदर्शनार्थं वा, यथा गतिपरिणामपरिणतानां जीवपुद्गलानां गत्युपष्टम्भको धर्म्मास्तिकायः, चक्षुष्मतो ज्ञानस्य दीपवत्, उक्तं च-

''जीवानां पुद्गलानां च, गत्युपष्टम्भकारणम्।
धर्मास्तिकायो ज्ञानस्य, दीपश्चक्षुष्मतो यथा ॥''

तथा क्वचिद्धेतुरेव केवलोऽभिधीयते न दृष्टान्तः, यथा मदीयोऽयमश्वो, विशिष्टचिह्नोपलब्ध्य--

न्यथानुपपत्तेरित्यलं प्रसङ्गेनेति गाथार्थः ॥ तथा-

नि.[५०] कत्थइ पंचावयवं दसहा सव्वहा न पडिसिद्धं।
न य पुन भण्णइ हंदी सविआरमक्खायं ॥

वृ. श्रोतारमेवाङ्गीकृत्य क्वचित्पञ्चावयवं 'दसहा वे'ति क्वचिद्दशावयवं, 'सर्वथा' श्रोत्र-पेक्षया न प्रतिषिद्धमुदाहरणाद्यभिधानमिति वाक्यशेषः, यद्यपि च न प्रतिषिद्धं तथाप्यविशेषेणैव, न च पुनः सर्वं भण्यते उदाहरणादि, किमित्यत आह- 'हंदी सविआरमक्खायं' हन्दीत्युपप्रदर्शने, किमुपप्रदर्शयति ?, यस्मादिहान्यत्र च शास्त्रान्तरे 'सविचारं' सप्रतिपक्षमाख्यातं साकल्यत उदाहरणाद्यभिधानमिति गम्यते, पञ्चावयवाश्च प्रतिज्ञादयः, यथोक्तम्- "प्रतिज्ञाहेतू-दाहरणोपनयनिगमनान्यवयवाः" दश पुनः प्रतिज्ञाविभक्त्यादयः, वक्ष्यति च- "ते उ पइण्ण-विहत्ती" इत्यादि। प्रयोगाश्चैतेषां लाघवार्थमिहैव स्वस्थाने दर्शयिष्याम इति गाथार्थः ॥ साम्प्रतं यदुक्तम्-'जिनवयणं सिद्धं चेव भण्णई कत्थई उदाहरणं' इत्यादि, तत्रोदाहरणहेत्वोः स्वरूपा-भिधित्सयाऽऽह-

नि.[५१] तत्थाहरणं दुविहं चउव्विहं होइ एक्कमेक्कं तु ॥
हेऊ चउव्विहो खलु तेन उ साहिज्जए अत्थो ॥

वृ. तत्रशब्दो वाक्योपन्यासार्थो निर्धारणार्थे वा, उदाहरणं पूर्ववत्, तच्च मूलभेदतो 'द्विविधं' द्विप्रकार, चरितकल्पितभेदात्, उत्तरभेदतस्तु चतुर्विधं भवति, तयोर्द्वयोरेकैकमुदाहरणमाहरण तद्देश तद्दोषोपन्यासभेदात्, तच्च वक्ष्यामः, तथा हिनोती-गमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुः, स 'चतुर्विधः' चतुष्प्रकारः, खलुशब्दो व्यक्तिभेदादनेकविधश्चेति विशेषणार्थः, तुशब्दस्य पुनःशब्दार्थत्वात् तेन पुनर्हेतुना साध्यार्थाविनाभावबलेन 'साध्यते' निष्पाद्यते ज्ञाप्यते वा 'अर्थः' प्रतिज्ञार्थ इति गाथार्थः ॥ साम्प्रतं नानादेशजविनेयगणहितायोदा-हरणैकार्थिकप्रतिपिपाद-यिषयाऽऽह-

नि.[५२] नायमुदाहरणंतिअ दिट्ठंतोवम निदरिसणं तहय।
एगट्ठं सं दुविहं चउव्विहं चेव नायव्वं ॥

वृ. ज्ञायतेऽस्मिन् सति दार्ष्टान्तिकोऽ इति ज्ञातम्, अधिकरणे निष्ठाप्रत्ययः, तथोदाह्रियते प्राबल्येन गृह्यतेऽनेन दार्ष्टान्तिकोऽर्थ इति उदाहरणम्, दृष्टमर्थमन्तं नयतीति दृष्टान्तः, अतीन्द्रिय-प्रमाणादृष्टं संवेदननिष्ठां नयतीत्यर्थः, उपमीयतेऽनेन दार्ष्टान्तिकोऽर्थ इत्युपमानम्, तथा च 'निदर्शनं' निश्चयेन दर्श्यतेऽनेन दार्ष्टान्तिक एवार्थ इति निदर्शनम्, 'एगट्ठं'ति इदमेकार्थम् एकार्थिक-जातम्, इदं च तत्प्रागुपन्यस्तं द्विविधमुदाहरणं चतुर्विधं चैवाङ्गीकृत्य ज्ञातव्यं प्रत्येकमपि, सामान्य-विशेषयोः कथञ्चिदेकत्वाद्, अत एव सामान्यस्यापि प्राधान्यख्यापनार्थमेकवचना-भिधानम् एकार्थमिति, अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयाद्, गमनिकामात्रमेवैतदिति गाथार्थः ॥ साम्प्रतं यदुक्तं 'तत्रोदाहरणं द्विविध' मित्यादि, तद् द्वैविध्यादिप्रदर्शनायाह-

नि.[५३] चरिअं च कप्पिअं वा दुविहं तत्तो चउव्विहेक्केक्कं।
आहरणे तद्देसे तद्दोसे चेवुवन्नासे ॥

वृ. चरितं च कल्पितं चे(वे) द्विविधमुदाहरणम्, तत्र चरितमभिधीयते यद्वृत्तं, तेन कस्यचिद् दार्ष्टान्तिकार्थप्रतिपत्तिर्जन्यते, तद्यथा-दुःखाय निदानं, यथा ब्रह्मदत्तस्य। तथा कल्पितं स्वबुद्धिकल्पनाशिल्पनिर्मितमुच्यते, तेन च कस्यचिद्दार्ष्टान्तिकार्थप्रतिपत्तिर्जन्यते, यथा पिप्पलपत्रैरनित्यतायामिति, उक्तं च -

''जह तुब्भे तह अम्हे तुब्भेहि अ होहिहा जहा अम्हे।
अप्पाहेइ पडंतं पंडुअपत्तं किसलयाणं ॥१॥
नवि अत्थि नवि अ होही उल्लावो किसलपंडुपत्ताणं।
उवमा खलु एस कया भविअजनविबोहणट्ठाए॥२॥'' इत्यादि।

आह-इदमुदाहरणं दृष्टान्त उच्यते, तस्य च साध्यानुगमादि लक्षणमिति, उक्तं च-

''साध्येनानुगमो हेतोः, साध्याभावे च नास्तिता।
ख्याप्यते यत्र दृष्टान्तः, स साधर्म्येतरो द्विधा॥''

अस्य पुनस्तल्लक्षणाभावात् कथमुदाहरणत्वमिति?, अत्रोच्यते, तदपि कथञ्चित्साध्यानुगमादिना दार्ष्टान्तिकार्थप्रतिपत्तिजनकत्वात्फलत उदाहरणम्, इहापि च साऽस्त्येवेतिकृत्वा किं नोदाहरणतेति?। साध्यानुगमादि क्षणमपि सामान्यविशेषोभयरूपानन्तधर्मात्मके वस्तुनि सति कथञ्चिद्भेदवादिन एव युज्यते, नान्यस्य, एकान्तभेदाभेदयोस्तदभावादिति, तथाहि-सर्वथा प्रतिज्ञादृष्टान्तार्थभेदवादिनोऽनुगमतः खलु घटादौ कृतकत्वादेरनित्यत्वादिप्रतिबन्धदर्शनमपि प्रकृतानुपयोग्येव, भिन्नवस्तुधर्मत्वात्, सामान्यस्य च परिकल्पितत्वादसत्त्वाद्, इत्थमपि च तद्बलेन साध्यार्थप्रतिबन्धकल्पनायां सत्त्वामतिप्रसङ्गादित्यत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थ विस्तरभयादिति, एवं सर्वथा अभेदवादिनोऽप्येकत्वादेव तदभावो भावनीय इति, अनेकान्तवादिनस्त्वनन्तधर्मात्मके वस्तुनि तत्तद्धर्मसामर्थ्यात्तत्तद्वस्तुनः प्रतिबन्धबलेनैव तस्य तस्य वस्तुनो गमकं भवति, अन्यथा ततस्तस्मिंस्तत्प्रतिपत्त्यसम्भव इति कृतं प्रसङ्गेन, प्रकृतं प्रस्तुमः- चरितं च कल्पितं चे(वे) त्यनेन विधिना द्विविधम्, पुनश्चतुर्विधं,-चतुष्प्रकारमेकैकम्, कथमत आह- 'उदाहरणं तद्देशः तद्दोषश्चैव उपन्यास' इति। तत्रोदाहरणशब्दार्थ उक्त एव, तस्य देशस्तद्देशः, एवं तद्दोषः, उपन्यसनमुपन्यासः, स च तद्वस्त्वादिलक्षणो वक्ष्यमाण इति गाथार्थः॥

साम्प्रत-मुदाहरणमभिधातुकाम आह-

नि.[५४] चउहा खलु आहरणं होइ अवाओ उवाय ठवणा य।
तहय पडुप्पन्नविनासमेव पढमं चउविगप्पं॥

वृ. चतुर्धा खलु उदाहरणं भवति, अथवा चतुर्धा खलु उदाहरणे विचार्यमाणे भेदा भवन्ति, तद्यथाअपायः उपायः स्थापना च तथा च प्रत्युत्पन्नविनाशमेवेति, स्वरूपमेषां प्रपञ्चेन भेदतो निर्युक्तिकार एव वक्ष्यति, तथा चाह-'प्रथमम्' अपायोदाहरणं 'चतुर्विकल्पं' चतुर्भेदम्। तत्रापायश्चतुःप्रकारः, तद्यथा-द्रव्यापायः क्षेत्रापायः कालापायो भावापायश्च इति गाथार्थः॥ तत्र द्रव्यदपायो द्रव्यापायः, अपायः-अनिष्टप्राप्तिः द्रव्यमेव वा अपायो द्रव्यापायः, अपायहेतुत्वादित्यर्थः, एवं क्षेत्रादिष्वपि भावनीयम्। साम्प्रतं द्रव्यापायप्रतिपादनायाह-

नि.[५५] दव्वावाए दोन्नि उ वानिअगा भायरो धननिमित्तं।

वहपरिणएक्कमेक्कं दहंमि मच्छेण निव्वेओ ॥

वृ. द्रव्यापाये उदाहरणं द्वौ तु, तुशब्दादन्यानि च, वणिजौ, भ्रातरौ 'धननिमित्तं' धनार्थं वधपरिणतौ 'एकैकम्' अन्योऽन्यं ह्रदे मत्स्येन निर्वेद इति गाथाक्षरार्थः ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदमएगंमि संनिवेसे दो भायरो दरिद्दप्पाया, तेहिं सोरट्ठं गंतूण साहस्सिओ नउलओ रूवगाणं विढविओ, ते अ सयं गामं संपत्थिया, इंता तं णउलयं वारएण वहंति, जया एगस्स हत्थे तदा इयरो चिंतेइ-'मारेमि नवरमेए रूवगा ममं होतुं एवं बीओ चिंतेइ "जहाऽहं एअं मारेमि" ते परोप्परं वहपरिणया अज्झवस्संति। तओ जाहे सग्गामसमीवं पत्ता तत्थ नईतडे जिट्ठेअरस्स पुनरावित्ति जाया-'धिरत्थु ममं, जेन मए दव्वस्स कए भाउविनासो चिंतिओ परूण्णो, इअरेण पुच्छिओ, कहिओ, भणई-ममंपि एयारिसं चित्तं होंतं, तहे एअस्स दोसेणं अम्हेहिं एअं चिंतिअंतिकाउं तेहिं सो नउलओ दहे छूढो, ते अ घरं गया, सो अ नउलओ तत्थ पडंतो मच्छएण गिलिओ, सो अ मच्छो मेएण मारिओ, वीहीए ओयारिओ। तेसिं च भाउगाणं भगिनी मायाए वीहिं पट्ठविआ जहा मच्छे आणेह जं भाउगाणं ते सिज्झंति, ताए अ समावत्तीए सो चेवमच्छओ आनीओ, चेडीए फालितीए नउलओ दिट्ठो, चेडीए चिंतिअं-एस नउलओ मम चेव भविस्सइत्ति उच्छंगे कओ, ठविज्जंतो य थेरीए दिट्ठो नाओ अ, तीए भणियं-किमेअं तुमे उच्छंगे कयं ?, सावि लोहं गयाण साहइ, ताओ दोवि परोप्परं पहयाओ, सा थेरी ताए चेडीए तारिसे मम्मप्पएसे आहया जेन तक्खणमेव जीवियाओ ववरोविया, तेहिं तु दारएहिं सो कलहवइअरो नाओ, स नउलओ दिट्ठो, थेरी गाढप्पहारा पाणविमुक्का निस्सट्ठं धरणितले पडिया दिट्ठा, चिंतिअं च नेहिं-इमो सो आयबहुलो अ(न)त्थोत्ति। एवं दव्वं अवायहेउत्ति ॥ लौकिके अप्याहुः-

"अर्थानामर्जने दुःखमर्जितानां च रक्षणे।
आये दुःखं व्यये दुःखं, धिग् द्रव्यं दुःखवर्धनम् ॥१॥
अपायबहुलं पापं, ये परित्यज्य संश्रिताः।
तपोवनं महासत्त्वास्ते धन्यास्ते तपस्विनः ॥२॥" इत्यादि।

एतावत्प्रकृतोपयोगि। तओ तेसिं तमवायं पिच्छिऊण णिव्वेओ जाओ, तओ तं दारियं कस्सइ दाऊण निव्विण्णकामभोआ पव्वइयत्ति गाथार्थः ॥ इदानीं क्षेत्राद्यपायप्रतिपादनायाह-

नि.[५६] खेत्तंमि अवकमणं दसारवग्गस्स होइ अवरेणं।
दीवायणो अ काले भावे मंडुक्किआखवओ ॥

वृ. तत्र क्षेत्र इति द्वारपरामर्शः, ततश्च क्षेत्रादपायः क्षेत्रमेव वा तत्कारणत्वादिति। तत्रोदाहरणमपक्रमणम्-अपसर्पणं 'दशारवर्गस्य' दशारसमुदायस्य भवति 'अपरेण' अपरत इत्यर्थः भावार्थः कथानकादवसेयः, तच्च वक्ष्यामः। द्वैपायनश्चकालं द्वैयापन ऋषिः, काल इत्यत्रापी कालादपायः कालापायः काल एव वा तत्कारणत्वादिति, अत्रापि भावार्थः कथानकगम्य एव, तच्च वक्ष्यामः 'भावे मंडुक्किकाक्षपक' इत्यत्रापि भावादपायो भावपायः स एव वा तत्कारणत्वादिति, अत्रापि च भावार्थः कथानकदवसेयः, तच्च वक्ष्याम इति गाथाक्षरार्थः ॥ भावार्थ उच्यते-खित्तापाओदाहरणं दसारा हरिवंसरायाणो एत्थ महई कहा जहा हरिवंसे। उवओगियं चेव भण्णए, कंसंमि विनिवाइए सावायं खेत्तमेयंतिकाऊण जरासंधरायभएण दसारवग्गो -

महुराओ अवक्कमिऊण बारवइं गओत्ति । प्रकृतयोजनां पुन-र्नियुक्तिकार एव करिष्यति, किमकाण्ड एव नः प्रयासेन ? । कालावाए उदाहरणं पुण-कण्हपुच्छिएण भगवयाऽरिट्ठनेमिना वागरियं-बारसहिं संवच्छरेहिं दीवायणाओ बारवईन-यरीविनासो, उज्जोततराए नगरीए परंपराएण सुणिऊण दीवायणपरिव्वायओ मां नगरिं विणासेहामित्ति कालावधिमण्णओ गमेमित्ति उत्तरावहं गओ, सम्मं कालमाणमयानिऊण य बारसमे चेव -संवच्छरे आगओ, कुमारेहिं खलीकओ, कयनिआणो देवो उववन्नो, तओ य नगरीए अवाओ जाओत्ति, नन्नहा जिनभासियंति

भावावाए उदाहरण खमओ-एगो खमओ चेल्लएण समं भिक्खायरियं गओ, तेन तत्थ मंडुक्कलिया मारिआ, चिल्लएण भणिअं-मंडुक्कलिआ तए मारिआ, खवगो भणइ-रे दुट्ठ सेह ! चिरमइआ चेव एसा, ते गआ, पच्छा रत्तिं आवस्सए आलोइंताण खमगेन सा मंडुक्कलिया नालोइया ताहे चिल्लएण भणिअं-खमगा ! तं मंडुक्कलियं आलोएहि, खमओ रुट्ठो तस्स चेल्लयस्स खेलमल्लयं घेत्तूण उद्धाइओ, अंसियालए खंभे आवडिओ वेगेन इंतो, मओ य जाइसिएसु उववन्नो, तओ चइत्ता दिट्ठीविसाणं कुले दिट्ठीविसो सप्पो जाओ, तत्थ य एगेन परिहिंडंतेन नगरे रायपुत्तो सप्पेण खइओ, अहितुंडएण विज्जाओ सव्वे सप्पा आवाहिआ, मंडले पवेसिया भणिया-अन्ने सव्वे गच्छंतु, जेन पुण रायपुत्तो खइओ सो अच्छउ, सव्वे गया, एगो ठिओ, सो भणिओ-अहवा विसं आवियह अहवा एत्थ अग्गिंमि निवडाहि, सो अ अगंधणो, सप्पाणं किल दो जाईओ-गंधणा अगंधणा य, ते अगंधणा मानिनो, ताहे सो अग्गिंमि पविट्ठो, न य तेन तं वंतं पच्चाइयं, रायपुत्तोवि मओ, पच्छा रण्णा रुट्ठेण घोसावियं रज्जे-जो मम सप्पसीसं आनेइ तस्साहं दीनारं देमि, पच्छा लोगो दीनारलोभेण सप्पे मारेउं आढत्तो, तं च कुलं जत्थ सो खमओ उप्पन्नो तं जाइसरं रत्तिं हिंडइ दिवसओ न हिंडइ, मा जीवे दहेहामित्तिकाउं, अन्नया आहितुंडिगेहिं सप्पे मग्गंतेहिं रत्तिचरेण परिमलेन तस्स खमगसप्पस्स बिलं दिट्ठंति दारे से ठिओ, ओसहिओ आवाहेइ, चिंतेइ-दिट्ठो मे कोवस्स विवाओ, तो जइ अहं अभिमुहो निगच्छामि तो दहिहामि, ताहे पुच्छेन आढत्तो निप्फिडिउं, जत्तियं निप्फेडेइ तावइमेव आहिडओ छिंदेइ, जावसीसं छिन्नं, मओ य, सो सप्पो देवयापरिग्गहिओ, देवयाए रन्नो सुमिणए दरिसणं दिन्नं-

जहा मा सप्पे मारेह पुत्तो ते नागकुलाओ उव्वट्टिऊण भविस्सइ, तस्स दारयस्स नागदत्तनामं करेज्जाहि सो अ खमगसप्पो मरित्ता तेन पाणपरिच्चाएण तस्सेव रण्णो पुत्तो जाओ, जाए दारए णामं कयं नागदत्तो, खुड्डुलओ चेव सो पव्वइओ, सो अ किर तेण तिरियाणुभावेण अतीव छुहालुओ, दोसीणवेलाए चेव आढवेइ भुंजिउं जाव सूरत्थमनवेलं, उवसंतो धम्मसद्धिओ य, तम्मि अ गच्छे चत्तारि खमगा, तंजहा-चाउम्मासिओ तिमासिओ दोमासिओ एगमासिओत्ति, रत्तिं च देवया वंदिउं आगया, चाउम्मासिओ पढमट्ठिओ, तस्स पुरओ तेमासिओ, तस्स पुरओ दोमासिओ, तस्स पुरओ एगमासिओ, ताण य पुरओ खुड्डुओ ।

सव्वे खमगे अतिक्कमित्ता ताए देवयाए खुड्डुओ वंदिओ, पच्छा ते खमगा रुट्ठा, निग्गच्छंती अ गहिया चाउम्मासिअखमएण पोत्ते, भणिआ य अनेन-कडपूयणि ! अम्हे तवस्सिणो न वंदसि, एयं कूरभायणं वंदसित्ति, सा देवया भणइ-अहं भावखमयं वंदामि, न पूआसक्कारपरे मानिओ अ वंदामि, पच्छा ते चेल्लयं तेन अमरिसं वहंति, देवया चिंतेइ-मा एए चेल्लयं खरंटेहिंति,

तो सण्णिहिआ चेव अच्छामि, ताहं पडिबोहेहामि, बितिअदिवसे अ चेल्लओ संदिसावेऊण गओ दोसीणस्स, पडिआगसो आलोइत्ता चाउम्मासियखमगं निमंतेइ, तेना पडिग्गहे से निच्छूढं, चेल्लओ भणइ-मिच्छामिदुक्कडं जं तुब्भे मए खेलमल्लओ न प्पणामिओ, तं तेन [illegible] खेल फेडित्ता खेलमल्लए छूढ, एवं जाव तिमासिएणं जाव एगमासिएणं निच्छूढं, तं तेन तहा चेव फेडिअं, अडुयालित्ता लंबणे गिण्हामित्तिकाउं खमएण चेल्लओ बाहं गहिओ, तं तेन तस्स चेल्लगस्स अदीनमनसस्स विसुद्धपरिणामस्स लेस्साहिं विसुज्झमाणीहिं तदावरणिज्जाणं कम्माणं खएण केवलनाणं समुप्पन्नं, ताहे सा देवया भणइ-किह तुब्भे वंदिअव्वा ? जेणेवं कोहाभिभूआ अच्छह, ताहे ते खमगा संवेगमावण्णा मिच्छामिदुक्कडंति, अहो बालो उवसंतचित्तो अम्हेहिं पावकम्मेहिं आसाइओ, एवं तेसिंपि सुहज्झवसाणेणं केवलनाणं समुप्पन्नं, एवं पसंगओ कहियं कहाणयं, उवणओ पुन कोहादिगाओ अपसत्थभावाओ दुग्गइए अवाओ त्ति ॥

परलोकचिन्तायां प्रकृतोपयोगितां दर्शयन्नाह-

नि.[५७] सिक्खगअसिक्खगाणं संवेगथिरट्टयाइ दोण्हंपि।
दव्वाईया एवं दंसिज्जंते अवाया उ॥

वृ. 'शिक्षकाशिक्षकयोः' अभिनवप्रव्रजितचिरप्रव्रजितयोः अभिनवप्रव्रजितगृहस्थयोर्वा संवेगस्थैर्यार्थं द्वयोरपि द्रव्याद्या 'एवम्' उक्तेन प्रकारेण वक्ष्यमाणेन वा दर्श्यन्ते अपाया इति, तत्र संवेगो-मोक्ष-सुखाभिलाषः स्थैर्यं पुनः अभ्युपगतापरित्यागः, ततश्च कथं नु नाम दुःखनिबन्धनद्रव्याद्यवगमात्तयोः संवेगस्थैर्ये स्यातां ? द्रव्यादिषु चाप्रतिबन्ध इति गाथार्थः ॥

नि.[५८] दविअं कारणगहिअं विगिंचिअव्वमसिवाइखेत्तं च।
बारसहिं एस्सकालो कोहाइविवेग भावम्मि॥

वृ. इहोत्सर्गं मुमुक्षुणा द्रव्यमेवाधिकं वस्त्रपात्राद्यन्यद्वा कनकादि न ग्राह्यं, शिक्षकाहिसंदिष्टादिकारणगृहीतमपि तत्परिसमाप्तौ परित्याज्यम्, अत एवाह-द्रव्यं कारणगृहीतं, किम् ? 'विकिंचितव्यं' परित्याज्यम्, अनेकैहिकामुष्मिकापायहेतुत्वात्, दुरन्ताग्रहाद्यपाय-हेतुता च मध्यस्थैः स्वधिया भावनीयेति। एवमशिवादिक्षेत्रं च, परित्याज्यमिति वर्त्तते, अशिवादि-प्रधानं क्षेत्रमशिवादिक्षेत्रम्, आदिशब्दादूनोदरताराजद्विष्टादिपरिग्रहः, परित्याज्यं चेदमनेकैहिका-मुष्मिकापायसम्भवादिति। तथा द्वादशभिर्वर्षैरेष्यत्कालः, परित्याज्य इति वर्त्तते, तत एवापाय-सम्भवादिति भावना, एतदुक्तं भवति-अशिवादिदुष्ट एष्यत्कालः द्वादशभिर्वर्षैरनागतमेवोज्झितव्य-इति, उक्तं च-

"संवच्छरबारसएण होहिति असिवंति ते तओ निंति।
सुत्तत्थं कुव्वंता अतिसयमादीहि नाऊण ॥" इत्यादि।

तथा 'क्रोधादिविवेको भाव' इति क्रोधादयोऽप्रशस्तवास्तेषां विवेकः-नरकपातनाद्यपायहेतुत्वात्परित्यागः, भाव इति-भावापाये, कार्य इत्ययं गाथार्थः ॥ एवं तावद्वस्तुतश्चरणकरणानुयोगमधिकृत्यापायः प्रदर्शितः, साम्प्रतं द्रव्यानुयोगमधिकृत्य प्रदर्श्यते-

नि.[५९] दव्वादिएहिं निच्चो एगंतेनेव जेसि अप्पा उ।
होइ अभावो तेसिं सुहदुहसंसारमोक्खाणं॥

वृ.'द्रव्यादिभिः' द्रव्यक्षेत्रकालभावैः नारकत्वविशिष्टक्षेत्रवयोऽवस्थितत्वाप्रसन्नत्वादिभिः 'नित्यः' अविचलितस्वभावः 'एकान्तेनैव' सर्वथैव 'येषां' वादिनाम् 'आत्मा' जीवः तु शब्दादन्यच्च वस्तु भवतिसंजायते 'अभावः' असंभवः 'तेषां' वादिनां केषाम् ?-'सुखदुःखसंसार-मोक्षाणाम्' तत्राह्लादानुभवरूपं क्षणं सुखम्, तापानुभवरूपं दुःखम्, तिर्यग्नरनारकामरभवसंसरण-रूपः संसारः, अष्टप्रकारकर्मबन्धवियोगो मोक्षः, तत्र कथं पुनस्तेषां वादिनां सुखाद्यभावः ?, आत्मनोऽप्रच्युतानुत्पन्नस्थिरैकस्वभावत्वाद्, अन्यथात्वापरिणतेः सदैव नारकत्वादिभावाद्, अपरित्यक्ताप्रसन्नत्वे पूर्वरूपस्य च प्रसन्नत्वेनाभवनाद्, एवं शेषेष्वपि भावनीयम्

नि.[६०] सुहदुक्खसंपओगो न विज्जइ निच्चवायपक्खंमि।
एगंतुच्छेअंमि अ सुहदुक्खविगप्पणमजुत्तं॥

वृ.सुखदुःखसंप्रयोगः, सम्यक् संगतो वा प्रयोगः संप्रयोगः अकल्पित इत्यर्थः 'न विद्यते' नास्ति न घटत इत्यर्थः, क्व ?-'नित्यवादपक्षे' नित्यवादाभ्युपगमे संप्रयोगो न विद्यते, कल्पितस्तु भवत्येव, यथाऽऽहुर्नित्यवादिनः-"प्रकृत्युपधानतः पुरुषस्य सुखदुःखे स्तः, स्फटिके रक्ततादिवद् बुद्धिप्रतिबिम्बाद्वाऽन्ये" इति, कल्पितत्वं चास्य आत्मनस्तत्त्वत एव तथापरिणतिमन्तरेण सुखाद्यभावाद् उपधानसन्निधावप्यन्धोपले रक्ततादिवत्, तदभ्युपगमे चाभ्युपगमक्षतिः, बुद्धिप्रतिबिम्बपक्षेऽप्यविचलितस्यात्मनः सदैवैकस्वभावत्वात् सदैवैकरूपप्रतिबिम्बापत्तेः, स्वभावभेदाभ्युपगमे चानित्यत्वप्रसङ्ग इति। मा भूदनित्यैकान्तग्रह इत्यत आह- 'एकान्तेन' सर्वथा उत्-प्राबल्येन छेदो-विनाशः एकान्तोच्छेदः-निरन्वयो नाश इत्यर्थः, अस्मिंश्च किम् ?-सुखदुःखयोर्विकल्पनं सुखदुःखविकल्पनम्, 'अयुक्तम्' अघटमानकम्, अयमत्र भावार्थः-एकान्तोच्छेदेऽपि सुखाद्यनुभवितुस्तत्क्षण एवं सर्वथोच्छेदादहेतुकत्वात्तदुत्तरक्षणस्योत्पत्तिरपि न युज्यते, कुतः पुनस्तद्विकल्पनमिति गाथार्थः॥ उक्तोऽपायः, साम्प्रतमुपाय उच्यते-तत्रोपसामीप्येन (आयः) विवक्षितवस्तुनोऽविकललाभहेतुत्वाद्वस्तुनो लाभ एवोपायः-अभिलषितवस्त्ववाप्तये व्यापारविशेष इत्यर्थः, असावपि चतुर्विध एव, तथा चाह-

नि.[६१] एमेव चउविगप्पो होइ उवाओऽपि तत्थ दव्वंमि।
धातुव्वाओ पढमो नंगलकुलिएहिं खेत्तं तु॥

वृ.'एवमेव' यथा अपायः, किम् ?-'चतुर्विकल्पः' चतुर्भेदः भवत्युपायोऽपि, तद्यथाद्रव्योपायः क्षेत्रोपायः कालोपायः भावोपायश्च, तत्र 'द्रव्य' इति द्वारपरामर्शः द्रव्योपाये विचार्ये 'धातुर्वादः' सुवर्णपातनोत्कर्षलक्षणो द्रव्योपायः 'प्रथम' इति लौकिकः, लोकोत्तरे त्वध्वादौ पटलादिप्रयोगतः प्रासुकोदककरणम्, क्षेत्रोपायस्तु लाङ्गलादिना क्षेत्रोपक्रमणे भवति, अत एवाह-'लाङ्गलकुलिकाभ्यां क्षेत्रम्' उपक्रम्यत इति गम्यते, ततश्च लाङ्गलकुलिके तदुपायो लौकिकः, लोकोत्तरस्तु विधिना प्रातरशनाद्यर्थमटनादिना क्षेत्रभावनम्, अन्ये तु योनिप्राभृतप्रयोगतः काञ्चनपातनोत्कर्षलक्षणमेव सञ्जातप्रयोजनादौ द्रव्योपायं व्याचक्षते, विद्यादिभिश्च दुस्तराध्वतरणलक्षणं क्षेत्रोपायमिति। अत्र च प्रथमग्रहणपदार्थोऽतिरिच्यमान इवाभाति, पाठान्तरं वा 'धाउव्वाओ भणिओ' त्ति अत्र च कथञ्चिदविरोध एवेति गाथार्थः॥

नि.[६२] कालो अ नालियाईहिं होइ भावंमि पंडिओ अभओ।

'चोरस्स कए नट्टिं वड्डकुमारिं परिकहेइ ॥

वृ. कालश्च नालिकादिभिः ज्ञायत इति शेषः, नालिका-घटिका आदिशब्दा-च्छङ्क्वादिपरिग्रहः ततश्च नालिकादयः कालोपायो लौकिकः, लोकोत्तरस्तु सूत्रपरावर्त्तनादिभिस्तथा भवति, 'भावे' चेति द्वारपरामर्शत्वाद्भावोपाये विचार्ये निर्दशनं, क इत्याह-'पण्डितो' विद्वान 'अभयः' अभयकुमारस्तथा चाह-चौरनिमित्तं नर्तक्यां वड्ड, कुमारीं, किम् ?, त्रिकालगोचरसूत्र-प्रदर्शनार्थमाह-परिकथयति, ततश्च यथा तेनोपायतश्चौरभावो विज्ञातः एवं शिक्षकादीनां तेन तेन विभिन्नोपायत एव भावो ज्ञातव्य इति गाथार्थः ॥

नवरं भावोवाए उदाहरणं-रायगिहं नाम नयरं, तत्थ सेणिओ राया, सो भज्जाए भणिओ जहा मम एगखंभं पासायं करेहि, तेन वड्डइणो आनत्ता, गया कट्ठच्छिंदगा, तेहिं अडवीए सलक्खणो सरलो महइमहालओ दुमो दिट्ठो, धूवो दिन्नं, जेनेस परिग्गहिओ रुक्खो सो दरिसावेउ अप्पाणं, तो णं ण छिंदामोत्ति, अह न देइ दरिसावं तो छिंदामोत्ति, ताहे तेन रुक्खवासिणा वाणमंतरेण अभयस्स दरि-सावो दिन्नो, अहं रन्नो एगखंभं पासायं करेमि, सव्वोउयं च आरामं करेमि सव्ववणजाइउवेयं, मा छिन्दहत्ति, एवं तेन कओ पासाओ। अन्नया एगाए मायंगीए अकाले अंबयाणि गहिआणि, पुणो अ उन्नमणीए उन्नामियं, पभाए रन्ना दिट्ठं, पयं न दीसइ, को एस मनुसो अतिगओ, ? जस्स एसा एरिसी सत्तित्ति सो मम अंतउरंपि धरिसेहितित्तिकाउं अभयं सद्दावेऊण भणइ-सत्तरत्तस्स अभ्यंतरे जइ चोरं नानेहि तो नत्थि ते जीवियं।

ताहे अभओ गवेसिउं आढत्तो, नवरं एगंमि पएसे गोज्जो रमिउकामो, मिलिओ लोगो, तत्थ गंतुं अभओ भणति-जाव गोज्जो मंडेइ अप्पाणं ताव ममेगं अक्खाणगं सुणेह जहा कहिंपि नयरे एगो दरिद्दसिट्ठी परिवसति, तस्स धूया वुड्ढकुमारी अईव कयत्थिउमाढत्ता, तीए सो भणिओ-मा मइं कुमारिं विनासेहि, तवावि भयणी भाणिज्जीओ अत्थि, तेन भणिआ-एक्काए ववत्थाए मुयामि, जइ नवरं जम्मि दिवसे परिणेज्जसि तद्दिवसं चेव भत्तारेण अणुग्घाडिया समाणी मम सयासं एहिसि तो मुयामि, तीए भणिओ-एवं हवउत्ति, तेन विसज्जिआ अन्नया परिणीआ, जाहे अपवरके पवेसिआ ताहे भत्तारस्स सब्भावं कहेइ, विसज्जिया वच्चइ, पट्ठिया आरामं, अंतरा अ चोरेहिं गहिया, तेसिंपि सब्भावो कहिओ, मुक्का, गच्छंतीए अंतरा रक्खसो दिट्ठो, जो छण्हं मासाणं आहारेइ, तेन गहिया, कहिए मुक्का, गया आरामियसगासं, तेन दिट्ठा, सो संभंतो भणइ-कहमागयासि ?, ताए भणिअंमया कओ सो पुव्विं समओ, सो भणइ-कहं भत्तारेण मुक्का ?, ताहे तस्स तं सव्वं कहिअं, अहो सच्चपइन्ना एसा महिलत्ति, एत्तिएहिं मुक्का किहाहं दुहामित्ति तेन विमुक्का, पडियंती अ गया सव्वेसिं तेसिं मज्झेणं, आगता तेहिं सव्वेहिं मुक्का, भत्तारसगासं अणहसमग्गा गया।

ताहे अभओ तं जनं पुच्छइ-अक्खह एत्थ केन दुक्करं कयं ?, ताहे इस्सालुया भणंति-भत्तारेणं, छुहालुया भणंति-रक्खसेणं, पारदारिया भणंति-मालागारेणं हरिएसेण भणिअं-चोरेहिं, पच्छा सो गहिओ, जहा एस चोरोत्ति। एतावत्प्रकृतोपयोगि। जहा अभएन तस्स चोरस्स उवाएण भावो नाओ एवमिहवि सेहाणमुवट्ठायंतयाणं उवाएण गीअत्थेण विपरिणामादिणा भावो जाणिअव्वोत्ति, किं एए पव्वावणिज्जा नवत्ति, पव्वाविएसुवि तेसु मुंडावणाइसु एमेव विभासा, यदुक्तम्-"पव्वाविओ सियत्ति अ मुंडावेउं न कप्पइ" इत्यादि। कहाणयसंहारो पुन-चोरो

सेणिमारेमि, देमित्ति अब्भुवगए आसणे ट्ठिओ पढई, न ठाई, राया भणई-किं न ठाई ?, ताहे तं मायंगो भणइ-जहा अविनएणं पढसि, अहं भूमीए तुमं आसने, नीयतरे उवविट्ठो, ठियातो सिद्धाओ य विज्जाओत्ति। कृतं प्रसङ्गेन। एवं तावल्लौकिकमर्थाक्षिप्तं चरणकरणानुयोगं चाधिकृत्योक्ता द्रव्योपायादयः, साम्प्रतं द्रव्यानुयोगमधिकृत्य प्रदर्श्यन्त इति।

तत्राप्युपायदर्शनतो नित्यानित्यैकान्तवादयोः सुखादिव्यवहाराभावप्रसङ्गेन तथा प्रत्यक्षगोचरातिक्रान्तेश्च वस्तुत आत्माभाव एवेति मा भूच्छिष्यकाणां मतिविभ्रमोऽत उपायत एवात्मास्तित्वमभिधातुकाम आह-

नि.[६३] एवं तु इहं आया पच्चक्खं अनुवलब्भमाणोऽवि।
सुहदुक्खमाइएहिं गिज्झइ हेऊहिं अत्थित्ति॥

वृ.एवमेव यथा धातुवादादिभिर्द्रव्यादि 'इह' अस्मिँल्लोके 'आत्मा' जीवः 'प्रत्यक्ष' मिति तृतीयार्थे द्वितीया प्रत्यक्षेण 'अनुपलभ्यमानोऽपि' अदृश्यमानोऽपि 'सुखदुःखादिभिः' आदि-शब्दात् संसारपरिग्रहो गृह्यते 'हेतुभिः' युक्तिभिः 'अस्ति' विद्यत इति-एवं गृह्यते, तथाहि-सुखदुःखानां धर्मत्वाद्धर्मस्य चावश्यमनुरूपेण धर्मिणा भवितव्यं, न च भूतसमुदायमात्र एव देहोऽस्यानुरूपो धर्म्मी, तस्याचेतनत्वात् सुखादीनां च चेतनत्वादिति।

नि.[६४] जह वऽस्साओ हत्थिं गामा नगरं तु पाउसा सरयं।
ओदइयाउ उवसमं संकंति देवदत्तस्स॥

वृ.यथा'वे'ति प्रकारान्तरदर्शने 'अश्वात्' घोटकात् 'हस्तिनं' गजं ग्रामात् नगरं तु प्रावृषः शरदं प्रावृट्कालाच्छरत्कालमित्यर्थः, औदयिकाद् भावाद् 'उपशम' मित्यौपशमिकं 'संक्रान्तिः' संक्रमणं संक्रान्तिः कस्य ?-देवदत्तस्य, प्रत्यक्षेणेति शेषः॥

नि.[६५] एवं सउ जीवस्सवि दव्वाईसंकमं पडुच्चा उ।
अत्थित्तं साहिज्जइ पच्चक्खेणं परोक्खंपि॥

वृ.-'एवं' यथा देवदत्तस्य तथा, किम् ?- 'सत्तो' विद्यमानस्य जीवस्यापि द्रव्यादिषु संक्रमः, आदिशब्दात् क्षेत्रकालभावपरिग्रहः, तं 'प्रतीत्य' आश्रित्य 'अस्तित्वं' विद्यमानत्वं 'साध्यते' अवस्थाप्यते। आह सतोऽस्तित्वसाधनयुक्तम्, न, अव्युत्पन्नविप्रतिपन्नविषयत्वात् साधनस्य, 'प्रत्यक्षेण' अश्वादिसंक्रमेण, सर्वथा साक्षात्परिच्छित्तिमङ्गीयकृत्य 'परोक्षमपि' अप्रत्यक्षमपि, अवग्रहादिस्वसंवेदनतो लेशतस्तु प्रत्यक्षमेवैतत्, एतदुक्तं भवति-यथा अश्वादिराक्रान्तिं देवदत्ताख्यं धर्मिणमतिरिच्य वर्त्तते, एवमियमप्यौदारिकाद्वैक्रिये तिर्यग्लोकादूर्ध्वलोके परिमितवर्षायुष्कपर्यायादपरिमितवर्षायुष्कपर्याये चारित्रभावादविरत-भावे च संक्रान्तिं जीवाख्यं धर्मिणमन्तरेणोपपद्यत इति वृद्धा व्याचक्षते। अन्ये तु द्वितीय-गाथापश्चार्द्धं पाठान्तर-तोऽन्यथा व्याचक्षते-तत्रायमभिसम्बन्धः,-'एवं तु इहं आये' त्यादि-गाथयोपायत एवात्मा-स्तित्वमभिधायाधुनोपायत एव सुखदुःखादिभावसङ्क्रान्तिनिमित्तं नित्यानित्यैकान्तपक्ष-व्यवच्छेदेनात्मानं परिणामिनमभिधित्सुराह- 'जह वऽस्साओ' गाथाव्याख्या पूर्ववत्॥

नि.[६६] एवं सउ जीवस्सवि दव्वाईसंकमं पडुच्चा उ।
परिणामो साहिज्जइ पच्चक्खेणं परोक्खेवि॥

वृ. पूर्वार्द्धं पूर्ववत्, पश्चार्द्धभावना पुनरियम् - न ह्येकान्तनित्यानित्यपक्षयोर्दृष्टाऽपि द्रव्यादिसंक्रान्तिर्देवदत्तस्य युज्यते इत्यतस्तद्भावान्यथानुपपत्त्यैव परिणामसिद्धेरिति।

"नार्थान्तरगमो यस्मात्, सर्वथैव न चागमः।
परिणामः प्रमासिद्ध, इष्टश्च खलु पण्डितैः ॥१॥
घटमौलिसुवर्णार्थी, नाशोत्पादस्थितिष्वयम्।
शोकप्रमोदमाध्यस्थ्यं, जनो याति सहेतुकम् ॥२॥
पयोव्रतो न दध्यत्ति, न पयोऽत्ति दधिव्रतः।
अगोरसव्रतो नोभे, तस्माद्वस्तु त्रयात्मकम् ॥३॥"

इति गाथाद्वयार्थः॥ उक्तमुपायद्वारमधुना स्थापनाद्वारमभिधित्सुराह-

नि. [ ६७ ] ठवणाकम्मं एक्कं दिट्ठंतो तत्थ पोंडरीअं तु।
अहवाऽवि सन्नठक्कणहिंगुसिवकयं उदाहरणं॥

वृ. स्थाप्यते इति स्थापना तया तस्यास्तस्यां वा कर्म-सम्यगभीष्टार्थप्ररूपणलक्षणा क्रिया स्थापनाकर्म, 'एक'मिति तज्जात्यपेक्षया 'दृष्टान्तो' निदर्शनं 'तत्र' स्थापनाकर्मणि 'पौण्डरीकं तु' तुशब्दात्तथाभूतमन्यच्च, तथा च पौण्डरीकाध्ययने पौण्डरीकं प्ररूप्य प्रक्रियवैवान्यमतनिरासेन स्वमतं स्थापितमिति, अथवेत्यादि पश्चार्द्धं सुगमम्, लौकिकं चेदमिति गाथाक्षरार्थः॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्-जहा एगम्मि नगरे एगो मालायारो सण्णाइओ करंडे पुप्फे घेत्तूण वीहीए एइ, सो अईव अच्चइओ, ताहे तेन सिग्घं वोसिरिऊणं सा पुप्फपिडिगा तस्सेव उवरि पल्हत्थिया, ताहे लोओ पुच्छइ-किमेयंति?, जेणित्थ पुप्फाणि छड्डेसि, ताहे सो भणइ-अहं आलोविओ, एत्थ हिंगुसिवो नामं, एतं तं वाणमंतरं हिंगुसिवं नाम उप्पन्नं, लोएण परिग्गहियं, पूया से जाया, खाइगयं अज्जवि तं पाडलिपुत्ते हिंगुसिवं नाम वाणमंतरं। एवं जइ किंचि उड्डाहं पावयणीयं कयं होज्जा केनवि पमाएण ताहे तहा पच्छाएयव्वं जहा पच्चुत्तं पवयणुब्भावना हवइ।

"संजाए उड्डाहे जह गिरिसिद्धेहिं कुसलवुद्धीहिं।
लोयस्स धम्मसद्धा पवयणवण्णेण सुट्ठुकया॥१॥"

एवं तावच्चरणकरणानुयोगं लोकं चाधिकृत्य स्थापनाकर्म प्रतिपादितम्, अधुना द्रव्यानुयोगमधिकृत्योपदर्शयन्नाह-

नि. [६८] सव्वभिचारं हेतुं सहसा वोत्तुं तमेव अन्नेहिं।
उववूहइ सप्पसरं सामत्थं चऽप्पणो नाउं॥

वृ. सह व्यभिचारेण वर्त्तत इति सव्यभिचारस्तं 'हेतु' साध्यधर्मान्वयादिलक्षणं 'सहसा' तत्क्षणमेव 'वोत्तुं' अभिधाय 'तमेव' हेतुम् 'अन्यैः' हेतुभिरेव 'उपबृंहते' समर्थयति 'सप्रसरम्' अनेकधा स्फारयन् 'सामर्थ्यं' प्रज्ञाबलम्, चशब्दो भिन्नक्रमः 'आत्मनश्च' स्वस्य च 'ज्ञात्वा' विज्ञाय, चशब्दात्परस्य चेति गाथार्थः॥ भावार्थस्त्वयम्-द्रव्यास्तिकाद्यनेकनयसङ्कुलप्रवचनज्ञेन साधुना तत्स्थापनाय नयान्तरमतापेक्षया सव्यभिचारं हेतुमभिधाय प्रतिपक्षमयमतानुसारतः तथा समर्थनीयः यथा सम्यगनेकान्तवादप्रतिपत्तिर्भवतीति। आह- उदाहरणभेदस्थापना-

धिकारचिन्तायां सव्यभिचारहेत्वभिधानं किमर्थमिति ?, उच्यते, तदाश्रयेण भूयसामुदाहरणानां प्रवृत्तेः, तदन्वितं चोदाहरणमपि प्राय इति ज्ञापनार्थम्, अलं प्रसङ्गेन। अभिहितं स्थापनाकर्म-द्वारम्, अधुना प्रत्युत्पन्नविनाशद्वारमभिधातुकाम आह-

नि.[६९] होंति पडुप्पन्नविनासणंमि गंधव्विया उदाहरणं।
सीसोऽवि कत्थवि जइ अज्झोवज्जिज्ज तो गुरुणा ॥

वृ. भवन्ति प्रत्युत्पन्नविनाशने विचार्ये गान्धर्विका उदाहरणं लौकिकमिति। तत्र प्रत्युत्पन्नस्य वस्तुनो विनाशनं प्रत्युत्पन्नविनाशनं तस्मिन्निति समासः।

गान्धर्विका उदाहरणमिति यदुक्तं तदिदम्-जहा एगम्मि नगरे एगो वाणियओ, तस्स बहुयाओ भयणीओ भाइणिज्जा भाउज्जायाओ य, तस्स घरसमीवे राउलिया गंधव्विया संगीयं करेंति दिवसस्स तिन्नि वारे, ताओ वणियमहिलाओ तेन संगीयसद्देणतेसु गंधव्विएसु अज्झोववन्नाओ किंचि कम्मादानं न करेंति, पच्छा तेन वाणियएण चिंतियं-जहा विणट्ठा एयाओत्ति, को उवाओ होज्जा ? जहा न विनस्सेंतित्ति काउं मित्तस्स कहियं, तेन भण्णइ-अप्पणो घरसमीवे वाणमंतरं करावेहि, तेन कयं, ताहे पाडहियाणं रूवए दाउं वायावेइ, जाहे गंधव्विया संगीययं आढवेंति ताहे ते पाडहिया पडहे दिंति वंसादिणो य फुसंति गायंति य, ताहे तेसिं गंधव्वियाणं विग्धो जाओ, पडहसद्देण य न सुव्वइ गीयसद्दो, तओ ते राउले उवट्ठिया, वाणिओ सद्दाविओ, किं विग्धं करेसित्ति ? भणइ-मम घरे देवो, अहं तस्स तिन्नि वेला पडहे दवावेमि, ताहे ते भणिया-जहा अन्नत्थ आयह, किं देवस्स दिवे दिवे अंतराइयं कज्जइ ? एवं आयरिएणवि सीसेसु अगारीसु अज्झोववज्जमाणेसु तारिसो उवाओ कायव्वो जहा तेसिं दोसस्स तस्स निवारणा हवइ, मा ते चिंतादिएहिं नरयपडणादिए अवाए पावेहिंति, उक्तं च-

"चिंतेइ दट्ठुमिच्छइ दीहं नीससइ तह जरो दाहो।
भत्तरोयग मुच्छा उम्मत्तोन याणई मरणं ॥१॥
पढमे सोयई वेगे दट्ठुं तं गच्छई बिईयवेगे।
नीससइ तइयवेगे आरुहइ जरो चउत्थंमि ॥२॥
डज्झइ पंचमवेगे छट्ठे भत्तं न रोयए वेगे।
सत्तमियंमि य मुच्छा अट्ठमए होइ उम्मत्तो ॥३॥
नवमे न याणइ किंचि दसमे पाणेहिं मुच्चइ मनूसो।
एएसिमवाणाणं सीसे रक्खंति आयरिया ॥४॥
परलोइया अवाया भग्गपइण्णा पडंति नरएसु।
ण लहंति पुणो बोहिं हिंडंति य भवसमुद्दंमि ॥५॥"

अमुमेवार्थं चेतस्यारोप्याह-'शिष्योऽपि' विनयोऽपि 'क्वचित्' विलयादौ 'यदी' त्यभ्यु-पगमदर्शने 'अभ्युपपद्येत' अभिष्वङ्गं कुर्यादित्यर्थः ततो 'गुरुणा' आचार्येण, किम्?-गाथा-

नि.[७०] वारेयव्वु उवाएण जइवा वाउलिओ वदेज्जाहि।
सव्वेऽवि नत्थि भावा किं पुन जीवो स वोत्तव्वो ॥

वृ. 'वारयितव्यो' निषेद्धव्यः, किं यथाकथञ्चित् ? नेत्याह-'उपायेन' प्रवचन-प्रतिपा-

दितेन, यथाऽसौ साम्यग्वर्त्तत इति भावार्थः। एवं तावल्लौकिकं चरणकरणानुयोगं चाधिकृत्य व्याख्यातं प्रत्युत्पन्नविनाशद्वारम्, अधुना द्रव्यानुयोगमधिकृत्याह- यदिवा 'वातूलिको' नास्तिको वदेत्, किं ?- 'सर्वेऽपि' घटपटादयः 'नत्थि'त्ति प्राकृतशैल्या न सन्ति 'भावाः' पदार्थाः किं पुनर्जीवः ?, सुतरां नास्तीत्यभिप्रायः, 'स वक्तव्यः' सोऽभिधातव्यः, किमित्याह-

नि.[७१] जं भणसि नत्थि भावा वयणमिणं अत्थि नत्थि ?

जइ अत्थि। एव पइन्नाहानी असओ नु निसेहए को नु !॥

वृ. 'यद्भणसि' यद्ब्रवीषि 'न सन्ति भावा' न विद्यन्ते पदार्था इति, 'वचनमिदं' भावप्रतिषेधकमस्ति नास्तीति विकल्पौ ?, किं चातो ?, यद्यस्ति एवं प्रतिज्ञाहानिः, प्रतिषेधवचनस्यापि भावत्वात्, तस्य च सत्त्वादिति भावार्थः, द्वितीयं विकल्पमधिकृत्याह- 'असतो नु'त्ति अथासन्निषेधते को नु ?, निषेधवचनस्यैवासत्त्वादित्यमभिप्राय इति गाथात्रयार्थः॥

यदुक्तम्- 'किं पुनर्जीवः' इत्यत्रापि प्रत्युत्पन्नविनाशमधिकृत्याह-

नि.[७२] नो य विवक्खापुव्वो सद्दोऽजीवुब्भवोत्ति न य सावि।

जमजीवस्स उ सिद्धो पडिसेहधणीओ तो जीवो॥

वृ. चशब्दस्यैवकारार्थत्वेनावधारणार्थत्वात् 'न च' नैव 'विवक्षापूर्वो' विवक्षाकारणः इच्छाहेतुरित्यर्थः, 'शब्दो' ध्वनिः 'अजीवोद्भवः' अजीवप्रभव इत्यर्थः, विवक्षापूर्वकश्च जीवनिषेधकः शब्द इती, मा भूद्विवक्षाया एव जीवधर्मत्वासिद्धिरित्यत आह- 'न च' नैव 'सापि' विवक्षा 'यद्' यस्मात् कारणाद् 'अजीवस्य तु' अजीवस्यैव, घटादिष्वदर्शनात्, किन्तु मनस्त्व-परिणता-(त्य)न्वितत्तद्रव्यसाचिव्यतो जीवस्यैव, यतश्चैवमतः 'सिद्धः' प्रतिष्ठितः 'प्रतिषेधध्वनेः' नास्ति जीव इति प्रतिषेधशब्दादेवेत्यर्थः, 'ततः' तस्मात् 'जीव' आत्मेति, अत्र बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति गाथार्थः॥ व्याख्यातं प्रत्युत्पन्नविनाशद्वारं, तदन्वाख्यानाच्चोदाहरणमिति मूलद्वारम्, अधुना तद्देशद्वारावयवार्थमभिधित्सुराह-

नि.[७३] आहरणं तद्देसे चउहा अनुसट्ठि तह उवालंभो।

पुच्छा निस्सावयणं होइ सुभद्दाऽनुसट्ठीए॥

वृ. उदाहरणमिति पूर्ववद्, उपलक्षणं चेदमत्र, तथा चाह- तस्य देशस्तद्देश उदाहरण-देश इत्यर्थः, अयं 'चतुर्द्धा' चतुष्प्रकारः, तदेव चतुष्प्रकारत्वमुपदर्शयति- अनुशासनमनुशास्तिः- सद्गुणोत्कीर्तनेनोपबृंहणमीत्यर्थः, तथोपालम्भनमुपालम्भः- भङ्ग्यैव विचित्रं भणनमित्यर्थः, पृच्छा-प्रश्नः किं कथं केनेत्यादि, निश्रावचनम्-एकं कञ्चन निश्राभूतं कृत्वा य विचित्रो-क्तिरसौ निश्रावचनमिति। तत्र भवति सुभद्रा नाम श्राविकोदाहरणम्, क्व ?- अनुशास्ताविति।

तत्थ अनुसट्ठीए सुभद्दा उदाहरणं- चंपाए नयरीए जिनदत्तस्स सुसावगस्स सुभद्दा नाम धूया, सा अईव रूववई सा य तच्चन्नियउवासएण दिट्ठा, सो ताए अज्झोववन्नो, तं मग्गई, सावगो भणइ- नाहं मिच्छादिट्ठिस्स धूयं देमि, पच्छा सो साहूणा समीवं गओ धम्मो य अनेन पुच्छिओ, कहिओ साहूहिं, ताहे कवडसानयधम्मं पगाहिओ, तत्थ य से सब्भावेणं चेव उवगओ धम्मो, ताहे तेन साहूणं सब्भावो कहिओ, जहा मए कवडेणं दारियाए कए, णं नायं जहा कवडेणं कज्जहित्ति, अन्नमियाणि देह मे अनुव्वयाइं, लोगे स पयासो सावओ जाओ, तओ काले गए

वरया मालया पइवेइ, ताहे तेन जिनदत्तेन सावओत्तिकाऊण सुभद्दा दिन्ना, पाणिग्गहणं वत्तं, अन्नया सो भणइ-दारियं घरं नेमि, ताहे तं सावओ भणइ-तं सव्वंउवासयकूलं, एसा तं नाणुवत्तिहिति,पच्छा छोभयं वा लभेज्जसि, निब्बंधे विसज्जिया, नेऊण जुगयं घरं कयं, सासूनणंदाओ पउट्ठाओ भिक्खूण भत्ति न करेइत्ति, अन्नया ताहिं सुभद्दाए भत्तारस्स अक्खायं-एसा य सेअत्तडेहिं समं संसत्ता, सावओ न सद्दहेइ, अन्नया खमगस्स भिक्खागयस्स अच्छिंमि कणुओ पविट्ठो, सुभद्दाए जिब्भाए सो किणुओ फेडिओ, सुभद्दाए चीणपिट्ठेण तिलओ कओ, सो अ खमगस्स निलाडे लग्गो, उवासियाहिंसावयस्स दरिसिओ, सावएण पत्तीयं, न तहा अनुयत्तइ, सुभद्दा चिंतेइ-किं अच्छेरयं ? जं अहं गिहत्थी छोभगं लभामि, जं पवयणस्स उड्डाहो एयं मे दुक्खइत्ति, सा रत्तिं काउस्सग्गेण ठिया, देवो आगओ, संदिसाहि किं करेमि ?, सा भणइ-एअं मे अयसं पमज्जाहित्ति, देवो भणइ-एवं हवउ, अहमेयस्स नगरस्स चत्तारि दाराइं ठवेहामि, घोसणयं च घोसेहामित्ति, जहा-जा पइव्वया होइ सा एयाणि दाराणि उग्घाडेहिति, तत्थ तुमं चेव ऐगा उग्घाडेसी तानि य कवाडाणि, सयणस्स पच्चयनिमित्तं चालनीए उदगं छोढूण दरिसिज्जासि, तओ चालणी फुसियमवि न गिलिहिति, एवं आसासेऊण निग्गओ देवो, नयरदाराणि अनेन ठवियाणी, नायरजनो य अद्दन्नो, इओ य आगासे वाया 'नागरजना मा निरत्थयं किलिस्सह, जा सीलवई चालणीए छूढं उदगं न गिलति सा तेन उदगेन दारं अच्छोडेइ, तओ दारं उग्घाडिज्जिस्सत्ति', तत्थ बहुयाओ सेट्ठिसत्थवाहादीणं धूयसुणहाओ न सक्कंति पलयंपि लहिउं, ताहे सुभद्दा सयणं आपुच्छइ, अविसज्जंताण य चालणीए उदयं छोढूण तेसिं पाडिहेरं दरिसेइ, तओ विसज्जिया, उवासिआओ एवं चिंतिउमाढत्ताओ-जहा एसा समणडपिलेहिया उग्घाडेहिति, ताए चालणीए उदयं छूढं, न गिलइत्ति पिच्छित्ता विसन्नाओ, तओ महाजनेन सक्कारिज्जंती तं दारसमीवं गया, अरहंताणं नमोकाऊण उदएण अच्छोडिया कवाडा,महया सद्देणं कोंकारवं करेमाणा तिन्नि वि गोपुरदारा उग्घाडिया, उत्तरदारं चालणिणाणिएणं अच्छोडेऊण भणइ-जा मया सरिसी सीलवई होहिति सा एवं दारकउग्घाडेहिति, तं अज्जवि ढक्कियं चेव अच्छइ, पच्छा नायरजनेन साहुकारो कओ-अहो महासईत्ति, अहो जयइ धम्मोत्ति। एवं लोइयं, चरणकरणानुओगं पुन पडुच्च वेयावच्चादिसु अनुसासियव्वा, उज्जुत्ता अनुज्जुत्ता य संठवेयव्वा जहा सीलवंताणं इह लोए एरिसं फलमिति। अमुमेवार्थमुपदर्शयन्नाह-

नि.[७४] साहुक्कारपुरोगं जह सा अनुसासिया पुरजणेणं।
वेयावच्चाईसु वि एव जयंते नुवोहेज्जा॥

वृ.साधुकारपुरःसरं यथा सुभद्रा 'अनुशासिता' सद्गुणोत्कीर्त्तनेनोपबृंहिता, केन ?-'पुरजनेन' नागरिकलोकेन, वैयावृत्त्यादिष्वपि-आदिशब्दात् स्वाध्यायादिपरिग्रहः, 'एवं' यथा सा सुभद्रा 'यतमानान्' उद्यभवतः, किम् ?-उपबृंहयेत्, सद्गुणोत्कीर्त्तनेन तत्परिणामवृद्धिं कुर्यात्, यथा

"भरहेणवि पुव्वभवे वेयावच्चं कयं सुविहियाणं।
सो तस्स फलविवागेन आसी भरहाहिवो राया॥१॥
भुंजित्तु भरहवासं सामण्णमनुत्तरं अनुचरित्ता।
अट्ठविहकम्ममुक्को भरहनरिंदो गओ सिद्धिं॥"

इति गाथार्थः ॥ उदाहरणदेशता पुरस्योदाहृतैकदेशस्यैवोपयोगित्वात्तेनैव चोपसंहारात्, तथा च अप्रमादवद्भिः साधूनां कण्टुकापनयनादि कर्त्तव्यमिति विहायानुशास्त्योपसंहारमहा, वैयावृत्त्यादिष्वपि देशेनैवोपसंहारः, गुणान्तररहितस्य भरतादेर्निश्चयेन तदकरणादिति भावनीय-मिति, एवं तावद्धर्मकथं किकं चरणकरणानुयोगं चाधिकृत्योक्तं तद्देशद्वारे अनुशास्तिद्वारम्, अधुना द्रव्यानुयोगमधिकृत्य दर्शयति-

**नि.[७५]** जेसिंपि अत्थि वत्तव्वा तेऽवि अम्हवि स अत्थि।
किंतु अकत्ता न भवइ वेययइ जेन सुहदुक्खं।

वृ. 'येषामपि' द्रव्यास्तिकादिनयमतावलम्बिनां तन्त्रान्तरीयाणां किम्? - 'अस्ति' विद्यते 'आत्मा' जीवः वक्तव्याः 'तेऽपि' तन्त्रान्तरीयाः, साध्वेतत् अस्माकमप्यस्ति सः, तदभावे सर्व-क्रियावैकल्यात्, किन्तु 'अकर्त्ता न भवति' सुकृतदुष्कृतानां कर्मणामकर्त्ता न भवति अनिष्पादको न भवति, किन्तु? कर्तैव, अत्रैवोपपत्तिमाह- 'वेदयते' अनुभवति 'येन' कारणेन, किम्?- 'सुखदुःख' सुकृतदुष्कृतकर्मफलमिति भावः॥ न चाकर्तुरात्मनस्तदनुभावो युज्यते, अति-प्रसङ्गात्, मुक्तानामपि सांसारिकसुखदःखवेदनाऽऽपत्तेः, अकर्तृत्वाविशेषात्, प्रकृत्यादि-वियोगस्याप्यनाधेयातिशयमेकान्तेनाकर्त्तारमात्मानं प्रत्यकिञ्चित्करत्वाद्, अलं विस्तरेणेति -गाथार्थः। उदाहरणदेशता त्वत्राप्युदाहृतस्यैकदेशेनैवोपसंहारात् तत्रैव चासंप्रतिपत्तौ समर्थनाय निदर्शनाभिधानादिति। गतमनुशास्तिद्देशद्वारम्, अधुनोपालम्भद्वारविवक्षयाऽऽह-

**नि.[७६]** उवलम्भम्मि मिगावइ नाहियवाईवि एव वत्तव्वो।
नत्थित्ति कुविन्नाणं आयाऽभावे सइ अजुत्तं॥

वृ. उपालम्भे प्रतिपाद्ये मृगावतिदेव्युदाहरणम्। एयं च जहा आवस्सए दव्वपरंपराए भणियं तहेव दट्ठव्वं, जाव पव्वइया अज्जचंदनाए सिस्सिणी दिन्ना। अन्नया भगवं विहरमाणो कोसंबीए समोसरिओ, चंदादिच्चा सविमानेहिं वंदिउं आगया, चउपोरसीयं समोसरणं काउं अत्थमणकाले पडिगया, तओ मिगावई संभंता, अयि! वियालीकयंति भणिऊणं साहुणीसहिया जाव अज्जचंदणासगासं गया, ताव य अंधयारयं जायं, अज्जचंदनापमुहाहि साहुणीणं ताव पडिक्कंतं, ताहे सा मिगावई अज्जा अज्जचंदणाए उवालब्भइ, जहा एवं नाम तुमं उत्तमकुलप्पसूया होइऊण एवं करेसि?, अहो न लट्ठयं, ताहे पणमिऊण पाएसु पडिया, परमेण विणएण खामेइ, खमह मे एगमवराहं, नामं पुणो एवं करेहामित्ति। अज्जचंदना य किल तंमि समए संथारेवगया पसुत्ता, इयरीए वि परमसंवेगगयाए केवलनाणं समुप्पन्नं, परमं च अंधयारं वट्टइ, सप्पो य तेनंतरेन आगच्छइ, पव्वत्तिनीए य हत्थो लंबमाणो तीए उप्पाडिओ, पडिबुद्धा य अज्जचंदना, पुच्छिया- किमेयं?, सा भणइ- दीहजाइओ, कहं तुमं जाणसि? किं कोइ अति-सओ? आमंति, पडिवाइ अप्पडिवाइत्ति पुच्छिया सा भणइ- अप्पडिवाइत्ति, तओ खामिया।

लोगलोगुत्तरसाहरणमेयं। एवंपमायंतो सीसो उवालंभेयव्वोत्ति। उदाहरणदेशता पूर्व-वद्योजनीयेति। एवं तावच्चरणकरणानुयोगमधिकृत्य जीवनास्तित्वप्रतिपाद इत्यर्थः एवं 'वक्तव्यः' अभिधातव्यः- 'नास्ति' न विद्यते, कः? प्रकरणाज्जीव इति, एवंभूतं 'कुविज्ञानं' जीवसत्ताप्रतिषेधावभासीत्यर्थः, आत्माऽभावे सति न युक्तम्, आत्मधर्मत्वाद् ज्ञानस्येति भावना,

भूतधर्मता पुनरस्य धर्म्यननुरूपत्वादेव न युक्ता, तत्समुदायकार्यताऽपि प्रत्येकं भावाभाव-विकल्प-द्वारेण तिरस्कर्त्तव्येति गाथार्थः ॥ अमुमेवार्थं समर्थयन्नाह-

नि.[७७] अत्थित्ति जा वियक्का अहवा नित्थित्ति जं कुविन्नाणं।
अच्चंताभावे पोग्गलस्स एयं चिअ न जुत्तं।

वृ. अस्ति जीव इति एवंभूता या वितर्काऽथवा 'नास्ति' न विद्यत इति एवंभूतं यत्कुविज्ञानं लोकोत्तरापकारि अत्यन्ताभावे 'पुद्गलस्य' जीवस्य 'इदमेव न युक्तम्' इदमेवान्याय्यं। भावना पूर्ववदिति गाथार्थः ॥ अधुना शेषद्वारद्वयं व्याचिख्यासुराह-

नि.[७८] पुच्छाए कोणिओ खलु निस्सावयणंमि गोयमस्सामी।
नाहियवाइं पुच्छे जीवत्थित्तं अनिच्छंतं॥

वृ. 'पृच्छायां' प्रश्न इत्यर्थः, 'कोणिकः' श्रेणिकपुत्रः खलूदाहरणम्। जहा तेन सामी पुच्छिओ-चक्कवट्टिणो अपरिचत्तकामभोगा कालमासे कालं किच्चा कहिं उववज्जंति?, सामिणा भणियं-अहे सत्तमीए चक्कवट्टिणो उववज्जंति, ताहे भणइ-अहं कत्थ उववज्जिस्सामि?, सामिणा भणियं-तुमं छट्ठीपुढवीए, सो भणइ अहं सत्तमीए किं न उववज्जिस्सामि?, सामिणा भणियं-सत्तमीए चक्कवट्टिणो उववज्जंति, ताहे सो भणइ-अहं किं न होमि चक्कवट्टी? ममवि चउरासी दन्तिसयसहस्साणि, सामिणा भणियं-तव रयणाणि निहीओ य नत्थि, ताहे सो कित्तिमाई रयणाइं करित्ता ओयवेउमाढत्तो, तिमिसगुहाए पविसिउं पवत्तो, भणिओ य किरिमालएणं-वोलीणा चक्कवट्टिणो बारसवि, विनस्सिहिसि तुमं, वारिज्जंतो विन ठाई, पच्छा कयमालएण आहओ, मओ य छट्ठिं पुढविं गओ, एयं लोइयं। एवं लोगुत्तरेवि बहुस्सुआ आयरिया अट्ठाणि हेऊ य पुच्छियव्वा, पुच्छित्ता य सक्कणिज्जाणि समायरियव्वाणि, असक्कणिज्जाणि परिहरियव्वाणि, भणियं च-

"पुच्छह पुच्छावेह य पंडियए साहवे चरणजुत्ते।
मा मयलेवविलित्ता पारत्तहियं न याणिहिह॥"

उदाहरणदेशता पुनरस्याभिहितैकदेश एव प्रष्टुर्ग्रहात् तेनैव चोपसंहारादिति। एवं तावच्च-रणकरणानुयोगमधिकृत्य व्याख्यातं पृच्छाद्वारम्, अधुनैतत्प्रतिबद्धां द्रव्यानुयोगवक्तव्यतामपास्य गाथोपन्यासानुलोमतो निश्रावचनमभिधातुकाम आह-'निश्रावचने' निरूप्ये गौतमस्वाम्युदाहरण-मिति। एत्थ गागलिमादी जहा पव्वइया तावसा य एवं जहा वइरसामिउप्पत्तीए आवस्सए तहा ताव नेयं जाव गोयमसामिस्स किल अधिई जाया। तत्थ भगवया भण्णइ-चिरसंसट्ठोऽसि मे गोयमा! चिरपरिचितोऽसि मे गोयमा! चिरभाविओऽसि मे गोयमा! तं मा अधिइं करेहि, अंते दोन्निवि तुल्ला भविस्सामो, अन्ने य तन्निस्साए अनुमासिया दुमपत्तए अज्झयणित्ति। एवं जे असहणा विनेया ते अन्ने मद्दवसंपन्ने निस्सं काऊण तहाऽनुसासियव्वा उवाएण जहा सम्मं पडिवज्जंति। उदाहरणदेशता त्वस्य देशेन-प्रदर्शितलेशत एव तथानुशासनाद्। एवं तावच्चरण-करणानुयोगमधिकृत्य व्याख्यातं पृच्छानिश्रावचनद्वारद्वयम्, अधुना द्रव्यानुयोगमधिकृत्य व्याख्यायते-तत्रेदं गाथादलम्-'नाहियवाइ' मित्यादि, 'नास्तिकवादिनं' चार्वाकं पृच्छेज्जीवा-स्तित्वमनिच्छन्तं सन्तमिति गाथार्थः ॥ किं पृच्छेत्?-

नि.[ ७९ ] केणंति नत्थि आया जेन परोक्खोत्ति तव कुविन्नाणं।
होइ परोक्खं तम्हा नत्थित्ति निसेहए को नु ? ॥

वृ. 'केनेति' केन हेतुना ? 'नास्त्यात्मा' न विद्यते जीव इति पृच्छेत्, स चेद् ब्रूयात् 'येन परोक्ष' इति येन प्रत्यक्षेण नोपलभ्यत इत्यर्थः, स च वक्तव्यः-भद्र ! तव 'कुविज्ञानं' जीवास्तित्वनिषेधकध्वनिनिमित्तत्वेन तन्निषेधकं भवति परोक्षम्, अन्यप्रमातृणामिति गम्यते, 'तस्माद् भवदुपन्यस्तयुक्त्या नास्तीति कृत्वा निषेधते को नु?, विवक्षाऽभावे विशिष्टशब्दानुत्पत्तेरिति गाथार्थः ॥ उदाहरणदेशता चास्य पूर्ववादिति गतं पृच्छाद्वारम् ॥

नि.[८०] अन्नावएसओ नाहियवाई जेसिँ नत्थि जीवो उ।
दानाइफलं तेसिं न विज्जइ चउह तद्दोसं ॥

वृ. 'अन्यापदेशतः' अन्यापदेशेन 'नास्तिकवादी' लोकायतो वक्तव्य इति शेषः, अहो धिक्कष्टं 'येषां' वादिनां 'नास्ति जीव एव' न विद्यते आत्मैव 'दानादिफलं तेषां न विद्यते' दानहोमयागतपःसमाध्यादिफलं-स्वर्गापवर्गादि तेषां-वादिनां न विद्यते-नास्तीत्यर्थः। कदाचित्त एवं श्रुत्वैवं ब्रूयुः-मा भवतु, का नो हानिः ?, 'न ह्यभ्युपगमा एव बाधायै भवन्ती'ती, ततश्च सत्त्ववैचित्र्यान्यथानुपपत्तितस्ते सम्प्रतिपत्तिमानेतव्याः, इत्यलं विस्तरेण, गमनिकामात्रमेतद्, उदाहरणदेशता चरणकरणानुयोगानुसारेण भावनीयेति। गतं निश्राद्वारं, तदन्वाख्यानाच्च तद्देश-द्वारम्, अधुना तद्दोषद्वारावयवार्थप्रचिकटयिषयोपन्यासार्थं गाथावयवमहा-'चउह तद्दोसं' चतुर्धा तद्दोष-इति उदाहरणदोषः, अनुस्वारस्त्वलाक्षणिकः, अथवोदाहरणेनैव सामानाधिकरण्यं, ततश्च तद्दोषमिति तस्योदाहरणस्यैव दोषा यस्मिंस्तत्तद्दोषमिति गाथार्थः ॥ उपन्यस्तं चातुर्विध्यं -

नि.[८१] पढमं अहम्मजुत्तं पडिलोमं अत्तणो उवन्नासं।
दुरुवणियं तु चउत्थं अहम्मजुत्तंमि नलदामो ॥

वृ. 'प्रथमम्' आद्यम् 'अधर्मयुक्तं' पापसम्बद्धमित्यर्थः, तथा 'प्रतिलोमं' प्रतिकूलम्, 'आत्मन उपन्यास' इति आत्मन एवोपन्यासः-तथानिवेदनं यस्मिन्निति, 'दुरुपनीतं चेति दुष्टमुपनीतं-निगमितमस्मिन्निति चतुर्थमिदं वर्तते, अमीषामेव यथोपन्यासमुदाहरणै-र्भावार्थमुपदर्शयती-अर्धमयुक्ते नलदामः कुविन्दः, लौकिकमुदाहरणमिति गाथाक्षरार्थः ॥

पर्यन्तावयवार्थः कथानकादवसेयः तच्चेदम्-

चाणक्केन नंदे उत्थाइए चंदगुत्ते रायाणए ठविए एवं सव्वं वण्णित्ता जहा सिक्खाए, तत्थ नंदसंतिएहिं मणुस्सेहिं सह चोरग्गाहो मिलिओ, नगरं मुसइ, चाणक्को ऽवि अन्नं चोरग्गाहं ठविउ-कामो तिदंडं गहेऊण परिवायगवेसेण नयरं पविट्ठो, गओ नलदामकोलियसगासं, उवविट्ठो वणणसालाए अच्छइ, तस्स दारओ मक्कोडएहिं खइओ, तेन कोलिएण बिलं खणित्ता दड्ढा, ताहे चाणक्केन भण्णइ-किं एए डहसि ?, कोलिओ भणइ-जइ एए समूलजाला न उच्छाइज्जंति, तो पुणोऽवि खाइस्संति, ताहे चाणक्केन चिंतियं-एस मए लद्धो चोरग्गाहो, एस नंदतेनया समूलया उद्धरिस्सिहिइत्ति चोरग्गाहो कओ, तेन तिखंडिया विसंभिया अम्हे संमिलिया मुसामोत्ति, तेहिं अन्नेवि अक्खाया जे तत्थ मुसगा, बहुया सुहतरागं मुसामोत्ति, तेहिं अन्नेवि अक्खाया, ताहे ते तेन चोरग्गाहेण मिलिऊण सव्वेऽवि मारिया। एवं अहम्मजुत्तं न भाणियव्वं, न य कायव्वंति। इदं तावल्लौकिकम्,

अनेन लोकोत्तरमपि चरणकरणानुयोगं चाधिकृत्य सूचितमवगन्तव्यम्, 'एकग्रहणे तज्जातीयग्रहणमिति न्यायात् तत्र चरणकरणानुयोगेन।

"नेवं अहम्मजुत्तं कायव्वं किंचि भाणियव्वं वा।
थोवगुणं बहुदोसं विसेसओ ठाणपत्तेणं॥"

जम्हा सो अन्नेसिंपि आलंबणं होइ'। द्रव्यानुयोगे तु-

"वादंम्मि तहारूवं विज्जाय बलेण पवयणट्ठाए।
कुज्जा सावज्जं पिहु जह मोरीणउलिमादीसु॥"

'सो परिवायगो विलक्खीकओ त्ति'। उदाहरणदोषता चास्याधर्मयुक्तत्वादेव भावनीयेति। गतमधर्मयुक्ताद्वारम्, अधुना प्रतिलोमद्वारावयवार्थव्याचिख्यासयाऽऽह-

नि.[८२] पडिलोमे जह अभओ पज्जोयं हरइ अवहिओ संतो।
गोविंदवायगोऽवीय जह परपक्खं नियत्तेइ॥

वृ.'प्रतिलोमे' उदाहरणदोषे यथा 'अभयः' अभयकुमारः प्रद्योतं राजानं हृतवान्‌अपहृतः सन्निति, एतद् ज्ञापकम्, इह च त्रिकालगोचरसूत्रदर्शनार्थो वर्त्तमाननिर्देश इत्यक्षरार्थः। भावार्थः कथानकादवसेयः, तच्च यथाऽऽवश्यके शिक्षायां तथैव द्रष्टव्यमिति। एवं तावल्लौकिकं प्रतिलोमं, लोकोत्तरं तु द्रव्यानुयोगमधिकृत्य सूचयन्नाह-'गोविंदे'त्यादि गाथादलम्, अनेन चरणकरणानुयोगमप्यधिकृत्य सूचितमवगन्तव्यम्, आद्यान्तग्रहणे तन्मध्यपतितस्य तद्ग्रहणे-नैव ग्रहणात्, तत्र चरणकरणे।

"नो किंचि य पडिलोमं कायव्वं भवभएण मन्नेसि।
अविनीयसिक्खगाण उ जयणाइ जहोचिअं कुज्जा॥"

द्रव्यानुयोगे तु गोपेन्द्रवाचकोऽपि च यथा परपक्षं निवर्तयतीत्यर्थः। सो य किर तच्चण्णिओ आसि, विनासनी मित्तं पव्वइओ, पच्छा भावो जाओ, महावादी जात इत्यर्थः। सूचकमिदम्,

"दव्वट्ठियस्स पज्जवणयट्ठियमेयं तु होइ पडिलोमं।
सुहदुक्खाइअभावं इयरेनियरस्स चोइज्जा॥१॥
अन्ने उ दुट्ठवादिम्मि, किंचि बूया उ किल पडिकूलं।
दोरासिपइण्णाइ तिन्नि जहा पुच्छ पडिसेहो॥२॥

उदाहरणदोषता त्वस्य प्रथमपक्षे साध्यार्थासिद्धेः, द्वितीयपक्षे तु शास्त्रविरुद्धभाषणादेव भावनीयेति गाथार्थः॥ गतं प्रतिलोमद्वारम्, इदानीमात्मोपन्यासद्वारं विवृण्वन्नाह-

नि.[८३/१] अत्तउवन्नासंमि य तलागभेयंमि पिंगलो थवइ।

वृ.आत्मन एवोपन्यासो-निवेदनं यस्मिंस्तदात्मोपन्यासं तत्र च तडागभेदे पिङ्गलस्थपतिः उदाहरणमित्यक्षरार्थः॥ भावार्थः कथानकगम्यः तच्चेदम्-इह एगस्स रन्नो तलागं सव्वरज्जस्स सारभूअं, तं च तलागं वरिसे वरिसे भरियं भिज्जइ, ताहे राया भणइ-को सो उवाओ होज्जा? जेण तं न भिज्जेज्जा, तत्थ एगो कविलओ मनूसो भणइ-जइ नवरं महाराय! इत्थ पिंगलो कविलियाओ से दाढियाओ सिरं से कविलियं सो जीवंतो चेव जंमि ठाणे भिज्जइ तंमि ठाणे निक्खमइ, तो नवरं न भिज्जइ, पच्छा कुमारामच्चेण भणियं-महाराय! एसो चेव एरिसो जारिसयं

भणइ, एरिसो नत्थि अन्नो, पच्छाअ सो तत्थेव मारेत्ता निक्खित्तो। एवं एरिसं न भाणियव्वं जं अप्पवहाए भवइ। इदं लौकिकम्, अनेन च लोकोत्तरमपि सूचितम्, एक-ग्रहणे तज्जातीय-ग्रहणात्, तत्र चरणकरणानुयोगे नैवं ब्रूयात् यदुत-

"लोइयधम्माओविहु जे पब्भट्ठा नराहमा ते उ।

कह दव्वसोयरहिया धम्मस्साराहया हौंति ?॥ इत्यादि।

द्रव्यानुयोगे पुनरेकेन्द्रिया जीवाः, व्यक्तोच्छ्वासनिश्वासादिजीवलिङ्गसद्भावात्, घटवत्, इह ये जीवा न भवन्ति न तेषु व्यक्तोच्छ्वासनिश्वासादिजीवलिङ्गसद्भावो, यथा घटे, न च तथै-तेष्वसद्भाव इति, तस्माज्जीवा एवैत इति, अत्रात्मनोऽपि तद्रुपाऽऽपत्यात्मोपन्यासत्वं-भावनीयमिति। उदाहरण दोषता चास्यात्मोपघातजनकत्वेन प्रकटार्थैवेति न भाव्यते।

गतमा त्मोपन्यासद्वारम्, अधुना दुरुपनीतद्वारं व्याचिख्यासुराह-

नि.[८३/२] अनिमिसगिण्हण भिक्खुग दुरुवणीए उदाहरणं॥

वृ.अत्रानिमिषा-मत्स्यास्तद्ग्रहणे भिक्षुरुदाहरणम्, इदं च लौकिकम्, अनेन चोक्तन्या-याल्लोकोत्तरमप्याक्षिप्तं वेदितव्यमिति गाथादलाक्षरार्थः॥ भावार्थः कथानकादवसेयः, तच्चेदम्-कील कोइ तच्चणिओ जालववाडकरो मच्छगवहाए चलिओ, धुत्तेण भण्णइ-आयरिय! अघना ते कंथा, सो भणइ जालमेतमित्यादि श्लोकादवसेयम-"कन्थाऽऽचार्याघना ते ननु शफरवधे जालमश्नासि मत्स्यान्?, ते मे मद्योपदंशान् पिबसि ननु? युतो वेश्यया यासि वेश्याम्?। कृत्वाऽरीणां गलेऽङ्घ्री क्व नु तव रिपवो? येषु सन्धिं छिनद्मि, चौरस्त्वं? द्यूतहेतोः कितव इति कथं? येन दासीसुतोऽस्मि॥१॥ इदं लौकिकं, चरणकरणानुयोगे तु-

इय सासणस्सऽवण्णो जायइ जेणं न तारिसं बूया।

वादेवि उवहसिज्जइ निगमणओ जेण तं चेव॥१॥

उदाहरणदोषता पुनरस्य स्पष्टैवेति। गतं दुरुपनीतद्वारं, मूलद्वाराणां चोदाहरणदोषद्वार-मिति, साम्प्रतमुपन्यासद्वारं व्याख्यायते, तत्राह-

नि.[८४] चत्तारि उवन्नासे तव्वत्थुग अन्नवत्थुगे चेव।

पडिनिभए हेउम्मि य हौंति इणमो उदाहरना॥

वृ. चत्वारः 'उपन्यासे' विचार्ये अधिकृते वा, भेदा भवन्ति इति शेषः, ते चामीसूचनात् सूत्र मितिकृत्वा तथाधिकारानुवृत्तेश्च तद्वस्तूपन्यासस्तथा तदन्यवस्तुपन्यासः तथा प्रतिनिभोपन्यासः तथा हेतूपन्यासश्च। तत्रैतेषु भेदेषु भवन्ति 'अमूनि' वक्ष्यमाणान्युदाहरणानीति गाथार्थः॥ भावार्थस्तु प्रतिभेदं स्वयमेव वक्ष्यति निर्युक्तिकारः। तत्राद्यभेदव्याख्यानं-

नि.[८५/१] तव्वत्थुयंमि पुरिसो सव्वं भमिऊण साहइ अपुव्वं।

वृ. 'तद्वस्तुके' तद्वस्तूपन्यास इत्यर्थः, पुरि शयनात्पुरुषः 'सर्वं भ्रान्त्वा' सर्वमाहिण्ड्य किम्?-कथयति अपूर्वम्, वर्त्तमाननिर्देशः पूर्ववदिति गाथादलार्थः॥ भावार्थः कथानका-दवसेयः तच्चेदम्-एगम्मि देवकुले कप्पडिया मिलिया भणंति-केण भे भमन्तेहिं किंचि अच्छेरियं दिट्ठं?, तत्थ एगो कप्पडिगो भणइ मए दिट्ठंति, जइ पुण एत्थ समणोवासओ नत्थि तो साहेमि,

तओ सेसेहिं भणियं- नत्थित्थ समणोवासओ, पच्छा सो भणइ- मए हिंडतेनं पुव्ववेतालीए समुद्दस्स तडे रुक्खो महइमहंतो दिट्ठो, तस्सेगा साहा समुद्दे पइट्ठिया, एगा य थले, तत्थ जाणि पत्ताणि जले पडंति ताणि जलचराणि सत्ताणि हवंति, जाणि थले ताणि थलचराणि हवंति, ते कप्पडिया भणंति- अहो अच्छेरयं देवेन भट्टारएण निम्मियंति, तत्थेगो सावगो कप्पडिओ, सो भणइ- जाणि अद्धमज्झे पडंति ताणि किं हवंति ?, ताहे सो खुद्धो भणइ- भया पुव्वं चेव भणियं- जइ सावओ नत्थि तो कहेमि । एतेनं तं चेव पडणवत्थुमहिकिच्चोदाहरियं । एवं तावल्लौकिकम्, इदं चौक्तन्यायाल्लोकोत्तरस्यापि सूचकं, तत्र चरणकरणानुयोगे यः कश्चिद्विनेयः कञ्चनासद्ग्राहं गृहीत्वा न सम्यग्वर्त्तते स खलु तद्वस्तूपन्यासेनैव प्रज्ञापनीयः, यथा कश्चिदाह-

"न मांसभक्षणे दोषो, न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥"

इदं च किलैवमेव युज्यते, प्रवृत्तिमन्तरेण निवृत्तेः फलाभावात्, निर्विषयत्वेनासम्भवाच्च, तस्मात्फलनिबन्धननिवृत्तिनिमित्तत्वेन प्रवृत्तिरप्यदुष्टैवेति, अत्रोच्यते, इह निवृत्तेर्महाफलत्वं किं दुष्टप्रवृत्तिपरिहारात्मकत्वेनाहोस्विददुष्टप्रवृत्तिपरिहारात्मकत्वेनेति ?, यद्याद्यः पक्षः कथं प्रवृत्तेरदुष्टत्वम्, अथापरस्तो निवृत्तरप्यदुष्टत्वात् तन्निवृत्तेरपि प्रवृत्तिरूपाया महाफलत्वप्रसङ्गः, तथा च सति पूर्वापरविरोध इति भावना । द्रव्यानुयोगे तु य एवमाह-एकान्तनित्यो जीवः अमूर्त्तत्वादाकाशवदिति, स खलु तदेवामूर्त्तत्वमाश्रित्य तस्योत्क्षेपणादावनित्ये कर्मण्यपि तावद्वक्तव्यः, कर्मामूर्तनित्यं चेत्यस्य वृद्धदर्शनेनोदाहरणदोष एव, यथाऽन्येषां साधर्म्यसमा जातिरिति । गतं तद्वस्तूपन्यासद्वारम्, अधुना तदन्यवस्तूपन्यासद्वारमभिधातुकाम आह-

नि. [८५/२]　　तयअन्नवत्थुगंमिवि अन्नत्ते होइ एगत्तं ॥

वृ. तदन्यवस्तुकेऽपि उदाहरणे, किम् ?- अन्यत्वे भवत्येकत्वमित्यक्षरार्थः । भावार्थस्त्वयम्- कश्चिदाह इह यस्य वादिनोऽन्यो जीवः अन्यच्च शरीरमिति, तस्यान्यशब्दस्याविशिष्टत्वात्तयोरपि तद्वाच्याविशिष्टत्वेनैकत्वप्रसङ्ग इति, तस्य जीवशरीरपेक्षया तदन्यवस्तूपन्यासेन परिहारः कर्त्तव्यः, कथम् ?, नन्वेवं सति सर्व भावानां परमाणुद्व्यणुकघटपटादीनामेकत्वप्रसङ्गः, अन्यः परमाणुरन्यो द्विप्रदेशिक इत्यादिना प्रकारेणान्यशब्दस्याविशिष्टत्वात्, तेषां च तद्वाच्यत्वेनाविशिष्टत्वादिति, तस्मादन्यो जीवोऽन्यच्छरीरमित्येतदेव शोभनमिति । एत- द्रव्यानुयोगे, अनेन चेतरस्याप्याक्षेपः, तत्र चरणकरणानुयोगे 'न मांसभक्षण' इत्यादावेव कुग्राहे तदन्यवस्तूपन्यासेन परिहारः, कथम् ?, 'न हिंस्यात् सर्वाणि भूतानी' त्येतदेवं विरुध्यते इति । लौकिकं तु तस्मिन्नेवोदाहरणे तदन्यवस्तूपन्यासेन परिहारः- जहा जाणि पुण पाडिऊण पाडीऊण कोइ खाइ वीणेइ वा ताणिं किं हवंति त्ति ? ।

गतं तदन्यवस्तूपन्यासद्वारम्, साम्प्रतं प्रतिनिभम- भिधित्सुराह-

नि. [८६/१]　　तुज्झ पिया मह पिउणो धारेइ अनूनयं पडिनिभंमि ।

वृ. तव पिता मम पितुर्धारयत्यनूनं शतसहस्रमित्यादि गम्यते । 'प्रतिनिभ' इति द्वारोपलक्षणम्, अयमक्षरार्थः, भावार्थः कथानकादसेयः, तच्चेदम्- एगम्मि नगरे एगो परिव्वायगो सोवण्णएण खोरएण तहिं हिंडइ, सो भणइ- जो मम असुयं सुणावेइ तस्स एवं देमि खोरयं, तत्थ

एगो सावओ, तेन भणिअं।

तुज्झ पिया मम पिउणो धारेइ अणूणयं सयसहस्सं।
जइ सुयपुव्वं दिज्जउ अह न सुयं खोरयं देहि ॥१॥

इदं लौकिकम्, अनेन च लोकोत्तरमपि सूचितमवगन्तव्यम्, तत्र चरणकरणानुयोगे येषां सर्वथा हिंसाऽधर्मः तेषां [illegible]भङ्गादात्महिंसायामपि अधर्म एवेति तद्करणम्। द्रव्यानुयोगे पुनरदुष्टं मद्वचनमिति मन्यमानो यः कश्चिदाह-'अस्ति जीव' इति, अत्र वद किञ्चित्, स वक्तव्यो यद्यस्ति जीवः एवं तर्हि घटादीनाप्यस्तित्वाज्जीवत्यप्रसङ्ग इति। गतं प्रतिनिभम्, अधुना हेतुमाह-

नि.[८६/२] किं नु जवा किज्जंते ? जेन मुहाए न लब्भंति॥

वृ. किं न युवाः क्रीयन्ते ?, येन मुधा न लभ्यन्त इत्यक्षरार्थः। भावार्थस्त्वयम्कोवि गोधो जवे किणाइ, सो अन्नेण पुच्छिज्जइ- किं जवे किणासि ?, सो भणइ-जेन सुहियाए न लब्भामि। लौकिकमिदं हेतूपन्यासोदाहरणम्, अनेन च लोकोत्तरमप्याक्षिप्तमवगन्तव्यम्, तत् चरणकरणानुयोगे तावत् यद्याह विनेयः-किमितीयं भिक्षाटनाद्याऽतिकष्टा क्रिया क्रियते ?, स वक्तव्यो-येन नरकादिषु न कष्टतरा वेदना वेद्यत इति। द्रव्यानुयोगे तु यद्याह कश्चित्-किमित्यात्मा न चक्षुरादिभिरुपलभ्यते ?, स वक्तव्यो-येनातीन्द्रिय इति। गतं हेतुद्वारम्, तदभिधानाच्चोपन्यासद्वारम्, तदभिधानाच्चोदाहरणद्वारमिति॥ साम्प्रतं हेतुरुच्यते-तथा चाह-

नि.[८७] अहवावि इमो हेऊ विन्नेओ तत्थिओ चउविअप्पो।
जावग थावग वंसग लूसग हेऊ चउत्थो उ॥

वृ. अथवा तिष्ठतु एष उपन्यासः, उदाहरणचरमभेदलक्षणो हेतुः, 'अपिः' सम्भावने, किं सम्भावयति?, 'इमो' अयं अन्यद्वार एवोपन्यस्तत्वात्तदुपन्यासनान्तरीयकत्वेन गुणभूतत्वादहेतुरपि, किं तु 'हेऊ विन्नेओ तत्थिमो' त्ति व्यवहितोपन्यासात् तत्रायं-वक्ष्यमाणो हेतुर्विज्ञेयः 'चतुर्विकल्प' इति चतुर्भेदः, विकल्पानुदर्शयति-यापकः स्थापकः व्यंसकः लूषकः हेतुः चतुर्थस्तु। अन्ये त्वेवं पठन्ति-'हेउत्ति दारमहुणा, चउव्विहो सो उ होइ नायव्वो' त्ति, अत्राप्युक्तमुदाहरणम्, हेतुरित्येतद् द्वारमधुना-तुशब्दस्य पुनःशब्दार्थत्वात् स पुनर्हेतुश्चतुर्विधो भवति ज्ञातव्य इत्येवं गमनिका क्रियते, पश्चार्द्धं तु पूर्ववदेवेति गाथाक्षरार्थः॥

भावार्थं तु यथावसरं स्वयमेव वक्ष्यति॥ तत्राद्यभेदव्याचिख्यासयाऽऽह-

नि.[८८/१] उब्भामिगा य महिला जावगहेउंमि उंटलिंडाई।

वृ. असति महिला, किम् ?-यापयतीति यापकः यापकश्चासौ हेतुश्च यापकहेतुः तस्मिन् उदाहरणमिति शेषः, उष्ट्रलिण्डानीति कथानकसंसूचकमेतदिति अक्षरार्थः॥

भावार्थः कथान-कादवसेयः, तच्चेदं कथानकम्

एगो वाणियओ भज्जं गिण्हेऊण पच्चंतं गओ, पाएण खीणदव्वा वणियपरद्धा कयावराहा य।
पच्चंतं सेवंती पुरिसा दुव्हीयविज्जा य॥१॥

सा य महिला उब्भामिया, एगंमि पुरिसे लग्गा, तं वाणिययं सागारियंति चिंतिऊण भणइ-वच्च वाणिज्जेण, तेन भणिया-किं घेत्तूण वच्चामि ?, सा भणइ-उट्टलिंडियाओ घेत्तूणं वच्च

उज्जेनिं, पच्छा सो सगडं भरेत्ता उज्जेनिं गतो, ताए भणिओ य-जहा एक्केक्कयं दीणारेण दिज्ज-हत्ति, सा चिंतेइवरं खु चिरं खिप्पंतो अच्छउ, तेन ताओ वीहीए उड्डियाओ, कोई न पुच्छइ, मूलदेवेण दिट्ठो, पुच्छिओ य, सिट्ठं तेन, मूलदेवेन चिंतियं-जहा एस वराओ महिलाछोभिओ, ताहे मूलदेवेण भण्णति-अहमेयाउ तव विक्किणामि जइ ममवि मुल्लस्स अद्धं देहि, तेन भणियं-देमित्ति, अब्भुवगए पच्छा मूलदेवेणं सो हंसो जाएऊण आगासे उप्पइओ, नगरस्स मज्झे ठाइ-ऊण भणइ-जस्स गलए चेडरूवस्स उड्डलिंडिया न बद्धा तं मारेमि, अहं देवो, पच्छा सव्वेण लोएण भी[illegible] तीए रिक्खाओ उड्डलिंडियाओ [illegible]ओ, सिक्खिआओ य, ताहे तेन मूलदेवस्स अद्धं दिन्नं। मूलदेवेण य सो भणइ-मंदभग्ग! तव महिला धुत्ते लग्गा, ताए तव एयं कयं, पत्तियंति, मूलदेवेन भण्णइ-एहि वच्चामो जा ते दरिसेमि जदि न पत्तियसि, ताहे गया अन्नाए लेसाए, वियाले ओवासो मग्गिओ, ताए दिन्नो, तत्थ एगंमि पएसे ठिया, सो धुत्तो आगओ, इयरी वि धुत्तेणसह पिबेउमाढत्ता, इमं च गायइ-

"इरिमंदिरपन्नहारओ, मह कंतु गतो वणिजारओ।
वरिसाण सयं च जीवउ मा जीवंतु घरं कयाइ एउ॥"

मूलदेवो भणइ-

"कयलीवणपत्तवेढीया, पइ भणामि देव जं मद्दलएण गज्जतो, सुणउ तं मुहुत्तमेव॥"

पच्छा मूलदेवेन भण्णति-किं धुत्ते?, तओ पभाए निग्गंतूणं पुनरवि आगओ, तीय पुरओ ठिओ, सा सहसा संभंता अब्भुट्ठिया, तओ खाणपिबणे वट्टंतो तेन वाणिएणं सव्वं तीए गीय-पज्जन्तयं संभारियं। एसो लोइओ हेऊ, लोउत्तरेवि चरणकरणानुयोगे एवं सीसोऽवि केइ पयत्थे असद्दहंतो कालेण विज्जादीहिं देवतं आयंपइत्ता सद्दहावेयव्वो। तहा दव्वानुओगेहिं पडिवाइं नाऊण तहा विसेसणबहुलो हेऊ कायव्वो जहा कालजावणा हवइ, तओ सो नावगच्छइ पगयं, कुत्तियावणचच्चरी वा कज्जइ, जहा सिरिगुत्तेण छलुए कया। उक्तो यापकहेतुः।

साम्प्रतं स्थापकहेतुमधिकृत्याह-

**नि.[८८/२]** लोगस्स मज्झजाणण थावगहेऊ उदाहरणं॥

**वृ.** 'लोकस्य' चतुर्दशरज्ज्वात्मकस्य मध्यज्ञानम्, किम्?, स्थापकहेतावुदाहरणमित्यक्ष-रार्थः॥ भावार्थः कथानकादवसेयः, तच्चेदम्-एगो परिव्वायगो हिंडइ, सो य परूवेइ-खेत्ते दाणाई सफलंतिकट्टु समखेत्ते कायव्वं, अहं लोगस्स मज्झं जाणामि न पुण अन्नो, तो लोगो तमाढाति, पुच्छिओ य संतो चउसुवि दिसासु खीलए निहणिऊण रज्जूए पमाणं काऊण माइट्ठाणिओ भणइ-एयं लोयमज्झंति, तओ लोओ विम्हयं गच्छइ-अहो भट्टारएण जाणियंती, एगो य सावओ, तेन नायं, कहं धुत्तो लोयं पयारेइत्ति?, तो अहंति वंचामित्ति कलिऊण भणियं-न एस लोयमज्झो, धुत्तो तुमंति, तओ सावएण पुणो मवेऊण अन्नो देसो कहिओ, जहेस लोयमज्झोत्ति, लोगो तुट्ठो, अण्णे भणंति-अनेगट्ठाणेसु अन्नं अन्नं मज्झं परूवंतयं दट्ठूण विरोधो चोइओत्ति। एवं सो तेन परिवायगो निप्पिट्ठपसिणवागरणो कओ। एसो लोइओ थावगहेऊ, लोउत्तरेऽवि चरणकरणानुयोगे कुस्सुतीसुअसंभावणिज्जासग्गाहरओ सीसो एवं चेव पन्नवे-यव्वो। दव्वानुजोगे वि साहुणा तारिसं भाणियव्वं तारिसो य पक्खो गोण्हियव्वो जस्स परो उत्तरं

चेच दाउं न तीरइ, पुव्वावरविरुद्धो दोसो य न हवइ ॥ उक्तः स्थापकः साम्प्रतं व्यंसकमाह-

नि. [८९/१] सा सगडतित्तिरी वंसगंमि हेउम्मि होइ नायव्वा ।

वृ. सा शकटतित्तिरी व्यंसकहेतौ भवति ज्ञातव्येत्यक्षरार्थः ॥ भावार्थः कथानकादवसेयः, तच्चेदम्--जहा एगो गामेल्लगो सगडं कट्ठाण भरेऊण णगरं गच्छइ, तेन गच्छंतेन अंतरा एगा तित्तिरी मइया दिट्ठा, सो तं गिण्हेऊण सगडस्स उवरिं पक्खिविऊण णगरं पइट्ठो, सो एगेण नगरधुत्तेण पुच्छिओ-कहं सगडतित्तिरी लब्भइ ?, तेन गामल्लेएण भण्णइ-तप्पणादुयालियाए लब्भति, तओ तेन सक्खिणं ठहाणहित्ता सगडं तित्तिरीए सह गहियं, एत्तिलगो सेव किल एस वंसगो त्ति, गुरवो भणंति-तओ सो गामेल्लगो दीनमनसो अच्छइ, तत्थ य एगो मूलदेवसरिसो मनुस्सो आगच्छइ, तेन सो दिट्ठो, तेन पुच्छिओ-किं झियायसि अरे देवाणुप्पिया ?, तेन भणियं अहमंगेन गोहेण इमेण पगारेण छलिओ, तेन भणियं-मा बीहिह, तप्पणादुयालियं तुमं सोवयारं मग्ग, माइट्ठाणं सिक्खाविओ, एवं भवउति भणिऊण तस्स सगासं गओ, भणियं चनेनमम जइ सगडं हियं तो मे इयाणिं तप्पणादुयालियं सोवयारं दवावेहि, एवं होउत्ति, घरं नीओ, महिला संदिट्ठा, अलंकियविभूसिया परमेण विनएण एअस्स तप्पणादुयालियं देहि, सा वय-णसमं उवट्ठिया, तओ सो सागडिओ भणति-मम अंगुली छिन्ना, इमा चीरिणावेढिया, न सक्केमि उड्डयालेउं, तुमं अदुयालिउं देहि, अदुआलिया तेन हत्थेण गहिया, गामं तेना संपट्ठिओ, लोगस्स य कहेइ-जहा मए सतित्तिरीगेण सगडेण गहियां तप्पणादुयालिया, ताहे तेन धुत्तेण सगडं विसज्जियं, तं च पसाएऊण भज्जा नियत्तिया। एस पुण लूसओ चेव कहाणयवसेण भणिओ।

एस लोइओ, लोगुत्तरेऽवि चरणकारणनुयोगे कुस्सुतिभावियस्स तस्स तहा वंसगो पउ-ज्जति जहा संभं पडिवज्जइ। दव्वानुओगे पुण कुप्पावयणिओ चोइज्जा-जहा जइ जिनपणीए मग्गे अत्थि जीवो अत्थि घडो, अत्थित्तं जीवेऽवि घडेवि, दोसु अविसेसेण वट्टइत्ति, तेना अत्थित्तसद्दतुल्लत्तणेण जीवघडाणं एगत्तं भवति, अह अत्थिभावाओ वतिरित्तो जीवो, तेन जीवस्स अभावो भवइत्ति। एस किल एद्दहमेत्तो चेव वंसगो, लूसगेण पुण एत्थ इमं उत्तरं भाणितव्वं जइ जीवघडा अत्थित्ते वट्टंति, तम्हा तेसिमेगत्तं संभावेहि, एवं ते सव्वभावाणं एगत्तं भवति, कहं ?, अत्थि घडो अत्थि पडो अत्थि परमाणू अत्थि दुपएसिए खंऐ, एवं सव्वभावेसु अत्थिभावो वट्टइत्तिकाउं किं सव्वभावा एगीभवंतु ?, एत्थ सीसो भणति--कहं पुन एयं जाणियव्वं ? सव्व-भावेसु अत्थिभावो वट्टइ, न य ते एगीभवंति, आयरिओ आह- अनेगंताओ एयं सिज्झइ, एत्थ दिट्ठंतो-खइरो वणस्सई वणस्सई पुण खदिरो पलासो वा, एवं जीवोऽवि नियमा अत्थि, अत्थि-भावो पुन जीवो व होज्ज अन्नो वा धम्माधम्मागासादीणं ति।

उक्तो व्यंसकः, साम्प्रतं लूषकमधि-कृत्याह-

नि. [८९/२] तउसगवंसग लूसगहेउम्मि य मोयओ य पुणो ॥

वृ. त्रपुरुषव्यंसकप्रयोगे पुनर्लूषके हेतौ च मोदको निदर्शनमिति गाथाक्षरार्थः ॥ भावार्थः कथानकादवसेयः, तच्चेदम्-जहा एगो मनुस्सो तउसाणं भरिएण सगडेण नयरं पविसइ, सो पविसंतो धुत्तेण भण्णइ जो एयं तउसाण सगडं खाइज्जा तस्स तुमं किं देसि ?, ताहे सगडत्तेण सो धुत्तो भणिओ--तस्साहं तं मोयगं देमि जो नगरद्दारेण न निप्फडइ, धुत्तेण भण्णति-तोऽहं एयं

तउससगडं खयामि, तुमं पुण तंमोयगं देज्जासि जो नगरद्दारेण न नीसरति, पच्छा सागडिएण अब्भुवगए धुत्तेण सक्खिणो कया, सुगडं अहिट्ठित्ता तेसिं तउसाणं एक्केक्कयं खंडं अवनित्ता पच्छा तं सागडियं मोदकं मग्गति, ताहे सागडिओ भणतिइमे तउसा न खाइया तुमे, धुत्तेण भण्णति-जइ न खाइया तउसा अग्घवेह तुमं, तओ अग्घविएसु कइया आगया, पासंति खंडिया तउसा, ताहे कइया भणंति-को एए खइए तउसे किणइ ?, तओ करणे ववहारो जाओ खइयत्ति, जिओ सागडिओ। एस संसगो चेव लूसगनिमित्तमुवण्णत्थो, ताहे धुत्तेण मोदगं मग्गिज्जति, अच्चाइओ सागडिओ, जूतिकरा ओलग्गिया, ते तुट्ठा पुच्छंति, तेसिं जहावत्तं सव्वं कहेति, एवं कहिते तेहिं उत्तरं सिक्खाविओ- जहा तुमं खुड्डुयं मोदग णगरदारे ठवित्ता भण एस स मोदगो न नीसरइ नगरदारेण, गिण्हाहि, जिओ धुत्तो। एस लोइओ, लोगुत्तरेवि चरणकारणानुयोगे कुस्सतिभावितस्स तहा लूसगो पउंजइ-जहा सम्मं पडिवज्जइ। दव्वानुजोगे पुन पुज्जा भणंति-पुव्वं धरिसिओ चेव।

अन्ने पुण भणंति-पुव्वं सयमेव सव्वभिचारं हेउं उच्चारेऊण परविसंभणानिमित्तं सहसा वा भणितो होज्जा, पच्छा तमेव हेउं अन्नेणं निरुत्तवयणेणं ठावेइ। उक्तो लूषकस्तदभिधा-नाच्चा हेतुरपि। साम्प्रतं यदुक्तं 'क्वचित्पञ्चावयव' मिति, तदधिकृतमेव सूत्रं 'धम्मो मंगलं' मित्यादिलक्षणमधिकृत्य निदर्श्यते-अहिंसासंयमतपोरूपो धर्म्मः मङ्गलमिति साध्यो धर्मः, धर्मिधर्मसमुदायः प्रतिज्ञा, इयं श्लोकार्द्धेनोक्ता इति, देवादिपूजितत्वादिति हेतुः, आदिशब्दात् सिद्धविद्याधरनरपरिग्रहः, अयं च श्लोकतृतीयपादेन खलूक्तोऽवसेयः, अर्हदादिवदिति दृष्टान्तः, अत्रापि चादिशब्दाद् गणधरादिपरिग्रहः, अयं च श्लोकचरमपादेनोक्तो वेदितव्य इति। न च भावमनोऽधिकृत्यार्हद्दृष्टान्तेऽसि कश्चिद्विरोध इति, इह यो यो देवादिपूजितः स स उत्कृष्टं-मङ्गलं यथाऽर्हदादयस्तथा च देवादिपूजितो धर्म इत्युपनयः, तस्माद्देवादिपूजितत्वादुत्कृष्टं मङ्गल-मिति निगमनम्। इदं चावयवद्वयं सूत्रोक्तावयवत्रयाविनाभूतमितिकृत्वा तेन सूचितमवगन्त-व्यमित्यलं विस्तरेण॥ साम्प्रतमेतानेवावयवान् सूत्रस्पर्शिकनिर्युक्त्या प्रतिपादयन्नाह-

नि.[१०] धम्मो गुणा अहिंसाइया उ ते परममंगल पइन्ना।
देवावि लोगपुज्जा पणमंति सुधम्ममिइ हेऊ॥

वृ.'धर्मः' प्राग्निरूपितशब्दार्थः, स च क इत्याह-गुणा अहिंसादयः, आदिशब्दात् संयम-तपःपरिग्रहः, तुरेवकारार्थः, अहिंसादय एव, ते परममङ्गलमिति प्रतिज्ञा, तथा देवा अपि, अपि-शब्दात् सिद्धविद्याधरनरपतिपरिग्रहः, 'लोकपूज्या' लोकपूजनीयाः 'प्रणमंति' नमस्कुर्वन्ति, कम्?-'सुधर्माणं' शोभनधर्मव्यवस्थितमिति, अयं हेत्वर्थसूचकत्वाद्धेतुरिति गाथार्थः॥

नि.[११] दिट्ठंतो अरहंता अनगारा य बहवो उ जिनसीसा।
वत्तणुवत्ते नज्जइ जं नरवइणोऽवि पणमंति॥

वृ. 'दृष्टान्तः' प्राग्निरूपितशब्दार्थः, स चाशोकाद्यष्टमहाप्रातिहार्यादिरूपां पूजामर्हन्ती-त्यर्हन्तः, तथा अनगाराश्च बहव एव जिनशिष्या इति, न गच्छन्तीत्यगा-वृक्षास्तैः कृतमगारंगृहं तद्येषां विद्यत इति अर्शआदेशकृतिगणत्वादच्प्रत्ययः अगारा-गृहस्थाः न अगारा-अनागाराः, चशब्दः समुच्चयार्थः, तुरेवकारार्थः, ततश्च बहव एव नाल्पाः, रागादिजेतृत्वाज्जिनस्तच्छिष्याः-

तद्विनेया गौतमादयः, आह-अर्हदादीनां परोक्षत्वात् [illegible], कथं चैतद्विनिश्चि-यते ? यथा ते देवादिपूजिता इति, उच्यते यत्तावदुक्तं 'परोक्षत्वा'दिति, तदुष्टम्, सूत्रस्य त्रिकालगोचरत्वात् कदाचित्प्रत्यक्षत्वात्, देवादिपूजिता इति च एतद्विनिश्चयायाह-वृत्तम्-अतिक्रान्तम् अनुवर्त्तमानेन-साम्प्रतकालभाविना ज्ञायते, कथमित्यत आह-'यद्' यस्माद् नरपतयोऽपि-राजानोऽपि प्रणमन्ति, इदानीमपि भावसाधुं, ज्ञानादिगुणयुक्तमिति गम्यते। अनेन गुणानां पूज्यत्वमावेदितं भवतीति गाथार्थः ॥

नि.[१२] उवसंहारो देवा जह तह रायावि पणमइ सुधम्मं।
तम्हा धम्मो मंगलमुक्किट्ठमिइ अ निगमनं॥

वृ. 'उपसंहारः' उपनयः, स चायम-देवा यथा तीर्थकरादीन् तथा राजाऽप्यन्योऽपि जनः प्रणमतीदानीमपि सुधर्माणमिति। यस्मादेवं तस्माद्देवादिपूजितत्वाद् धर्मो मङ्गलमुत्कृष्टमिति च निगमनम्। 'प्रतिज्ञाहेत्वोः पुनर्वचनं निगमन' मिति गाथार्थः ॥ उक्तं पञ्चावयवम्, एत-दभिधानाच्चार्थाधिकारोऽपि धर्मप्रशंसा। साम्प्रतं दशावयवं तथा स चेहैव जिनशासन इत्य-धिकारं चोपदर्शयति-इह च दशावयवाः-प्रतिज्ञादय एव प्रतिज्ञादिशुद्धिसहिता भवन्ति। अवयवत्वं च तच्छुद्धीनामधिकृतवाक्यार्थोपकारकत्वेन प्रतिज्ञादीनामिव भावनीयमिति, अत्र बहु वक्तव्यं, तत्तु नोच्यते, गमनिकामात्रत्वात् प्रारम्भस्येति॥ साम्प्रतमधिकृतदशावयवप्रतिपादनायाह-

नि.[१३] बिइयपइन्ना जिनसासणंमि साहेंति साहवो धम्मं।
हेऊ जम्हा सब्भाविएसुऽहिंसाइसु जयंति॥

वृ. द्वितीया पञ्चावयवोपन्यस्तप्रथमप्रतिज्ञापेक्षया, प्रतिज्ञा पूर्ववत्, द्वितीया चासौ प्रतिज्ञा च द्वितीयप्रतिज्ञा, सा चेयम्-'जिनशासने' जिनप्रवचने, किम् ?-'साधयन्ति' निष्पादयन्ति 'साधवः' प्रव्रजिताः 'धर्म' प्रागिनरूपितशब्दार्थम्। इह च साधव इति धर्म्मिनिर्देशः, शेषस्तु साध्यधर्म इति, अयं प्रतिज्ञानिर्देशः। हेतुनिर्देशमहा-हेतुर्यस्मात् 'सद्भाविकेषु' पारमार्थिकेषु निरुपचरितेष्वर्थेष्वित्यर्थः अहिंसादिषु, आदिशब्दान्मृषावादादिविरतिपरिग्रहः, अन्ये तु व्याचक्षते-'सब्भाविएहिं'ति सद्भावेन निरुपचरितसकलदुःखक्षयायैवेत्यर्थः 'यतन्ते' प्रयत्नं कुर्वन्ति इति गाथार्थः॥ साम्प्रतं प्रतिज्ञाशुद्धिमभिधातुकाम आह-

नि.[१४] जह जिनसासननिरया धम्मं पालेंति साहवो सुद्धं।
न कुतित्थिएसु एवं दीसइ परिवालणोवाओ॥

वृ. 'यथा' येन प्रकारेण जिनशासननिरता-निश्चयेन रता 'धर्म' प्रागिनरूपितशब्दार्थं 'पाल-यन्ति' रक्षन्ति 'साधवः' प्रव्रजिताः षड्जीवनिकायपरिज्ञानेन कृतकारितादिपरिवर्जनेन च 'शुद्धम्' अकलङ्कं, नैवं तत्रान्तरीयाः, यस्मान्न कुतीर्थिकेषु, 'एवं' यथा साधुषु दृश्यते परिपालनोपायः, षड्जीवनिकायपरिज्ञानाद्य भावात्। उपायग्रहणं च साभिप्रायकम्, शास्त्रो-क्तः खलूपायोऽत्र चिन्त्यते, न पुरुषानुष्ठानं, कापुरुषा हि वितथकारिणोऽपि भवन्त्येवेति- गाथार्थः॥ अत्राह-

नि.[१५] तेसुवि य धम्मसद्दो धम्मं नियगं च ते पसंसंति।
ननु भणिओ सावज्जो कुतित्थिधम्मो जिनवरेहिं॥

वृ. 'तेष्वपि च' तत्रान्तरीयधर्मेषु, किम् ?-धर्मशब्दो लोके रूढः, तथा धर्मं 'निजं च'

आत्मीयमेव यथातथं ते 'प्रशंसन्ति' स्तुवन्ति, ततश्च कथमेतदिति, अत्रोच्यते, 'नन्वि'त्यक्षमायां 'भणित' उक्तः पूर्व 'सावद्यः' सपापः 'कुतीर्थिकधर्मः' चरकादिधर्मः। कैः ?-'जिनवरैः' तीर्थकरैः 'न जिनेहिं उ पासत्थो' इति वचनात्, षड्जीवनिकायपरिज्ञानाद्यभावादेवेति, अत्रापि बहु वक्तव्यं तत्तु नोच्यते ग्रन्थविस्तरभयादिति गाथार्थः ॥ तथा -

नि.[९६] जो तेसु धम्मसद्दो सो उवयारेण निच्छएण इहं।
जह सीहसद्दु सीहे पाहण्णुवयारओ ऽन्नत्थ ॥

वृ. यः 'तेषु' तत्रान्तरीयधर्मेषु धर्मशब्दः स 'उपचारेण' अपरमार्थेन, निश्चयेन 'अत्र' जिनशासने, कथम् ?-यथा सिंहशब्दः सिंहे व्यवस्थितः प्राधान्येन, 'उपचारतः' उपचारेण 'अन्यत्र' माणवकादौ, यथा सिंहो माणवकः, उपचारनिमित्तं च शौर्यक्रौर्यादयः धर्मे त्वहिंसाद्यभिधानादय इति गाथार्थः ॥

भा.[१] एस पइन्नासुद्धी हेऊ अहिंसाइएसु पंचसुवि।
सब्भावेण जयंती हेउविसुद्धी इमा तत्थ ॥

वृ. 'एषा' उक्तस्वरूपा प्रतिज्ञायाः शुद्धिः प्रतिज्ञाशुद्धिः, हेतुरहिंसादिषु पञ्चस्वपि सद्भावेन यतन्त इति, अयं च प्राग् व्याख्यात एव, शुद्धिमभिधातुकामेन च भाष्यकृता पुनरुपन्यस्त इति, अत एवाह-हेतोर्विशुद्धिर्हेतुविशुद्धिः, विषयविभाषाव्यवस्थापनं विशुद्धः, 'इमा' इयं 'तत्र' प्रयोग इति गाथार्थः ॥

भा.[२] जं भत्तपानउवगरणवसहिसयनासनाइसु जयंति।
फासुयअकयअकारियअणणुमयाणुद्दिट्ठभोईय ॥

वृ. 'यद' यस्मात्, भक्तं च पानं चोपकरणं च वसतिश्च शयनासनादयश्चेति समासस्तेषु, किम् ?-'यतन्ते' प्रयत्नं कुर्वन्ति, कथमेतदेवमित्यत्राह-यस्मात् प्रासुकं चाकृतं चाकारितं चाननुमतं चानुद्दिष्टं च तद्भोक्तुं शीलं येषां ते तथाविधाः, तत्रासवः-प्राणाः प्रगता असवः-प्राणा यस्मादिति प्रासुकं-निर्जीवम्, तच्च स्वकृतमपि भवत्यत आह-अकृतम्, तदपि कारितमपि भवत्यत आह-अकारितम्, तदप्यनुमतमपि भवत्यत आह-अननुमतम्, तदप्युद्दिष्टमपि भवति यावदर्थिकादि न च तदिष्यत इत्यत आह-अनुद्दिष्टमिति। एतत्परिज्ञानोपायश्चोपन्यस्तसकलप्रदानादिलक्षणसूत्रादवगन्तव्य इति गाथार्थः ॥ तदन्ये पुनः किमित्यत आह-

भा.[३] अफासुयकयकारियअनुमयउद्दिट्ठभोइणो हंदि।
तसथावरहिंसाए जना अकुसला उ लिप्पंति ॥

वृ. अप्रासुककृतकारितानुमोदितोद्दिष्टभोजिनश्चरकादयः, हन्दीत्युपप्रदर्शने, किमुपप्रदर्शयति ?-त्रसन्तीति त्रसाः-द्वीन्द्रियादयः तिष्ठन्तीति स्थावराः-पृथिव्यादयः तेषां हिंसा-प्राणव्यपरोपणलक्षणा तया 'जनाः' प्राणिनः 'अकुशलाः' अनिपुणाः स्थूलमतयश्चरकादयो 'लिप्यन्ते' सम्बध्यन्त इत्यर्थः इह च हिंसाक्रियाजनितेन कर्मणा लिप्यन्त इति भावनीयम्, कारणे कार्योपचारात्, ततश्च ते शुद्धधर्मसाधका न भवन्ति साधव एव भवन्तीति गाथार्थः ॥

भा.[४] एसा हेउविसुद्धी दिट्ठंतो तस्स चेव य विसुद्धी।
सुत्ते भणिया उ फुडा सुत्तफासे उ इयमन्ना ॥

**वृ.** 'एषा' अनन्तरोक्ता 'हेतुविशुद्धिः' प्राग्निरूपितशब्दार्था, अधुना 'दृष्टान्तः' प्राग्निरूपित-शब्दार्थः, तथा 'तस्यैव च' दृष्टान्तस्य विशुद्धिः, किम् ?-सूत्रे भणिता, उक्तैव 'स्फुटा' स्पष्टा ॥ तच्चेदं सूत्रम्-

**मू. (१)** *जहा दुमस्स पुप्फेसु, भमरो आवियइ रसं।*
*न य पुप्फं किलामेई, सो अ पीणेइ अप्पयं ॥*

**वृ**-अत्राह-अथ कस्माद्दशावयवनिरूपणायां प्रतिज्ञादीन् विहाय सूत्रकृता दृष्टान्त एवोक्त इति ? उच्यते, दृष्टान्तादेव हेतुप्रतिज्ञे अभ्यूह्ये इति न्यायप्रदर्शनार्थम्, कृतं प्रसङ्गेन प्रकृतं प्रस्तुमः। तत्र 'यथा' येन प्रकारेण 'द्रुमस्य' प्राग्निरूपितशब्दार्थस्य 'पुष्पेषु' प्राग्निरूपित-शब्दार्थेष्वेव, असमस्तपदाभिधानमनुतये (उपमेये) गृहिद्रुमाणामाहारादिपुष्पाण्यधिकृत्य विशिष्टसंबन्धप्रतिपादनार्थमिति, तथा च अन्यायोपार्जितवित्तदानेऽपि ग्रहणं प्रतिषिद्धमेव, 'भ्रमरः' चतुरिन्द्रियविशेषः, किम् ?-'आपिबति' मर्यादया पिबत्यापिवति, किम् ? रस्यत इति रसस्तं-निर्यासं मकरन्दमित्यर्थः, एष दृष्टान्तः, अयं च तद्देशोदाहरणमधिकृत्य वेदितव्य इति, एतच्च सूत्रस्पर्शिकनिर्युक्तौ दर्शयिष्यति, उक्तं च 'सूत्रस्पर्शे त्वियमन्ये'ति। अधुना दृष्टान्त-विशुद्धमाह-'न च' नैव 'पुष्पं' प्राग्निरूपितस्वरूपं 'क्लामयति' पीडयति, 'स च' भ्रमरः 'प्रीणाति' तर्पयत्यात्मानमिति सूत्रसमुदायार्थः ॥

अवयवार्थं तु निर्युक्तिकारो महता प्रपञ्चेन व्याख्यास्यति। तथा चाह-

**नि.[९७]** जह भमरोत्ति य एत्थं दिट्ठंतो होइ आहरणदेसे।
चंदमुहि दारिगेयं सोमत्तवहारण न सेसं ॥

**वृ.** यथा भ्रमर इति च 'अत्र' प्रमाणे दृष्टान्तो भवत्युदाहरणदेशमधिकृत्य, यथा चन्द्रमुखी दारिकेयमित्यत्र सौम्यत्वावधारणं गृह्यते, न शेषं-कलङ्काङ्कितत्वानवस्थितत्वादीति गाथार्थः ॥

**नि.[९८]** एवं भमराहरणे अनिययवित्तित्तणं न सेसाणं।
गहणं दिट्ठंतविसुद्धि सुत्त भणिया इमा चऽन्ना ॥

**वृ.** एवं भ्रमरोदाहरणे अनियतवृत्तित्वं, गृह्यत इति शेषः, न 'शेषाणाम्' अविरत्यादीनां भ्रमरधर्माणां ग्रहणं, दृष्टान्त इति। एषा दृष्टान्तविशुद्धिः सूत्रे भणिता, इयं चान्या सूत्रस्पर्शनिर्युक्तौ

**नि.[९९]** एत्थ य भणिज्ज कोई समणाणं सुविहियाण।
पागोवजीविणो त्ति य लिप्पंतारंभदोसेणं ॥

**वृ.** अत्र चैवं व्यवस्थिते सति ब्रूयात्कश्चिद्यथा- श्रमणानां क्रियते सुविहितानामिति, एतदुक्तं भवति-यदिहं पाकनिर्वर्तनं गृहिभिः क्रियते, इदं पुण्योपादानसंकल्पेन श्रमणानां क्रियते 'सुविहिताना' मिति तपस्विनां, गृह्णन्ति च ते ततो भिक्षामित्यतः पाकोपजीविन इति-कृत्वा लिप्यन्ते आरम्भदोषेण- आहारकरणक्रियाफलेनेत्यर्थः, तथा च लौकिका अप्याहुः -

'क्रयेण क्रायको हन्ति, उपभोगेन खादकः।
घातको वधचित्तेन, इत्येष त्रिविधो वधः ॥'

इति गाथार्थः ॥ साम्प्रतमेतत्परि-हरणाय गुरुराह-

**नि.[१००]** वासइ न तणस्स कए न तणं वड्ढइ कए मयकुलाणं।

न य रुक्खा सयसाला फुल्लन्ति कए महुयराणं ॥

वृ.वर्षति न तृणस्य कृते, न तृणार्थमित्यर्थः, तथा न तृणं वर्धते कृते मृगकुलानाम्‌अर्थाय तथा नच वृक्षाः शतशाखाः पुष्प्यन्ति 'कृते' अर्थाय मधुकराणाम्, एवं गृहिणोऽपि न साध्वर्थ् पाकं निर्वर्तयन्तीत्यभिप्राय इति गाथार्थः ॥ अत्र पुनरप्याह-

नि.[१०१] अग्गिम्मि हवी हूयइ आइच्चो तेन पीणिओ संतो।
वरिसइ पयाहियाए तेनोसहिओ परोहंति ॥

वृ.इह यदुक्त 'वर्षति न तृणार्थ' मित्यादि, तदसाधु, यस्मादग्नौ हविर्हूयते, आदित्यः 'तेन' हविषा घृतेन प्रीणितः सन वर्षति, किमर्थम् ?-'प्रजाहितार्थं' लोकहिताय, 'तेन' वर्षितेन, किम् ?, औषध्यः 'प्ररोहन्ति' उद्गच्छन्ति, तथा चोक्तम्-

"अग्नावाज्याहुतिः सम्यगादित्यमुपतिष्ठते।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"

इति गाथार्थः ॥ अधुनैतत्प-रिहारायेदमाह-

नि.[१०२] किं दुब्भिक्खं जायइ ? जइ एवं अह भवे दुरिट्ठं तु।
किं जायइ सव्वत्था दुब्भिक्खं अह भवे इंदो ? ॥

नि.[१०३] वासइ तो किं विग्धं निग्घायाईहिं जायए तस्स।
अह वासइ उउसमए न वासई तो तणट्ठाए ॥

वृ.किं दु[redacted]

गाथार्थः ॥ अत्रोत्तरमाह-

नि.[१०६] तं न भवइ जेन दुमा नामागोयस्स पुव्वविहियस्स ।
उदएणं पुप्फफलं निव्वत्तंती इमं चऽन्नं ॥

वृ. यदुक्तं परेण तन्न भवति, कुत इत्याह येन द्रुमा नामगोत्रस्य कर्मणः 'पूर्वविहितस्य' जन्मान्तरोपात्तस्य 'उदयेन' विपाकानुभवलक्षणेन पुष्पफलं 'निर्वर्तयन्ति' कुर्वन्ति, अन्यथा सदैव तद्भावप्रसङ्ग इति भावनीयम् । इदं चान्यत्कारणं, वक्ष्यमाणमिति गाथार्थः ॥

नि.[१०७] अत्थि बहू वनसंडा भमरा जत्थ न उवेंति न वसंति ।
तत्थऽवि पुप्फंति दुमा पगई एसा दुमगणाणं ॥

वृ. सन्ति बहूनि वनखण्डानि तेषु तेषु स्थानेषु, भ्रमरा यत्र नोपयान्ति अन्यतः, न वसन्ति तेष्वेव तथापि पुष्प्यन्ति द्रुमाः, अतः 'प्रकृतिरेषा' स्वभाव एष द्रुमगणानामिति गाथार्थः ॥

नि.[१०८] जइ पगई कीस पुणो सव्वं कालं न देंति पुप्फफलं ।
जं काले पुप्फफलं दयंति गुरुराह अत एव ॥

नि.[१०९] पगई एस दुमाणं ज उउसमयम्मि आगए संते ।
पुप्फंति पायवगणा फलं च कालेन बंधंति ॥

वृ. यदि प्रकृतिः किमिति पुनः सर्वकालं 'न ददति' न प्रयच्छन्ति, किम् ? पुष्पफलम् ?, एवमाशङ्क्याह- यद्-यस्मात्काले नियत एव पुष्पफलं ददति, गुरुराह- अत एव अस्मादेव हेतोः । प्रकृतिरेषा द्रुमाणां यद् 'ऋतुसमये' वस...

पुनर्गृहस्थाः तत्रापि रात्रौ 'आदरतरेणं अत्यादरेण राध्यन्ति, श्रमणैः सुविहितैश्चतुर्विधाहारविरतैः सद्भिरिति गाथात्रयार्थः ॥ किंच -

नि.[११४]　　अत्थि बहुगामनगरा समणा जत्थ न उवेंति न वसंति।
तत्थवि रधंति गिही पगई एसा गिहत्थाणं ॥

वृ. सन्ति बहूनि ग्रामनगराणि तेषु तेषु देशेषु 'श्रमणाः' साधवो यत्र नोपयान्ति अन्यतो, न वसन्ति तत्रैव, अथ च तत्रापि राध्यन्ति गृहिणः, अतः प्रकृतिरेषा गृहस्थानामिति गाथार्थः ॥

अमुमेवार्थं स्पष्टयन्नाह-

नि.[११५]　　पगई एस गिहीणं जं गिहिणो गामनगरनिगमेसुं।
रंधंति अप्पणो परियणस्स कालेण अट्ठाए ॥

वृ. प्रकृतिरेषा गृहिणां वर्तते यद्गृहिणो ग्रामनगरनिगमेषु, निगमः--स्थानविशेषः, राध्यन्ति आत्मनः परिजनस्य 'अर्थाय' निमित्तं कालेनेति योग इति गाथार्थः ॥

नि.[११६]　　तत्थ समणा तवस्सी परकडपरनिट्ठियं विगयधूमं।
आहारं एसंति जोगाणं साहणट्ठाए ॥

वृ. तत्र श्रमणाः 'तपस्विनः' इति उद्यतविहारिणो नेतरे, परकृतपरनिष्ठितमिति, कोऽर्थः ? - परार्थं कृतम्-आरब्धं परार्थं च निष्ठितम्-अन्तं गतं, विगतधूमम्-धूमरहितम्, 'एकग्रहणे तज्जातीयग्रहण' मिति न्यायाद्विगताङ्गारं च रागद्वेषमन्तरेणेत्यर्थः, उक्तं च- "रागेण सइंगालं दोसेण सधमगं किं [redacted]

वृ-'एवम्' अनेन प्रकारेण 'एते' ये ऽधिकृताः प्रत्यक्षेणा वा परिभ्रमन्तो दृश्यन्ते, श्राम्यन्तीति श्रमणाः, तपस्यन्तीत्यर्थः, एते च तत्रान्तरीया अपि भवन्ति, यथोक्तम्-''निग्गंथसक्कतावसगेरुय-आजीव पंचहा समणा'' अत आह- 'मुक्ता' बाह्याभ्यन्तरेण ग्रन्थेन, ये 'लोके' अर्धतृतीय-द्वीपसमुद्रपरिमाणे 'सन्ति' विद्यन्ते, अनेन समयक्षेत्रे सदैव विद्यन्त इत्येदाह, साधयन्तीति - साधवः, किं साधयन्ति ?-ज्ञानादीति गम्यते। अत्राह-ये मुक्तास्ते साधव एवेत्यत इदमयुक्तम्, अत्रोच्यते, इह व्यवहारेण निह्नवा अपि मुक्ता भवन्त्येव न च ते साधव इति तद्व्यवच्छेदार्थत्वान्न दोषः। आह-न च ते 'सदैवसन्ती' त्यनेनैव व्यवच्छिन्ना इति, उच्यते, वर्तमानतीर्थापेक्षयैवेदं सूत्रमिति न दोषः, अथवा-अन्यथा व्याख्यायते-ये लोके सन्ति साधव इत्यत्र य इत्युद्देशः, लोक इत्यनेन समयक्षेत्र एव नान्यत्र, किम् ?-शान्तिः-सिद्धिरुच्यते तां साधयन्तीति शान्ति-साधवः, तथा चोक्तं निर्युक्तिकारेण-''संति विज्जंतित्ति य संति सिद्धि व साहेंति'' इदं व्याख्यात-मेव। 'विहंगमा इव' भ्रमरा इव पुष्पेषु, किम् ?-'दानभक्तैषणासु रताः' दानग्रहणाद्दत्तं गृह्णन्ति नादत्तम्, भक्तग्रहणेन तदपि भक्तं प्रासुकं न पुनराधाकर्मादि, एषणाग्रहणेन गवेषणादित्रय-परिग्रहः, तेषु स्थानेषु 'रताः' सक्ता इति सूत्रसमासार्थः। अवयवार्थं सूत्रस्पर्शिकनिर्युक्त्या प्रतिपादयति-तत्रापि च विहङ्गमं व्याचष्टे

[illegible]

नक्का-वगमसंहावा, ईहा-ऽवाया कहं जुत्ता ? ॥२७९॥

खिप्प-चिराइभेआ, अमोग्गहा तो वि

संसारिवण्णाणं।

[illegible] ॥२८०॥

स किमोग्गहो त्ति भण्णए [illegible]

अह उवयारा कीरइ, तो सुण जह जुज्जए सो वि ॥२८१॥

सामण्णमेत्तगहणं, नेच्छइ

आ समयमोग्गहो पढमो।

तत्तोऽणंतरमीहियवत्थुविसेसस्स जोऽवाओ ॥२८३॥

सो पुणरीहावायावेक्खाओ उग्गहो

[illegible]

यति, गुणश्च संज्ञा च गुणसंज्ञे गुणः-अन्वर्थः संज्ञा पारिभाषिकी ताभ्यां सिद्धिः गुणसंज्ञासिद्धिः, सिद्धिशब्दः सम्बन्धवाचकः, तथा च लोकेऽपि "सिद्धर्भवतु" इत्युक्ते इष्टार्थसम्बन्ध एव प्रतीयत इति, तया गुणसंज्ञासिद्धया हेतुभूतया, किम् ?-'द्विविधो' द्विप्रकारः, गुणसिद्धया-अन्वर्थसम्बन्धेन तथा संज्ञासिद्धया च-यदृच्छाभिधानयोगेन च। आह-यद्येवं द्विविध इति न वक्तव्यम्, गुणसज्ञासिद्धयेत्यनेनैव द्वैविध्यस्य गतत्वात्, न, अनेनैव प्रकारेणेह द्वैविध्यं, आगम-नोआगमादिभेदेन नेति ज्ञापनार्थमिति गाथार्थः ॥ तत्र 'यथोद्देशं निर्देश' इति न्यायमाश्रित्य गुणसिद्धया यो भावविहङ्गमस्तमभिधित्सुराह-

**नि.[११९]** विहमागासं भण्णइ गुणसिद्धि तप्पइट्ठिओ लोगो।
तेन उ विहङ्गमो सो भावत्थो वा गई दुविहा ॥

**वृ.**-विजहाति-विमुञ्चति जीवपुद्गलानिति विहं, ते हि स्थितिक्षयात्स्वयमेव तेभ्य आकाश-प्रदेशेभ्यश्च्यवन्ते, तांश्च्यवमानान्विमुञ्चतीति, शरीरमपि च मलगण्डोलकादि विमुञ्चत्येव (इति) मा भूत् संदेह इत्यत आह-आकाशं भण्यते, न शरीरादि, संज्ञाशब्दत्वात्, आकाशन्ते दीप्यन्ते स्वधर्मोपेता आत्मादयो यत्र तदाकाशम्, किम् ?-संतिष्ठत इत्यादिक्रियाव्यपोहार्थमाह-'भण्यते' आख्यायते, गुणसिद्धिरित्येतत्पदं गाथाभङ्गभयादस्थाने प्रयुक्तम्, संबन्धश्चास्य [redacted]

भावगतिः पूर्ववत्तां प्राप्य- अभ्युपगम्याश्रित्य, किम्? 'अस्तिकायास्तु' धर्मादयः, तुशब्द एवकारार्थः, स चावधारणे, तस्य च व्यवहितः प्रयोगः, भावगतिमेव प्राप्य न पुनः कर्मगतिं, 'सर्वे विहङ्गमाः खलु' सर्वे- चत्वारः नाकाशमाधारत्वात्, 'विहङ्गमा इति' विहं गच्छन्त्य- वतिष्ठन्ते स्वसत्तां बिभ्रतीति विहङ्गमाः, खलुशब्दोऽवधारणे, विहङ्गमा एव, न कदाचिन्न विहङ्गमा इति। 'कर्मगतेः' प्राग्निरूपितशब्दार्थायाः, किम्?-'इमौ भेदौ' वक्ष्यमाणलक्षणाविति गाथार्थः॥

तावेवोपदर्शयन्नाह-

नि.[१२१] विहगगई चलणगई कम्मगई उ समासओ दुविहा।
तदुदयवेययजीवा विहंगमा पप्प विहगगई॥

वृ.-इह गम्यतेऽनया नामकर्मान्तर्गतया प्रकृत्या प्राणिभिरिति गतिः, विहायसि आकाशे गतिर्विहायोगतिः, कर्मप्रकृतिरित्यर्थः, तथा चलनगतिरिति, चलिरयं परिस्पन्दने-वर्तते, चलनं स्पन्दमित्येकोऽर्थः, चलनं च तद्गतिश्च सा चलनगतिः-गमनक्रियेति भावः। कर्मगतिस्तु समासतो द्विविधेत्यत्र तुशब्द एवकारार्थः, स चावधारणे कर्मगतिरेव द्विविधा न भावगतिः, तस्या एकरूपत्वेन व्याख्यातत्वात्, तत्र 'तदुदयवेदकजीवा' इति, अत्र तदित्यनेना- न्तरनिर्दिष्टां विहायोगतिं निर्दिशति, तस्या-विहायोगतेः उदयस्तदुदयो विपाक इत्यर्थः, तथा वेदयन्ति-निर्जरयन्ति उपभुञ्जन्तीति वेदकाः तदुदयस्य वेदकाश्च ते जीवाश्चेति समासः, आह-तदुदयवेदका जीवा एव भवन्तीति विशेषणानर्थक्यम्, न, जीवानां वेदकत्वावेदकत्वयोगेन सफलत्वात्, अवेदकाश्च सिद्धा इति। 'विहङ्गमाः प्राप्य विहायोगति'मिति, अत्र विहे विहायोगतेरुदया- दुद्गच्छन्तीति विहङ्गमाः, 'प्राप्य' आश्रित्य, किं प्राप्य?-'विहायोगतिम्' विहायोगतिरुक्ता तां, विपर्यस्तान्यक्षराण्येवं तु द्रष्टव्यानि-विहायोगतिं प्राप्य तदुदयवेदकजीवा विहङ्गमा इति-गाथार्थः॥ अधुना द्वितीयकर्मगतिभेदमधिकृत्याह-

नि.[१२२] चलनंकम्मगई खलु पडुच्च संसारिणो भवे जीवा।
पोग्गलदव्वाइं वा विहंगमा एस गुणसिद्धी॥

वृ. चलनं-स्पन्दनं, तेन कर्मगतिर्विशेष्यते, कथम्?-चलनाख्या या कर्मगतिः सा चलनकर्मगतिः, एतदुक्तं भवति-कर्मशब्देन क्रियाऽभिधीयते, सैव गतिशब्देन सैव चलनशब्देन च। तत्र गतेर्विशेषणं क्रिया क्रियाविशेषणं चलनम्। कुतः?-व्यभिचाराद्, इह गतिस्तावन्नरका- दिका भवति अतः क्रियया विशेष्यते, क्रियाऽप्यनेकरूपा भोजनादिका ततश्चलनेन विशेष्यते, अतश्चलनाख्या कर्मगतिश्चलनकर्मगतिस्ताम्, अनुस्वारोऽलाक्षणिकः, खलुशब्द एवकारार्थः, स चावधारणे, चलनकर्मगतिमेव, न विहायोगतिं, 'प्रतीत्य' आश्रित्य, किम्?-संसरणं संसारः, संसरणं ज्ञानावरणादिकर्मयुक्तानां गमनं, स एषामस्तीति संसारिणः, अनेन सिद्धानां व्युदासः, 'भवे' इति, अयं शब्दो भवेयुरित्यस्यार्थे प्रयुक्तः, 'जीवा' उपयोगादिलक्षणाः। ततश्चायं वाक्यार्थः-चलनकर्मगतिमेव प्रतीत्य संसारिणो भवेयुर्जीवा विहङ्गमा इति, विहं गच्छन्ति-चलन्ति सर्वैरात्म- प्रदेशैरिति विहङ्गमाः।

तथा 'पुद्गलद्रव्याणि से'त्यादि, पूरणगलनधर्माणः पुद्गलाः, पुद्गलाश्च ते द्रव्याणि च तानि पुद्गलद्रव्याणि, द्रव्यग्रहणं विप्रतिपत्तिनिरासार्थम्, तथा चैते पुद्गलः कैश्चिदद्रव्याः सन्तोऽभ्यु-

पगम्यन्ते, 'सर्वे भावा निरात्मान:' इत्यादिवचनाद्, अत:, पुद्गलानां परमार्थसद्रुपता-ख्यापनार्थं द्रव्यग्रहणम्, वाशब्दो विकल्पवाची, पुद्गलद्रव्याणी वा संसारिणो वा जीवा विहङ्गमा इति। तत्र जीवान्धिकृत्यान्वर्थो निदर्शित:, पुद्गलास्तु विहं गच्छन्तीति विहङ्गमा:, तच्च गमन-मेषां स्वत: परतश्च संभवति, अत्र स्वत: परिगृह्यते, विहङ्ग मा इति च प्राकृतशैल्या जीवापेक्षया वोक्तम्, अन्यथा द्रव्यपक्षे विहङ्गमानीति वक्तव्यम्, एष भावविहङ्गम:, कथम्?-'गुणसिद्ध्या' अन्वर्थ-सम्बन्धेन, प्राकृतशैल्या वाऽन्यथोपन्यास इति गाथार्थ: ॥ एवं गुणसिद्धया भावविहङ्गम उक्त:, साम्प्रतं संज्ञासिद्धया अभिधातुकाम आह-

नि.[१२३] सण्णासिद्धिं पप्प विहंगमा होंति पक्खिणो सव्वे।
इहइं पुन अहिगारो विहासगमनेहि भमरेहिं ॥

वृ.संज्ञानं संज्ञा नाम रूढिरिति पर्याया: तया सिद्धि: संज्ञासिद्धि:, संज्ञासम्बन्ध इतियावत्, तां संज्ञासिद्धिं 'प्राप्य' आश्रित्य, किम्?-विहे गच्छन्तीति विहङ्गमा भवन्ति, के?-पक्षा येषां सन्ति ते पक्षिण:, 'सर्वे' समस्ता हंसादय, पुद्गलादीनां विहङ्गमत्वे सत्यप्यमीषामेव लोके प्रतीतत्वात्, इत्थमनेकप्रकारं विहङ्गममभिधाय प्रकृतोपयोगमुपदर्शयति'इह' सूत्रे, पुन:-शब्दोऽवधारणे, इहैव नान्यत्र 'अधिकार:' प्रस्ताव: प्रयोजनम्, कैरित्याह-विहायोगमनै:' आकाशगमनै: 'भ्रमरै:' षट्पदैरिति गाथार्थ: ॥

नि.[१२४] दानेति दत्तगिण्हण भत्ते सेव फासुगेण्हणया।
एसणतिगंमि निरया उवसंहारस्स सुद्धि इमा ॥

वृ.'दानेति' सूत्रे दानग्रहणं दत्तग्रहणप्रतिपादनार्थम्, दत्तमेव गृह्णन्ति, नादत्तम्, 'भक्त' इति भक्तग्रहणं 'भज सेवायाम्' इत्यस्य निष्ठान्तस्य भवति, अर्थश्चास्य प्रासुकग्रहणं, प्रासुकम्-आधाकर्मादिरहितं गृह्णन्ति, नेतरदिति, एसण त्ति एषणाग्रहणम्, 'एषणात्रितये' गवेषणादि-लक्षणे 'निरता:' सक्ता:, उपसंहारस्य-उपनयस्य शुद्धि: 'इयं' वक्ष्यमाणलक्षणेति गाथार्थ: ॥

नि.[१२५] अवि भमरमहुयरिगणा अविदिन्नं आवियंति कुसुमरसं।
समणा पुण भगवंतो नादिन्नं भोत्तुमिच्छंति ॥

वृ.अपि भ्रमरमधुकरीगणा, मधुकरीग्रहणमिहापि स्त्रीसंग्रहार्थं, जातिसंग्रहार्थमिति चान्ये, अविदत्तं सन्तं किम्?-आपिबन्ति 'कुसुमरसं' कुसुमासवम्, श्रमणा: पुनर्भगवन्तो नादत्तं भोक्तु मिच्छन्तीति विशेष इति गाथार्थ: ॥ साम्प्रतं सूत्रेणैवोपसंहारविशुद्धिरुच्यते-कश्चिदाह-'दाणभत्तेसणे रया' इत्युक्तम्, यत एवमत एव लोको भक्त्याकृष्टमानसस्तेभ्य: प्रयच्छ-त्याधा-कर्मादि, अस्य ग्रहणे सत्त्वोपरोध:, अग्रहणे स्ववृत्त्यलाभ इति, अत्रोच्यते-

*मू.(४) वयं च वित्तिं लब्भामो, न य कोइ उवहम्मइ।*
*अहागडेसु रीयंते, पुप्फेसु भमरा जहा ॥*

वृ.वयं च वृत्तिं 'लप्स्याम:' प्राप्स्याम: तथा यथा न कश्चिदुपहन्यते, वर्तमानैष्यत्कालोपन्यास-स्त्रैकालिकन्यायप्रदर्शनार्थ:, तथा चैते साधव: सर्वकालमेव 'यथाकृतेषु' आत्मार्थमभि-निर्वर्तितेष्वाहारादिषु 'रीयन्ते' गच्छन्ति, वर्तन्ते इत्यर्थ:, 'पुष्पेषु भ्रमरा यथा' इति, एतश्च पूर्व भावितमेवेति सूत्रार्थ: ॥ यतश्चैवमतो-

मू.(५) *महुगारसमा बुद्धा, जे भवंति अनिस्सिया।*
*नानापिंडरया दंता, तेन वुच्चंति साहुणो ॥ तिबेमि*

वृ. 'मधुकरसमा' भ्रमरतुल्याः बुध्यन्ते स्म बुद्धा-अधिगततत्त्वा इत्यर्थः, क एवंभूता - इत्यत आह-ये भवन्ति भ्रमन्ति वा 'अनिश्रिताः' कुलादिष्वप्रतिबद्धा इत्यर्थः, अत्राह-

नि.[१२६] अस्संजएहिं भमरेहिं जइ समा संजया खलु भवंति।
एवं(यं) उवमं किच्चा नूनं अस्संजया समणा ॥

वृ. 'असंयतैः' कुतश्चिदप्ययनिवृत्तैः, 'भ्रमरैः' षट्पदैः यदि 'समाः' तुल्याः 'संयताः' साधवः, खल्विति समा एव भवन्ति, ततश्चासंज्ञिनोऽपि ते, अत एवैनामित्थंप्रकारामुपमां कृत्वा इदमापद्यते - नूनमसंयताः श्रमणा इति गाथार्थः ॥ एवमुक्ते सत्याहाचार्यः - एतच्चायुक्तं, सूत्रोक्त-विशेषणतिरस्कृतत्वात्, तथा च बुद्धग्रहणादसंज्ञिनो व्यवच्छेदः, अनिश्रितग्रहणाच्चासंयत-तत्वस्येति। निर्युक्तिकारस्त्वाह-

नि.[१२७] उवमा खलु एस कया पुव्वुत्ता देसलक्खणोवणया।
अनिययवित्तिनिमित्तं अहिंसअनुपालणट्ठाए ॥

वृ-व्याख्या - उपमा खलु 'एषा' मधुकरसमेत्वादिरूपा कृता 'पूर्वोक्तात्' पूर्वोक्तेन 'देश-लक्षणोपनयाद' देशलक्षणोपनयेन, यथा चन्द्रमुखी कन्येति, तृतीयार्थे चेह पञ्चमी, इयं चानियत-वृत्तिनिमित्तं कृता, अहिंसानुपालनार्थम्, इदं च भावय(यिष्य)त्येवेति गाथार्थः ॥

नि.[१२८] जह दुमगणा उ तह नगरजणवया पयणपायणसहावा।
जह भमरा तह मुणिणो नवरि अदत्तं न भुंजंति ॥

वृ. यथा 'द्रुमगणाः' वृक्षसङ्घाताः स्वभावत एव पुष्पफलनस्वभावाः तथैव 'नगरजनपदा' नगरादिलोकाः स्वयमेव पचनपाचनस्वभावा वर्तन्ते, यथा भ्रमरा इति, भावार्थं वक्ष्यति, तथा मुनयो नवरम्-एतावान्विशेषः-अदत्तं स्वामिभिर्न भुञ्जन्त इति गाथार्थः ॥ अमुमेवार्थं स्पष्टयति-

नि.[१२९] कुसुमे सहावफुल्ले आहारंति भमरा जह तहा उ।
भत्तं सहावसिद्धं समणसुविहिया गवेसंति ॥

वृ. 'कुसुमे' पुष्पे 'स्वभावफुल्ले' प्रकृतिविकसिते 'आहारयन्ति' कुसुमरसं पिबन्ति 'भ्रमरा' मधुकरा 'यथा' येन प्रकारेण कुसुमपीडामनुत्पादयन्तः 'तथा' तेनैव प्रकारेण 'भक्तम्' ओदनादि 'स्वभावसिद्धम्' आत्मार्थं कृतम् उद्गमादिदोषरहितम् इत्यर्थः, श्रमणाश्च ते सुविहिताश्च श्रमणसुविहिताः-शोभनानुष्ठानवन्त इत्यर्थः 'गवेषयन्ति' अन्वेषयन्तीति गाथार्थः ॥ साम्प्रतं पूर्वोक्तो यो दोषः मधुकरसमा इत्यत्र तत्परिजिहीर्षयैव यावतोपसंहारः क्रियते तदुपदर्शयन्नाह-

नि.[१३०] उवसंहारो भमरा जह तह समणावि अवहजीवित्ति।
दंतत्ति पुण पयंमी नायव्वं वक्कसेसमिणं ॥

वृ. 'उपसंहार' उपनयः, भ्रमरा यथा अवधजीविनः तथा 'श्रमणा अपि' साधवोऽप्येतावतै-वांशेनेति गाथादलार्थः ॥ इतश्च भ्रमरसाधूनां नानात्वमवसेयं, यत आह सूत्रकारः 'नानापिण्डरया दन्ता' इति नाना-अनेकप्रकारोऽपिग्रहविशेषात्प्रतिगृहमल्पाल्पग्रहणाश्च पिण्डआहारपिण्डः,

नाना चासौ पिण्डश्च नानापिण्डः, अन्तप्रान्तादिर्वा, तस्मिन् रता-अनुद्वेगवन्तः, 'दान्ता' इन्द्रिय-दमनेन, अनयोश्च स्वरूपमधस्तपसि प्रतिपादितमेव, अत्र चोपन्यस्तगाथाचरम-दलस्यावसरः 'दान्ता' इति पुनः पदे सौत्रे, किम् ? -ज्ञातव्यो वाक्यशेषोऽयमिति गाथार्थः ॥

किंविशिष्टो वाक्यशेषः ?, दान्ता ईर्यादिसमिताश्च । तथा चाह-

नि.[१३१] जह इत्थ चेव इरियाइएसु सव्वंमि दिक्खियपयारे।
तसथावरभूयहियं जयंति सब्भावियं साहू॥

वृ. यथा 'अत्रैव' अधिकृताध्ययने भ्रमरोपमयैषणासमितौ यतन्ते, तथा ईर्यादिष्वपि तथा सर्वस्मिन् 'दीक्षितप्रचारे' साध्वाचरितव्य इत्यर्थः, किम् ? -त्रसस्थावरभूतहितं यतन्ते 'साद्भाविकं' पारमार्थिकं साधव इति गाथार्थः ॥

अन्ये पुनरिदं गाथादलं निगमने व्याख्यानयन्ति, न च तदतिचारु, यत आह-

नि.[१३२] उवसंहारविसुद्धि एस समत्ता ऽनिगमनं तेनं।
वुच्चंति साहुणोत्ति (य) जेणं ते महुयरसमाणा॥

वृ.उपसंहारविशुद्धिरेषा समाप्ता तु, अधुना निगमनावसरः, तच्च सौत्रमुपदर्शयति' निगमन-मिति' द्वारपरामर्शः, तेनोच्यन्ते साधव इति, येन प्रकारेण ते मधुकरसमाना-उक्तान्यायेन भ्रमरतुल्या इति गाथार्थः ॥ निगमनार्थमेव स्पष्टयति

नि.[१३३] तम्हा दयाइगुणसुट्ठिएहिं भमरोव्व अवहवित्तीहिं।
साहूहिं साहिउ त्ति उक्किट्ठं मंगलं धम्मो॥

वृ.तस्माद्दयादिगुणसुस्थितैः, आदिशब्दात् सत्यादिपरिग्रहः, भ्रमरइवावधवृत्तिभिः, कैः ?-साधुभिः 'साधितो' निष्पादितः, 'उत्कृष्टं मङ्गलम्' प्रधानं मङ्गलं 'धर्मः' प्रागिनरूपितशब्दार्थ इति गाथार्थः ॥ इदानीं निगमनविशुद्धिमभिधातुकाम आह-

नि.[१३४] निगमनसुद्धी तित्थंतरावि धम्मत्थमुज्जया विहरे।
भण्णइ कायाणं ते जयणं न मुणंति न करेंति॥

वृ.निगमनशुद्धिः प्रतिपाद्यते, अत्राह-'तीर्थान्तरीया अपि' चरकपरिव्राजकादयः, किम् ?-'धर्मार्थं' धर्माय 'उद्यता' उद्युक्ता विहरन्ति, अतस्तेऽपि साधवः एवेत्यभिप्रायः । भण्यतेऽत्र प्रतिवचनम्, 'कायानां' पृथिव्यादीनां 'ते' चरकादयः, किम् ?-यतनां-प्रयत्नकरणलक्षणां 'न मन्यन्ते(मुणन्ति)' न जानन्ति न मन्यते वा तथाविधागमाश्रवणात्, न कुर्वन्ति, परिज्ञानाभावात्, भावितमेवेदमधस्तादिति गाथार्थः ॥ किंच-

नि.[१३५] न य उग्गमाइसुद्धं भुंजंती महुयरा वऽनुवरोही।
नेव य तिगुत्तिगुत्ता जह साहू निच्चकालंपि॥

वृ. न चोद्गमादिशुद्धं भुञ्जते, आदिशब्दादुत्पादनादिपरिग्रहः, 'मधुकरा इव' भ्रमरा इव सत्त्वानामनुपरोधिनः सन्तो, नैव च त्रिगुप्तिगुप्ताः, यथा साधवो नित्यकालमपि, एतदुक्तं भवति-यथा साधवो नित्यकालं त्रिगुप्तिगुप्ता एवं ते न कदाचिदपि, तत्परिज्ञानशून्यत्वात्, तस्मान्नैते साधव इति गाथार्थः ॥ साधव एव तु साधवः, कथम् ?, यतः-

नि.[१३६] कायं वायं च मनं च इंदियाइं च पंच दमयंति।

धारेंति बंभचेरं संजमयंति कसाए य ॥

वृ. कायं वाचं मनश्चेन्द्रियाणि च पञ्च दमयन्ति, तत्र कायेन सुसमाहितपाणिपादास्तिष्ठन्ति गच्छन्ति वा, वाचा निष्प्रयोजनं न ब्रुवते प्रयोजनेऽप्यालोच्य सत्त्वानुपरोधेन, मनसा अकुशलमनोनिरोधं कुशलमनउदीरणं च कुर्वन्ति, इन्द्रियाणि पञ्च दमयन्ति इष्टानिष्टविषयेषु रागद्वेषाकरणेन, पञ्चेति साङ्ख्यपरिकल्पितैकादशेन्द्रियव्यच्छेदार्थम्, तथा च वाक्पाणिपादपायूपस्थमनांसीन्द्रियाणि तेषामिति, धारयन्ति ब्रह्मचर्यं, सकलगुप्तिपरिपालनात्, तथा संयमयन्ति कषायाँश्च, अनुदयेनोदयविफलीकरणेन चेति गाथार्थ: ॥

नि. [१३७] जं च तवे उज्जुत्ता तेनेसिं साहुलक्खणं पुन्नं।
तो साहुणो त्ति भण्णति साहवो निगमनं चेयं ॥

वृ. यच्च 'तपसि' प्राग्वर्णितस्वरूपे, किम्? - 'उद्युक्ता' उद्यता: तेन कारणेनैषां साधुलक्षणं 'पूर्णं' अविकलम्, कथम्? - अनेन प्रकारेण सा[illegible]र्गमिति साधव:, यत-श्चैवं तत: साधव एव भण्यन्ते साधवो, न चरकादय इति, निगमनं चैतदिति गाथार्थ: ॥ इत्थमुक्तं दशावयवम्, प्रयोगं त्वेवं वृद्धा दर्शयन्तिअहिंसादिलक्षण धर्मसाधका: साधव एव, स्थावरजङ्गमभूतोपरोधपरिहारित्वात्, तदन्यैवंविधपुरुषवत्, विपक्षो दिगम्बरभिक्षुभौतादिवत्, इह ये स्थावरजङ्गमभूतोपरोधपरिहारिणस्ते उभयप्रसिद्धैवंविधपुरुषवदहिंसादिलक्षणधर्मसाधका दृष्टा:, तथा च साधव: स्थावरजङ्गमभूतोपरोधपरिहारित्वात्तेऽहिंसादिलक्षणधर्मसाधका: साधव एवेति निगमनम्, पक्षादिशुद्धयस्तु निदर्शिता एवेति न प्रतन्यन्ते ॥ एवमर्थाधिकारद्वयवशात् पञ्चावयवदशावयवाभ्यां वाक्याभ्यां व्याख्यातमध्ययनमिदम्, इदानीं भूयोऽपि भङ्ग्यन्तरभाजा दशावयवेनैव वाक्येन सर्वमध्ययनं व्याचष्टे निर्युक्तिकार: -

नि. [ १३८ ] ते उ इति विभत्ती विवक्खपडिसेहो।
दिट्ठंतो आसंका तप्पडिसेहो निगमनं च ॥

वृ. ते इति अवयवा:, तु: पुन:शब्दार्थ:, तु पुनरमी प्रतिज्ञादय: - तत्र प्रतिज्ञानं प्रतिज्ञा-वक्ष्यमाणस्वरूपेत्येकोऽवयव:, तथा विभजनं विभक्ति: - तस्या विषयविभागकथनमिति द्वितीय:, तथा हिनोतिगमयति जिज्ञासितधर्मविशिष्टानर्थानिति हेतुस्तृतीय:, तथा विभजनं विभक्तिरिति पूर्ववच्चतुर्थ:, तथा विसदृश: पक्षो विपक्ष: साध्यादिविपर्यय इति पञ्चम:, तथा प्रतिषेधनं प्रतिषेध: विपक्षस्येति गम्यते इत्ययं षष्ठ:, तथा दृष्टमर्थमन्तं नयतीति दृष्टान्त इति सप्तम:, तथा आशङ्काप्रतिषेध इति नवम:, तथा निश्चितं गमनं निगमनं निश्चितोऽवसाय इति दशम:, चशब्द उक्तमुच्चयार्थ इति गाथासमासार्थ: ॥ व्यासार्थं तु प्रत्यवयवं वक्ष्यति ग्रन्थकार एव, तथा चाह-

नि. [१३९] धम्मो मंगलमुक्किट्ठंति पइन्ना अत्तवयणनिद्देसो।
सो य इहेव जिनमए नन्नत्थ पइन्नपविभत्ति ॥

वृ. 'धर्मो मङ्गलमुत्कृष्ट' मिति पूर्ववत् इयं प्रतिज्ञा, आह-केयं प्रतिज्ञेति?, उच्यते, 'आप्तवचननिर्देश' इति तत्राप्त: - अप्रतारक:, अप्रतारकश्चाशेषरागादिक्षयाद्भवति, उक्तं च -

"आगमो ह्याप्तवचनमाप्तं दोषक्षयाद्विदु:।
वीतरागोऽनृतं वाक्यं, न ब्रूयाद्धेत्वसंभवात् ॥"

तस्य वचनम् आसवचनं तस्य निर्देश आसवचननिर्देशः, आह- अयमागम इति, उच्यते, विप्रतिपन्नसंप्रतिपत्तिनिबन्धनत्वेनैष एव प्रतिज्ञेति न दोषः, पाठान्तरं वा साध्यवचननिर्देश इति, साध्यत इति साध्यम् उच्यत इति वचनम्-अर्थः यस्मात्स एवोच्यते, साध्यं च तद्वचनं च साध्यवचनं साध्यार्थ इत्यर्थः, तस्य निर्देशः प्रतिज्ञेति, उक्तः प्रथमोऽवयवः, अधुना द्वितीय उच्यते-स च-अधिकृतो धर्मः किम् ?-'इहैव जिनमते' अस्मिन्नेव मौनीन्द्रे प्रवचने "नान्यत्र' कपिलादिमतेषु, तथाहि-प्रत्यक्षत एवोपलभ्यन्ते वस्त्राद्यपूतप्रभूतोदकाद्युपभोगेषु परिवाट्प्रभृतयः प्राण्युपमर्दं कुर्वाणाः, ततश्च कुतस्तेषु धर्मः ?, इत्याद्यत्र बहु वक्तव्यं तत्तु नोच्यते, ग्रन्थविस्तरभयाद् भावितत्वाच्चेति। प्रतिज्ञा-प्रविभक्तिरियं-प्रतिज्ञाविषयविभागकथनमिति गाथार्थः॥

उक्तो द्वितीयोऽवयवः, अधुना तृतीय उच्यते-तत्र

नि.[१४०] सुरपूइओत्ति हेऊ धम्मट्ठाणे ठिया उ जं परमे।
हेउविभत्ती निरुवहि जियाण अवहेण य जियंति॥

वृ.-सुरा-देवास्तैः पूजितः सुरपूजितः, सुरग्रहणमिन्द्राद्युपलक्षणम्, इतिशब्द उपप्रदर्शने, कोऽयम् ?-'हेतुः' पूर्ववत्, हेत्वर्थसूचकं चेदं वाक्यम्, हेतुस्तु सुरेन्द्रादिपूजितत्वादिति द्रष्टव्यः, अस्यैव सिद्धतां दर्शयति-'धर्मः' पूर्ववत् तिष्ठत्यस्मिन्निति स्थानम्, धर्मश्चासौ स्थानं च धर्मस्थानम्, स्थानम्-आलयः, तस्मिन् स्थिताः, तुरयमेवकारार्थः, स चावधारणे, अयं चोपरिष्टात् क्रियया सह योक्ष्यते, 'यद्' यस्मात्, किंभूते धर्मस्थाने ?-'परमे' प्रधाने, किम् ?-सुरेन्द्रादिभिः पूज्यन्त एवेति वाक्यशेषः, इति तृतीयोऽवयवः, अधुना चतुर्थ उच्यते-हेतुविभक्तिरियम-हेतु-विषय-विभागकथनम्, अथ क एते धर्मस्थाने स्थिता इत्यत्राह-'निरुपधयः' उपधिः छद्म मायेत्यनर्थान्तरम्, अयं च क्रोधाद्युपलक्षणम्, ततश्च निर्गता उपध्यादयः सर्व एव कषाया येभ्यस्ते निरुपधयो-निष्कषायाः, 'जीवानां' पृथ्वीकायादीनाम् 'अवधेन' अपीडया, चशब्दात्तपश्चरणा-दिना च हेतुभूतेन 'जीवन्ति' प्राणान् धारयन्ति ये त एव धर्मस्थाने स्थिताः, नान्य इति गाथार्थः॥

उक्त-श्चतुर्थोऽवयवः, अधुना पञ्चममभिधित्सुराह-

नि.[१४१] जिनवयणपदुट्ठेवि हु ससुराईए अधम्मरुइणोऽवि।
मंगलबुद्धीइ जनो पणमइ आईदुयविवक्खो॥

वृ.-इह विपक्षः पञ्चम इत्युक्तम्, स चायम्-प्रतिज्ञाविभक्त्योरिति, जिनाःतीर्थकराः तेषां वचनमागमलक्षणं तस्मिन् प्रद्विष्टा-अप्रीता इति समासस्तान्, अपिशब्दादप्रद्विष्टानपि, हु इत्ययं निपातोऽवधारणार्थः अस्थानप्रयुक्तश्च, स्थानं तु दर्शयिष्यामः, 'श्वसुरादीन्' श्वसुरो-लोकप्रसिद्धः, आदिशब्दात्पित्रादिपरिग्रहः, न विद्यते धर्मे रुचिर्येषां तेऽधर्मरुचयस्तान्, अपिशब्दाद्धर्म-रुचीनपि, किम् ?- 'मङ्गलबुद्धया' मङ्गलप्रधानया धिया, मङ्गलबुद्धयैव नामङ्गल-बुद्धयेत्येवम-वधारणस्थानम्, किम् ?-'जनो' लोकः, प्रकर्षेण नमति प्रणमति, 'आद्यद्वयविपक्ष' इति अत्राद्यद्वयं प्रतिज्ञा तच्छुद्धिश्च तस्य विपक्षः साध्यादिविपर्यय इति आद्यद्वयविपक्षः, तत्राधर्मरुचीनपि मङ्गलबुद्धया जनः प्रणमतीत्यनेन प्रतिज्ञाविपक्षमाह, तेषामधर्माव्यतिरेकात्, जिनवचन-प्रद्विष्टानपीत्यमेन तु तच्छुद्धेः, तत्रापि हेतुप्रयोगप्रवृत्त्या धर्मसिद्धेरिति गाथार्थः॥

नि.[१४२] बिइयदुयस्स विवक्खो सुरेहिं पूज्जंति जन्नजाईवि।

बुद्धाईवि सुरणया वुच्चन्ते नायपडिवक्खो ॥

वृ. द्वयोः पूरणं द्वितीयं द्वितीयं च तद्द्वयं च द्वितीयद्वयं-हेतुस्तच्छुद्धिश्च, इदं च प्रागुक्तद्वयापेक्षया द्वितीयामुच्यते, तस्यायं विपक्षः-इह सुरैः पूज्यन्ते यज्ञयाजिनोऽपीति, इयमत्र भावना-यज्ञयाजिनो हि मङ्गलरूपा न भवन्त्यथ च सुरैः पूज्यन्ते ततश्च सुरपूजितत्वमकारणमिति, एष हेतुविपक्षः, तथा अजितेन्द्रियाः सोपधयश्च यतस्ते वर्तन्ते अतोऽनेनैव ग्रन्थेन 'धर्मस्थाने स्थिताः परम' इत्यादिकाया हेतुविभक्तेरपि विपक्ष उक्तो वेदितव्य इति। उदाहरणविपक्षमधिकृत्याह-बुद्धादयोऽप्यादिशब्दात्कापिलादिपरिग्रहः, ते किम् ?-'सुरनता' देवपूजिता 'उच्यते' भण्यन्ते तच्छासनप्रतिपन्नैरिति ज्ञातप्रतिपक्ष इति गाथार्थः ॥

आह-ननु दृष्टान्तमुपरिष्टाद्वक्ष्यति, एवं ततश्च तत्स्वरूप उक्ते तत्रैव विपक्षस्तत्प्रतिषेधश्च वक्तुं युक्तः तत्किमर्थमिह विपक्षः तत्प्रतिषेधश्चाभिधीयते ?, उच्यते, विपक्षसाम्यादधिकृत एव विपक्षद्वारे लाघवार्थमभिधीयते, अन्यथेदमपि पृथग्द्वारं स्यात्, तथैव तत्प्रतिषेधोऽपि द्वारान्तरं प्राप्नोति, तथा च सति ग्रन्थगौरवं जायते, तस्माल्लाघवार्थमत्रैवोच्यत इत्यदोषः।

आह-"दिट्ठतो आसंका तप्पडिसेहो" त्ति वचनात् उत्तरत्र दृष्टान्तमभिधायपुनराशङ्कां तत्प्रतिषेधं च वक्ष्यत्येव, तदाशङ्का च तद्विपक्ष एव, तत् किमर्थमिह पुनर्विपक्षप्रतिषेधावभिधीयते ?, उच्यते, अनन्तरपरम्पराभेदेन दृष्टान्तद्वैविध्यख्यापनार्थम्, यः खल्वनन्तरमुक्तोऽपि परोक्षत्वादागमगम्यत्वाद्दार्ष्टान्तिकार्थसाधनायालं न भवति तत्प्रसिद्धये चाध्यक्षसिद्धो योऽन्य उच्यते स परम्परादृष्टान्तः, तथा च तीर्थकरांस्तथा साधूँश्च द्वावपि भिन्नावेवोत्तरत्र दृष्टान्तावभिधास्येते, तत्र तीर्थकृल्लक्षणं दृष्टान्तमङ्गीकृत्येह विपक्षप्रतिषेधावुक्तौ, साधूँस्त्वधिकृत्य तत्रैवाशङ्कातत्प्रतिषेधौ दर्शयिष्यते इत्यादोषः। स्यान्मतं-प्रागुक्तेन विधना लाघवार्थमनुक्ते एव दृष्टान्ते उच्यतां कामम्, इहैव दृष्टान्तविपक्षस्तत्प्रतिषेधश्च, स एव दृष्टान्तः किमित्युत्तरत्रोपदिश्यते ? येन हेतविभक्तेरनन्तरमिहैव न भण्यते, तथाहि-अत्र दृष्टान्ते भण्यमाने प्रतिज्ञादीनामिव द्विरूपस्यापि दृष्टान्तस्यार्हत्साधुलक्षणस्य एतावेव विपक्षतत्प्रतिषेधावुपपद्येते, ततश्च साधुलक्षणस्य दृष्टान्तस्याशङ्कातत्प्रतिषेधावुत्तरत्र न पृथग् वक्तव्यौ भवतः, तथा च सति ग्रन्थलाघवं जायते, तथा प्रतिज्ञाहेतूदाहरणरूपाः सविशुद्धकास्त्रयोऽप्यवयवाः क्रमेणोक्ता भवन्तीति, अत्रोच्यते, इहाभिधीयमाने दृष्टान्तस्येव प्रतिज्ञादीनमपि प्रत्येकमाशङ्कातत्प्रतिषेधौ वक्तव्यौ स्तः, तथा च सत्यवयवबहुत्वं, दृष्टान्तस्य वा प्रतिज्ञादीनामिव विपक्षतत्प्रतिषेधाभ्यां पृथगाशङ्कातत्प्रतिषेधौ न वक्तव्यौ स्याताम्, एवं सति दशावयवा न प्राप्नुवन्ति, दशावयवं चेदं वाक्यं भङ्ग्यन्तरेण प्रतिपिपादयिषितम्, अस्यापि न्यायस्य प्रदर्शनार्थम्, अत एव यदुक्तं 'साधुलक्षणदृष्टान्त-स्याशङ्कातत्प्रतिषेधावुत्तरत्र न पृथग् वक्तव्यौ स्याता' मित्यादि तदपाकृतं वेदितव्यम्, इत्यलं प्रसङ्गेन। एवं प्रतिज्ञादीनां प्रत्येकं विपक्षोऽभिहितः, अधुनाऽयमेव प्रतिज्ञादिविपक्षः पञ्चमोऽवयवो वर्तत इत्येद्दर्शयन्निदमाह-

नि.[१४३] एवं तु अवयवाणं चउण्ह पडिवक्खु पंचमोऽवयवो।
एत्तो छट्ठोऽवयवो विवक्खपडिसेह तं वोच्छं॥

वृ. 'एवम्' इत्ययम्, एव(वं)कार उपप्रदर्शने, तुरवधारणे, अयमेव 'अवयवानां' प्रमाणाङ्ग-

लक्षणानां 'चतुर्णां' प्रतिज्ञादीनां 'प्रतिपक्षो' विपक्षः, पञ्चमोऽवयव इति, आह- दृष्टान्तस्याप्यत्र विपक्ष उक्त एव, तत्किमर्थं चतुर्णामित्युक्तम् ?, उच्यते, हेतोः सपक्षविपक्षाभ्यामनुवृत्ति-व्यावृत्तिरूपत्वेन दृष्टान्तधर्मत्वात्, तद्विपक्ष एव चास्यान्तर्भावाददोष इति। उक्तः पञ्चमोऽवयवः षष्ठ उच्ये, तथा चाह-'इत' उत्तरत्र 'षष्ठोऽवयवो' विपक्षप्रतिषेधस्तं 'वक्ष्ये' अभिधास्य इति गाथार्थः ॥ इत्थं सामान्येनाभिधायेदानीमाद्यद्वयविपक्षप्रतिषेधमभिधातुकाम आह-

नि.[१४४]　　सायं संमत्त पुमं हासं रइ आउनामगोयसुहं।
धम्मफलं आइदुगे विवक्खपडिसेह मो एसो॥

वृ. 'सायं'ति सातवेदनीयं कर्म 'संमत्तं'ति सम्यक्त्वं सम्यग्भावः सम्यक्तमोहनीयं कर्मैव, 'पुमं' ति पुंवेदमोहनीयं 'हासं'ति हस्यतेऽनेनेति हासः तद्भावो हास्यं-हास्यमोहनीयम्, रम्यतेऽति रतिः-क्रीडाहेतुः रतिमोहनीयं कर्मैव, 'आउनामगोयसुहं'ति अत्र शुभशब्दः प्रत्येक-मभिसंबध्यते अन्ते वचनात्, ततश्च आयुः शुभं नाम शुभं गोत्रं शुभम्, तत्रायुः शुभं तीर्थकरादि-सम्बन्धि नामगोत्रे अपि कर्मणी शुभे तेषामेव भवतः, तथाहि-यशोनामादि शुभं तीर्थकरादीनामेव भवति, तथोच्चैर्गोत्रं तदपि शुभं तेषामेवेति, 'धर्मफल'मिति धर्मस्य फलम् धर्मफलं, धर्मेण वा फलं धर्मफलमं, एतद् अहिंसादेर्जिनोक्तस्यैव धर्मस्य फलम्, अहिंसादिना जिनोक्तेनैव वा धर्मेण फलमवाप्यते, सर्वमेव चैतत्सुखहेतुत्वाद्धितम्, अतः स एव धर्मो मङ्गलं न श्वसुरादयः, तथाहि-मङ्ग्यते हितमनेनेति मङ्गलम्, तच्च यथोक्तधर्मेणैव मङ्ग्यते नान्येन, तस्मादसावेव मङ्गलं न जिनवचनबाह्याः श्वसुरादय इति स्थितम्।

आह-'मङ्गलबुद्धयैव जनः प्रणमती'त्युक्तं तत्कथम् ? इति, उच्यते, मङ्गलबुद्धयापि गोपा-लाङ्गनादिर्मोहतिमिरोपप्लुतबुद्धिलोचनो जनः प्रणमन्नपि न मङ्गलत्वनिश्चायायलम्, तथाहि न तैमिरिकद्विचन्द्रोपदर्शनं सचेतसां चक्षुष्मतां द्विचन्द्राकारायाः प्रतीतेः प्रत्ययतां प्रतिपद्यते, अत-द्रुप एव तद्रुपाध्यारोपद्वारेण तत्प्रवृत्तेरिति। 'आइदुगं'ति आद्यद्वयं प्रागुक्तं तस्मिन् आद्यद्वयविषये, विपक्षप्रतिषधः, 'मो' इति निपातो वाक्यालङ्कारार्थः 'एष' इति यथा वर्णित इति गाथार्थः ॥

इत्थमाद्यद्वयविपक्षप्रतिषेधः प्रतिपादितः सम्प्रति हेतुतच्छुद्धयोर्विपक्षप्रतिषेध-प्रतिपादयिष्येदमाह-

नि.[१४५]　　अजिइंदिय सोवहिया वहगा जइ तेऽवि नाम पुज्जंति।
अग्गीवि होज्ज सीओ हेउविभत्तीण पडिसेहो॥

वृ. न जितानी श्रोत्रादीनीन्द्रियाणि यैस्ते तथोच्यन्ते उपधिश्छद्म मायेत्येनर्थान्तरम्, उपधिना सह वर्तन्त इति सोपधयो-मायाविनः परव्यंसका इतियावत् अथवा उपदधातीत्युपधिः वस्त्रा-द्यनेकरूपः परिग्रहः, तेन सह वर्त्तन्ते ये ते तथाविधा महापरिग्रहा इत्यर्थः, वधन्तीति वधकाः-प्राण्युपमर्दकर्तारः, 'जइ तेऽवि नाम पुज्जंति'त्ति यदीति पराभ्युपगमसंसूचकः, त इति याज्ञिकाः, अपिः संभावने, नाम इति निपातो वाक्यालङ्कारार्थः, येऽजितेन्द्रियादिदोषदुष्टा यज्ञयाजिनो वर्त्तन्ते, यदि ते नाम पूज्यन्ते तर्ह्यग्निरपि भवेच्छीतः, न च कदाचिदप्यसौ शीतो भवति, तथा वियदिन्दी-वरस्रजोऽपि वान्ध्येयोरःस्थलशोभामादधीरन्, न चैतद् भवति, यथैवमादिरत्यन्ताभाव-स्तथेदमपीति मन्यते, अथापि कालदौर्गुण्येन कथञ्चिदविवेकिनाजनेन पूज्यन्ते तथापि तेषां न

मङ्गलत्वसंप्रसिद्धिः, अप्रेक्षावतामतद्रूपेऽपि वस्तूनि तद्रूपाध्यारोपेण प्रवृत्तेः, तथाहि- अकलङ्क- धियामेव प्रवृत्तिर्वस्तुनस्तद्वत्तां गमयति, अतथाभूते वस्तुनि तद्बुद्ध्या तेषामप्रवृत्तेः, सुविशुद्धबुद्धयश्च दैत्यामरेन्द्रादयः, ते चाहिंसादिलक्षणं धर्ममेव पूजयन्ति न यज्ञयाजिनः तस्माद्दैत्यामरेन्द्रादि- पूजितत्वाद्धर्म एवोत्कृष्टं मगलं न याज्ञिका इति स्थितम्, 'हेऊविभत्तीण' - त्ति एष हेतुतद्विभक्तयोः 'पडिसेहो'त्ति विपक्षप्रतिषेधः, विपक्षशब्द इहानुक्तोऽपि प्रकरणात्-ज्ञातव्य इति गाथार्थः ॥ एवकहेतुतच्छुद्धयोर्विपक्षप्रतिषेधो दर्शितः, साम्प्रतं दृष्टान्त - विपक्षप्रतिषेधं दर्शयन्नाह-

नि.[१४६] बुद्धाई उवयारे पूयाठाणं जिना उ सब्भावं।
दिट्ठंते पडिसेहो छट्ठो एसो एवयवो उ॥

वृ. 'बुद्धादयः' आदिशब्दात्कपिलादिपरिग्रहः, उपचारइति 'सुपां सुपो भवन्ती'ति न्यायादुप- चारेण किञ्चिदतीन्द्रियं कथयन्तीतिकृत्वा न वस्तुस्थित्या पूजायाः स्थानं पूजास्थानम्, जिनास्तु 'सद्भावं' परमार्थमधिकृत्येति वाक्यशेषः सर्वज्ञत्वाद्यसाधारणगुणयुक्तत्वादिति भावना, 'दृष्टान्त- प्रतिषेध' इति विपक्षशब्दलोपाद् दृष्टान्तविपक्षप्रतिषेधः, किम्? -षष्ठ एषोऽवयवः, तुर्विशेष- णार्थः, किं विशिनष्टि? -सप्तोऽप्ययमनन्तरोदितः प्रतिज्ञादिविपक्षप्रतिषेधः पञ्चप्रकारोऽप्येक एवेति गाथार्थः ॥ षष्ठमवयवमभिधायेदानीं सप्तं दृष्टान्तनामानमभिधातुकाम आह-

नि.[१४७] अरिहंत मग्गगामी दिट्ठंतो साहुणोऽवि समचित्ता।
पागरएसु गिहीसु एसंते अवहमाणा उ॥

वृ. पूजामर्हन्तीत्यर्हन्तः, न रुहन्तीति वा अरुहन्तः, किम्? -दृष्टान्त इति सम्बन्धः, तथा 'मार्गगामिन' इति प्रक्रमात्तदुपदिष्टेन मार्गेण गन्तुं शीलं येषां त एव गृह्यन्ते, के च त इत्यत- आह-'साधवः' साधयन्ति सम्यग्दर्शनादियोगैरपवर्गमिति साधवः, तेऽपि दृष्टान्त इति योगः, किंभूताः? -'समचित्ता' रागद्वेषरहितचित्ता इत्यर्थः, किमिति तेऽपि दृष्टान्त इति?, अहिंसादिगुण- युक्तत्वात्, आह च-'पाकरतेषु' आत्मार्थमेव पाकसक्तेषु 'गृहीषु' अगारिषु 'एषन्ते' गवेषयन्ति पिण्डपातमित्यध्याहारः, किं कुर्वाणा इत्यत आह- 'अवहमाणा उ' न घ्नन्तोऽघ्नन्तः, तुरवधारणार्थः, ततश्चाघ्नन्त एव, आरम्भाकरणेन पीडामकुर्वाणा इत्यर्थः। एवं द्विविधोऽपि दृष्टान्त उक्तः, दृष्टान्त- वाक्यं चेदं, स तु संस्कृत्य कर्तव्योऽर्हदादिवदिति गाथार्थः ॥

उक्तः सप्तमोऽवयवः, साम्प्रतमष्टमभिधित्सुराह-

नि.[१४८] तत्थ भवे आसंका उद्दिस्स जइवि कीरए पागो।
तेन र विसमं नायं वासतणा तस्स पडिसेहे॥

वृ. 'तत्र' तस्मिन् दृष्टान्ते 'भवेदाशङ्का' भवत्याक्षेपः, तथा 'उद्दिश्य' अङ्गीकृत्य 'यतीनपि' संयतानपि, अपिशब्दादपत्यादीन्यपि, 'क्रियते' निर्वर्त्यते पाकः, कैः? -गृहिभिरिति गम्यते, ततः किमित्यत आह-तेन कारणेन, र इति निपातः किलशब्दार्थः, 'विषमम्' अतुल्यं 'ज्ञातम्' उदाहरणं, वस्तुतः पाकोपजीवित्वेन साधूनाममवद्यवृत्त्यभावदिति, भावितमेवैतत् पूर्वम्, इत्यष्ट- मोऽवयवः, इदानीं नवममधिकृत्याह-'वर्षातृणानि तस्य प्रतिषेधे' इति, एतच्च भाष्यकृता प्राक् प्रपञ्चितमेवेति न प्रतन्यत इति गाथार्थः ॥ उक्तो नवमोऽवयवः, साम्प्रतं चरममभिधित्सुराह-

नि.[१४९] तम्हा उ सुरनराणं पुज्जत्ता मंगलं सया धम्मो।

दसमो एस अवयवो पइन्नहेऊ पुणोवयणं ॥

वृ. यस्मादेवं तस्मात् 'सुरनराणां' देवमनुष्याणां पूज्यत इति पूज्यस्तद्भावस्तस्मात् पूज्यत्वात् 'मङ्गलं' प्राग्निरूपितशब्दार्थं 'सदा' सर्वकालं 'धर्मः' प्रागुक्तः, 'दशम एषोऽवयव' इति सङ्ख्याकथनम्, किंविशिष्टोऽयमित्यत आह-'प्रतिज्ञाहेत्वोः पुनर्वचनं' पुनर्हेतुप्रतिज्ञावचनमिति गाथार्थः ॥ उक्तं द्वितीयं दशावयवं, साधनाङ्गता चावयवानां विनेयापेक्षया विशिष्टप्रतिपत्तिजनकत्वेन भावनीयेति। उक्तोऽनुगमः, साम्प्रतं नया उच्यन्ते-ते च नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूतभेदभिन्नाः खल्वोधतः सप्त भवन्ति, स्वरूपं चैतेषामध आवश्यकसामायिकाध्ययने न्यक्षेण प्रदर्शितमेवातो नेह प्रतन्यते, इह पुनः स्थानाशून्यार्थमेते ज्ञानक्रियानयद्वयान्तर्भावद्वारेण समासतः प्रोच्यन्ते-ज्ञाननयः क्रियानयश्च, तत्र ज्ञाननयदर्शनमिदम्-ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्तत्वात्, तथा चाह-

नि.[१५०] नायंमि गिण्हियव्वे अगिण्हियव्वंमि चेव अत्थंमि।
जइयव्वमेव इह जो उवएसो सो नओ नामं ॥

वृ. 'णायंमि'त्ति ज्ञाते सम्यक्परिच्छिन्ने 'गिण्हियव्वे'त्ति ग्रहीतव्य उपादेये 'अगिण्हियव्वंमि'त्ति अग्रहीतव्येऽनुपादेये हेय इत्यर्थः, चशब्दः खलूभयोर्ग्रहीतव्याग्रहीतव्योर्ज्ञातत्वानुकर्षणार्थः उपेक्षणीयसमुच्चयार्थो वा, एवकारस्त्ववधारणार्थः, तस्य चैवं व्यवहितः प्रयोगो द्रष्टव्यः-ज्ञात एव ग्रहीतव्ये तथाऽग्रहीतव्ये तथोपेक्षणीये चार्थे तु ज्ञात एव नाज्ञाते, 'अत्थंमि'त्ति अर्थे ऐहिकामुष्मिके, तत्रैहिको ग्रहीतव्यः स्रक्चन्दनाङ्गनादिः अग्रहीतव्यो विषशस्त्रकण्टकादिः उपेक्षणीयः तृणादिः, आमुष्मिको ग्रहीतव्यः सम्यग्दर्शनादिः अग्रहीतव्यो मिथ्यात्वादिः उपेक्षणीयो विवक्षयाऽभ्युदयादिरिति, तस्मिन्नर्थे 'यतितव्यमेवे'त्ति अनुस्वारलोपाद्यतितव्यम्, एवम्-अनेन प्रक्रमेणैहिकामुष्मिकफलप्राप्त्यर्थिना सत्त्वेन प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य इत्यर्थः। इत्थं चैतदङ्गीकर्तव्यम्, सम्यग्ज्ञाने प्रवर्त्तमानस्य फलविसंवाददर्शनात्, तथा चान्यैरप्युक्तम्-

"विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता।
मिथ्याज्ञानात्प्रवृत्तस्य, फलप्राप्तेरसंभवात् ॥"

तथाऽऽमुष्मिकफलप्राप्त्यर्थिनापि ज्ञात एव यतितव्यम्, तथा चागमोऽप्येवमेव व्यवस्थितः, यत उक्तम्-

"पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए।
अन्नाणी किं काही ?, किंवा णाहिति छेयपावगं ? ॥"

इतश्चैतदेवाङ्गीकर्त्तव्यं यस्मात्तीर्थकरगणधरैरगीतार्थानां केवलानां विहारक्रियाऽपि निषिद्धा, तथा चागमः-

"गीयत्थो य विहारो बीओ गीयत्थमीसिओ चेव।
इत्तो तइयविहारो नाणुन्नाओ जिनवरेहिं ॥"

यस्मादन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं न प्रतिपद्यत इत्यभिप्रायः। एवं तावत्क्षायोपशमिकं ज्ञानमधिकृत्योक्तं, क्षायिकम(प्य)ङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव विज्ञेयम्, यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षां प्रतिपन्नस्योत्कृष्टतपश्चरणवतोऽपि न

तावदपवर्गप्राप्तिः संजायते यावज्जीवाजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति, तस्माज्ज्ञानमेव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम् 'इति जो उवएसो सो नओ नामं'ति 'इति' एवमुक्तेन न्यायेन य उदपेशो-ज्ञानप्राधान्यख्यापनपरः स नयो नाम-ज्ञाननय इत्यर्थः, अयं च ज्ञानवचनक्रियारूपेऽस्मिन्नध्ययने ज्ञानरूपमेवेदमिच्छति, ज्ञानात्मकत्वादस्य, वचनक्रिये तु तत्कार्यत्वात्तदायत्तत्वान्नेच्छति, गुणभूते चेच्छति इति गाथार्थः ॥ उक्तो ज्ञाननयः, अधुना क्रियानयावसरः, तद्दर्शनं चेदम्-क्रियैव प्रधानं, ऐहिकामुष्मिकफलप्राप्तिकारणं, युक्तियुक्त्वात्, तथा चायमप्युक्तलक्षणामेव स्वपक्षसिद्धये गाथामाह-

नायंमि गिण्हियव्वे अगिण्हियव्वंमि चेव अत्थंमि।
जइयव्वमेव इह जो उवएसो सो नओ नामं॥

अस्याः क्रियानयदर्शनानुसारेण व्याख्या-ज्ञाते ग्रहीतव्ये अग्रहीतव्ये चैव अर्थे ऐहिकामुष्मिकफलप्राप्त्यर्थिना यतितव्यमेव, न यस्मात्प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवतोऽप्यभिलषितार्थावाप्तिर्दश्यते, तथा चान्यैरप्युक्तम्-

"क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम्।
यतः स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत्॥"

तथाऽऽमुष्मिकफलप्राप्त्यर्थिनाऽपि क्रियैव कर्त्तव्या, तथा च मौनीन्द्रप्रवचनमप्येवमेव व्यवस्थितम्, यत उक्तम्-

"चेइयकुलगणसंघे आयरियाणंच पवयणसुए य।
सव्वेसुवि तेन कयं तवसंजममुज्जमंतेणं॥"

इतश्चैतदेवमङ्गीकर्त्तव्यम्, यस्मात्तीर्थकरगणधरैः क्रियाविकलाना ज्ञानमपि विफलमेवोक्तं, तथा चागमः-

"सुबहुंपि सुयमहीयं किं काही चरणविप्पमुक्कस्स?।
अंधस्स जह पलित्ता दीवसयसहस्सकोडीवि॥१॥"

दृशिक्रियाविकलत्वात्तस्येत्यभिप्रायः। एवं तावत्क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तम्, चारित्रं क्रियेत्यनर्थान्तरम्, क्षायिकमप्यङ्गीकृत्य प्रकृष्टफलसाधकत्वं तस्यैव विज्ञेयम्, यस्मादर्हतोऽपि भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावन्मुक्त्यवाप्तिः संजायते, यस्मा(याव)दखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोच्चारणमात्रकालावस्थायिनी सर्वसंवररूपा चारित्रक्रिया नावाप्तेति, तस्मात्क्रियैव प्रधानमैहिकामुष्मिकफलप्राप्तिकारणमिति स्थितम्। 'इति जो उवएसो सो नओ नामं'ति 'इति' एवमुक्तेन न्यायेन य उपदेशः किम्?-क्रियाप्राधान्यख्यापनपरः स नयो नाम-क्रियानय इत्यर्थः। अयं च ज्ञानवचनक्रियारूपेऽस्मिन्नध्ययने क्रियारूपमेवेदमिच्छति, तदात्मकत्वादस्य, ज्ञानवचने तु तदर्थमुपादीयमानत्वादप्रधानत्वान्नेच्छति गुणभूते चेच्छतीति गाथार्थः॥ उक्तः क्रियानयः, इत्थं ज्ञाननयाक्रियानयस्वरूपं श्रुत्वाऽविदिततदभिप्रायो विनेयः संशयापन्नः सन्नाह-किमत्र तत्त्वं?, पक्षद्वयेऽपि युक्तिसंभवाद्, आचार्यः पुनराह-अथवा ज्ञानक्रियानयमतं प्रत्येकमभिधायाधुना स्थितपक्षमुपदर्शयन् पुनराह-

नि.[१५१] सव्वेसिंपि नयाणं बहुविहवत्तव्वयं निसामेत्ता।

तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू॥

वृ. 'सर्वेषा'मिति मूलनयानामपिशब्दात्तद्भेदानां च द्रव्यास्तिकादीनां 'बहुविधवक्तव्यतां' सामान्यमेव विशेषा एव उभयमेव वाऽनपेक्षमित्यादिरूपाम्, अथवा नामादीनां नयानां कः कं साधुमिच्छतीत्यादिरूपां 'निशम्य' श्रुत्वा तत् 'सर्वनयविशुद्धं' सर्वनयसंमतं वचनं 'यच्चरणगुणस्थितः साधुः' यस्मात्सर्वनया एव भावविषयं निक्षेपमिच्छन्तीति गाथार्थः॥

नि.[१५२] दुमपुप्फियनिज्जुत्ती समासओ वण्णिया विभासाए।

जिनचउद्दसपुव्वी वित्थरेण कहयंती से अट्ठं॥

व्याख्यायाध्ययनमिदं प्राप्तं यत्कुशलमिह मया किञ्चित्।

सद्धर्मलाभमखिलं लभतां भव्यो जनस्तेन॥

अध्ययनं-१ समाप्तम्

**मुनिदीपरत्न सागरेण संशोधिता सम्पादिता दशवैकालिक सूत्रे प्रथम अध्ययनस्य भद्रबाहुस्वामि विरचिता निर्युक्ति एवं हरिभद्रसूरि विरचिता टीका परिसमाप्ता**

## अध्ययनं-२ श्रामण्यपूर्वं

वृ-व्याख्यातं द्रुमपुष्पिकाध्ययनम्, अधुना श्रामण्यपूर्वकाख्यमारभ्यते, अस्य चायमभिसंबन्धः, इहानन्तराध्ययने धर्मप्रशंसोक्ता, सा चेहैव जिनशासन इति, इह तु तदभ्युपगमे सति मा भूदभिनवप्रव्रजितस्याधृतेः संमोह इत्यतो धृतिमता भवितव्यमित्येतदुच्यते, उक्तं च-

"जस्स धिई तस्सो तवो जस्स तवो तस्स सुग्गई सुलभा।

जे अधिइमंत पुरिसा तवो ऽवि खलु दुल्लहो तेसिं॥"

अनेनाभिसंबन्धेनायातस्यास्याध्ययनस्य चत्वार्यनुयोगद्वाराणि पूर्ववत्, नवरं नामवदध्ययनविषयत्वादुपक्रमादिद्वारकलापस्य व्याप्तिप्राधान्यतो नामनिष्पन्नं निक्षेपमभिधित्सुराह निर्युक्तिकारः-

नि.[१५३] सामण्णपुव्वगस्स उ निक्खेवो होइ नामनिप्फन्नो।

सामण्णस्स चउक्को तेरसगो पुव्वयस्स भवे॥

वृ. श्राम्यतीति श्रमणः, (श्राम्यति तपस्यति) तद्भावः श्रामण्यं, तस्य पूर्वं-कारणं श्रामण्यपूर्वं तदेव श्रामण्यपूर्वकमिति संज्ञायां कन्, श्रामण्यकारणं च धृतिः, तन्मूलत्वात्तस्य, तत्प्रतिपादकं चेदमध्ययनमिति भावार्थः। अतः श्रामण्यपूर्वकस्य तु निक्षेपो भवति नामनिष्पन्नः, कोऽसौ ?-अन्यस्याश्रुतत्वात् श्रामण्यपूर्वकमित्ययमेव, तुशब्दः सामान्यविशेषवशाभविशेषणार्थः, श्रामण्यपूर्वकमिति सामान्ययम्, श्रामण्यं पूर्वं चेति विशेषः, तथा चाह-श्रामण्यस्य चतुष्ककस्त्रयोदशकः पूर्वकस्य भवेन्निक्षेप इति गाथार्थः॥ निक्षेपमेव विवृणोति-

नि.[१५४] समणस्स उ निक्खेवो चउक्कओ होइ आनुपुव्वीए।

दव्वे सरीरभविओ भावेन उ संजओ समणो॥

वृ. 'श्रमणस्य तु' तुशब्दोऽन्येषां च मङ्गलादीनामिह तु श्रमणेनाधिकार इति विशेषणार्थः,

निक्षेपश्चतुर्विधो भवति, 'आनुपूर्व्या' नामादिक्रमेण, नामस्थापने पूर्ववत् द्रव्यश्रमणो द्विधा-आगमतो नोआगमतश्च, आगमतो ज्ञाताऽनुपयुक्तः, नोआगमतस्तु ज्ञशरीरभव्यशरीरतद्व्यतिरिक्तोऽभिलापभेदेन द्रुमवदवसेयः, तं चानेनोपलक्षयति- 'दव्वे सरीरभविउ'त्ति। भावश्रमणोऽपि द्विविध एव-आगमतो ज्ञातोपयुक्तः नोआगमतस्तु चारित्रपरिणामवान् यतिः, तथा चाह-भावतस्तु संयतः श्रमण इति गाथार्थः ॥ अस्यैव स्वरूपमाह-

**नि.[१५५]** जह मम न पियं दुक्खं जाणिय एमेव सव्वजीवाणं।
न हणइ न हणावेइ य सममणई तेन सो समणो।

**वृ.** यथा मम न प्रियं दुःखं, प्रतिकूलत्वात्, ज्ञात्वैवमेव सर्वजीवानां, दुःखप्रतिकूलत्वम्, न हन्ति स्वयं न घातयत्यन्यैः, चशब्दाद् घ्नन्तं च नानुमन्यतेऽन्यम्, इत्यनेन प्रकारेण समम् अणति-तुल्यं गच्छति यतस्तेनासौ श्रमण इति गाथार्थः ॥

**नि.[१५६]** नत्थि य सि कोइ वेसो पिओ व सव्वेसु चेव जीवेसु।
एएण होइ समणो एसो अन्नोऽवि पज्जाओ॥

**वृ.** नास्ति च 'सि' तस्य कश्चिद् द्वेष्यः प्रियो वा सर्वेष्वेव जीवेषु, तुल्यमनस्त्वात्, एतेन भवति सममनाः, समं मनोऽस्येति सममनाः, एषोऽन्योऽपि पर्याय इति गाथार्थः ॥

**नि.[१५७]** तो समणो जइ सुमणो भावेन य जइ न होई पावमणो।
सयणे य जणे य समो समो य मानावमानेसु॥

**वृ.** ततः श्रमणो यदि सुमनाः, द्रव्यमनः प्रतीत्य, भावेन च यदि न भवति पापमनाः, एतत्फलमेव दर्शयति-स्वजने च जने च समः, समश्च मानापमानयोरिति गाथार्थः ॥

**नि.[१५८]** उरगगिरिजलणसागरनहयलतरुगणसमो य जो होई।
भमरमिगधरणिजलरुहरविपवणसमो जओ समणो॥

**वृ.** उरगसमः परकृतबिलनिवासित्वादाहारनास्वादनात्संयमैकदृष्टित्वाच्च, गिरिसमः परीषह-पवनाकम्प्यत्वात्, ज्वलनसमः तपस्तेजः प्रधानत्वात् तृणादिष्विव सूत्रार्थेष्वतृप्तेः एषणीयाशनादौ चाविशेषप्रवृत्तिरिति, सागरसमो गम्भीरत्वाज्ज्ञानादिरत्नाकरत्वात् स्वमर्यादा-नतिक्रमाच्च, नभस्तलसमः सर्वत्र निरालम्बनत्वात्, तरुगणसमः अपवर्गफलार्थिसत्त्वशकुनालयत्वात् वासी-चन्दनकल्पत्वाच्च, भ्रमरसमः अनियतवृत्तित्वात्, मृगसमः संसारभयोद्विग्नत्वात्, धरणिसमः सर्वखेदसहिष्णुत्वात्, जलरुहसमः कामभोगोद्भवत्वेऽपि पङ्कजलाभ्यामिव तदूर्ध्ववृत्तेः, रवि-समः धर्मास्तिकायादिलोकमधिकृत्य विशेषेण प्रकाशकत्वात्, पवनसमः अप्रतिबद्धविहारित्वात्, इत्थमुरगादिसमश्च यतो भवति ततः श्रमण इति गाथार्थः ॥

**प्र.[२]** विसतिणिसवायवंजुलकणियारुप्पलसमेण समणेणं।
भमरुंदुरुनडकुक्कुडअद्दागसमेण होयव्वं॥

**वृ.** श्रमणेन विषसमेन भवितव्यं भावतः सर्वरसानुपातित्वमधिकृत्य, तथा तिनिशसमेन मानपरित्यागतो नम्रेण, वातसमेनेति पूर्ववत्, वञ्जुलो-वेतसस्तत्समेन क्रोधादिविषाभिभूतजीवानां तदपनयनेन, एवं हि श्रूयते-किल वेतसमवाप्य निर्विषा भवन्ति सर्पा इति, कर्णिकारसमेनेति तत्पुष्पवत्प्रकटेन अशुचिगन्धापेक्षया च निर्गन्धेनेति, उत्पलसदृशेन प्रकृति-धवलतया सुगन्धि-

त्वेन च, भ्रमरसमेनेति पूर्ववत्, उन्दुरुसमेन उपयुक्तदेशकालचारितया, नटसमेन तेषु तेषु प्रयोजनेषु तत्तद्वेषकरणेन, कुर्कुटसमेन संविभागशीलतया, स हि किल ग्रासमाहारं पादेन विक्षिप्यान्यैः सह भुङ्क्त इति, आदर्शसमेन निर्मलतया तरुणाद्यनुवृत्तिप्रतिबिम्बभावेन च-

"तरुणंमि होइ तरुणो थेरो थेरेहिं डहरए डहरो।
अद्दाओविव रूवं अनुयत्तइ जस्स जं सीलं॥"

एवंभूतेन श्रमणेन भवितव्यमिति गाथार्थः॥ इयं किल गाथा भिन्नकर्तृकि, अतः पवनादिषु न पुनरुक्तदोष इति॥

साम्प्रतं 'तत्त्वभेदपर्यायैर्व्याख्ये'ति न्यायाच्छ्रमणस्यैव पर्यायशब्दानभिधित्सुराह-

नि.[१५९] पव्वइए अनगारे पासंडे चरग तावसे भिक्खू।
परिवाइए य समणे निग्गंथे संजए मुत्ते॥

वृ. प्रकर्षेण व्रजितो-गतः प्रव्रजितः, आरम्भपरिग्रहादिति गम्यते, अगारं-गृहं तदस्यास्तीत्यगारोगृही न अगारोऽनगारः, द्रव्यभावगृहरहित इत्यर्थः, पाखण्डं-व्रतं तदस्यास्तीति पाखण्डी, उक्तं च-

"पाखण्डं व्रतमित्याहुस्तद्यस्यास्त्यमलं भुवि।
स पाखण्डी वदन्त्यन्ये, कर्मपाशाद्विनिर्गतः (तम्)॥"

चरतीति चरकः तप इति गम्यते, तपोऽस्यास्तीति तापसः, भिक्षणशीलो भिक्षुः भिनत्ति वाऽष्टप्रकारं कर्मेति भिक्षुः, परिसमन्तात्पापवर्जनेन व्रजति-गच्छतीति परिव्राजकः, चः समुच्चये, श्रमणः पूर्ववत्, निर्गतो ग्रन्थान्निर्ग्रन्थः बाह्याभ्यन्तरग्रन्तरहित इत्यर्थः, सम्-एकीभावेनाहिंसादिषु यतःप्रयत्नवान् संयतः, मुक्तो बाह्याभ्यन्तरेण ग्रन्थेनैवेति गाथार्थः॥

नि.[१६०] तिन्ने ताई दविए मुणी य खंते य दन्त विरए य।
लूहे तीरट्ठेऽविय हवंति समणस्स नामाइं॥

वृ. तीर्णवांस्तीर्णः, संसारमिति गम्यते, त्रायत इति त्राता, धर्मकथादिना संसारदुःखेभ्य इति भावः, रागादिभावरहितत्वाद्रव्यम्, द्रवति-गच्छति तांस्तान् ज्ञानादिप्रकारानिति द्रव्यम्, मुनिः पूर्ववत्, चः समुच्चये, क्षाम्यतीति क्षान्तः-क्रोधविजयी, एवमिन्द्रयादिदमना-दान्तः, विरतःप्राणातिपातादिनिवृत्तिः, स्नेहपरित्यागाद्रूक्षः, तीरणार्थोऽस्येति तीरार्थी, संसार-स्येति गम्यते, तीरस्थो सा सम्यक्त्वादिप्राप्तेः संसारपरिमाणात्, एतानि भवन्ति श्रमणस्य 'नामानि' अभिधानानीति गाथार्थः॥ निरूपितः श्रमणशब्दः, अधुना पूर्वशब्दश्चिन्त्यते-अस्य च त्रयोदशविधो निक्षेपः, तथा चाह-

नि.[१६१] नामं ठवणा दविए खेत्ते काले दिसि तावखेत्ते य।
पन्नवगपुव्ववत्थू पाहुडअइपाहुडे भावे॥

वृ. नामस्थापने क्षुण्णे, द्रव्यपूर्वम् अङ्कुराद्बीजं दध्नः क्षीरं फाणिताद्रस इत्यादि, क्षेत्रपूर्वं यवक्षेत्राच्छलिक्षेत्रं, तत्पूर्वकत्वात्तस्य, अपेक्षया चान्यथाऽप्यदोषः, कालपूर्वं पूर्वः कालः शरदः प्रावृट् रजन्या दिवस इत्यादि आवलिकाया वा समय इत्यादि, दिक्पूर्वं पूर्वा दिग्, इयं च रुचकापेक्षया, तापक्षेत्रपूर्वम्-आदित्योदयमधिकृत्य यत्र या पूर्वा दिक्, उक्तं च-"जस्स जओ

अदिच्चो उदेइ सा तस्स होइ पुव्वदिसा'' इत्यादि, प्रज्ञापकपूर्व-प्रज्ञापनं(कं) प्रतीत्य पूर्वा दिक् यदभिमुख एवासौ सैव पूर्वा, पूर्वपूर्वं चतुर्दशानां पूर्वाणामाद्यं, तच्च उत्पादपूर्वम्, एवं वस्तुप्राभृतादिपदेष्वपि योजनीयम्, अप्रत्यक्षररूपाणि चैतानि, भावपूर्वम् - आद्यो भावः स चौदयिक इति गाथार्थः ॥ उक्तो नामनिष्पन्नो निक्षेपः साम्प्रतं सूत्रालापकनिष्पन्न- निक्षेपस्या-वसरः, इत्यादिचर्चः पूर्ववत्तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम्, तच्चेदम् -

मू. ( ६ )                *कहं नु कुज्जा सामण्णं, जो कामे न निवारए।*
*पए पए विसीदंतो, संकप्पस्स वसं गओ ?*

**वृ.** इह च संहितादिक्रमेण प्रतिसूत्रं व्याख्याने ग्रन्थगौरवमिति तत्परिज्ञाननिबन्धनं भावार्थमात्र मुच्यते - तत्रापि कत्यहं कदाहं कथमहमित्याद्यदश्यपाठान्तरपरित्यागेन इत्थं व्याख्याते - 'कथं नु कुर्याच्छ्रामण्यं यः कामान्न निवारयति ?' 'कथं' केन प्रकारेण, नु क्षेपे, यथा कथं नु स राजा यो न रक्षति ?, कथं नु स वैयाकरणो योऽपशब्दान् प्रयुंक्ते, एवं कथं नु स कुर्यात्, 'श्रामण्यं' श्रमणभावं यः कामान्, 'न निवारयति' न प्रतिषेधते ?, किमिति न करोति ?, तत्र ''निमित्त-कारणहेतेषु सर्वासां विभक्तिनां प्रायो दर्शनम्'' इति वचनात् कारणमाह-'पदे पदे विषीदन् संकल्पस्य वशं गतः' कामानिवारणेनेन्द्रियाद्यपराधपदापेक्षया पदे पदे विषीदनात्संकल्पस्य वशंगतत्वात्। (अप्रशस्ताध्यवसायः संकल्पः) इति सूत्रसमासार्थः अवयवार्थं तु सूत्रस्पर्शनिर्युक्त्या प्रतिपादयति - तत्रापि शेषपदार्थान् परित्यज्य कामपदार्थस्य हेयतयोपयोगित्वात्स्वरूपमाह-

नि.[१६२]            नामंठवणाकामा दव्वकामा य भावकामा य।
एसो खलु कामाणं निक्खेवो चउविहो होइ ॥

**वृ.** नामस्थापनाकामा इत्यत्र कामशब्दः प्रत्येकमभिसंबध्यते, द्रव्यकामाश्च भावकामाश्च, चशब्दौ स्वगतानेकभेदसमुच्चयार्थौ, एष खलु कामानां निक्षेपश्चतुर्विधो भवतीति गाथार्थः ॥ तत्र नामस्थापने क्षुण्णत्वादनाहत्य द्रव्यकामान् प्रतिपादयन्नाह-

नि.[१६३]            सद्दरसरूवगंधाफासा उदयंकरा य जे दव्वा।
दुविहा य भावकामा इच्छाकामा मयणकामा ॥

**वृ.** शब्दरसरूपगन्धस्पर्शाः मोहोदयाभिभूतैः सत्त्वैः काम्यन्त इति कामाः, मोहोदयकारीणि च यानि द्रव्याणि संघाटकविकटमांसादीनि तान्यपि मदनकामाख्यभावकामहेतुत्वाद्द्रव्यकामा इति, भावकामानाह-'द्विविधाश्च' द्विप्रकाराश्च भावकामाः, इच्छाकामा मदनकामाश्च, तत्रैषणमिच्छा सैव चित्ताभिलाषस्वरूपत्वात्कामा इतीच्छामाकामाः, मदयतीति तथा मदनः - चित्रो मोहोदयः स एव काम प्रवृत्तिहेतुत्वात्कामा मदनकामा इति गाथार्थः ॥ इच्छाकामान् प्रतिपादयति-

नि.[१६४]       इच्छा पसत्थमपसत्थिगा य मयणंमि वेयउवओगो।
तेनहिगारो तस्स उ वयंति धीरा निरुत्तमिणं ॥

**वृ.** इच्छा प्रशस्ता अप्रशस्ता च, अनुस्वारोऽलाक्षणिकः सुखमुखोच्चारणार्थः, तत्र प्रशस्ता धर्मेच्छा मोक्षेच्छा, अप्रशस्ता युद्धेच्छा, राज्येच्छा, उक्ता इच्छाकामाः, मदनकामानाह 'मदने' इति उपलक्षणार्थत्वान्मदनकामे निरूप्ये कोऽसावित्यत आह- 'वेदोपयोगः' वेद्यत इति वेदः - स्त्रीवेदादिस्तदुपयोगः - तद्विपाकानुभवनम्, तद्व्यापार इत्यन्ये, यथा स्त्रीवेदोदयेन पुरुषं प्रार्थयत

इत्यादि, 'तेनाधिकार' इति मदनकामेन, शेषा उच्चारितसदृशा इति प्ररूपिताः, 'तस्य तु' मदन-कामस्य वदन्ति 'धीराः' तीर्थकरगणधरा निरुक्तम्, 'इदं' वक्ष्यमाणलक्षणमिति गाथार्थः ॥

नि.[१६५] विसयसुहेसु पसत्तं अबुहजनं कामरागपडिबद्धं।
उक्कामयंति जीवं धम्माओ तेन ते कामा ॥

वृ.विषीदन्ति-अवबध्यन्ते एतेषु प्राणिन इति विषयाः-शब्दादयः तेभ्यः सुखानि तेषु प्रसक्तः-आसक्तस्तं, जीवमिति योगः, स एव विशेषयते- अबुधः - अविपश्चिज्जनः -परिजनो यस्य सः अबुधजनस्तम्, अकल्याणमित्रपरिजनमित्यर्थः, अनेन बाह्यं विषय-सुखप्रसक्तिहेतुमाह, 'कामरागप्रतिबद्ध'मिति कामामदनकामास्तेभ्यो रागा-विषयाभिष्वङ्गास्तैः प्रतिबद्धो-व्याप्तस्तम्, अनेन त्वान्तरं विषयसुखप्रसक्तिहेतुमाह, ततश्चाबुधजनत्वात्काम-रागप्रतिबद्धत्वाच्च विषयसुखेषु प्रसक्तमिति भावः, किम् ? -निरुक्तवैचित्र्यादाह-तत्व-प्रत्यनीकत्वादुत्कामयन्ति-अपनयन्ति जीवमनन्तरविशेषितम्, कुतो ?, धर्मात्, यत्तदोर्नि-त्याभिसंबन्धात् येन कारणेन तेन (ते) सामान्येनैव कामरागः कामा इति गाथार्थः ॥ अन्ये पठन्ति-उक्कामयंति अस्मादिदि, अत्र चाबुधजन एव विशेष्यः, शेषं पूर्ववत् ॥

नि.[१६६] अन्नंपिय से नामं कामा रोगत्ति पंडिया बिंति।
कामे पत्थेमाणो रोगे पत्थेइ खलु जंतू ॥

वृ. अन्यदपि च 'एषां' कामानां नाम, किंभूतमित्याह-कामा रोगा 'इति' एवं पण्डिता ब्रुवते, किमित्येतदेवमत आह-कामान् प्रार्थयमानः-अभिलषन् रोगान् प्रार्थयते खलु जन्तुः तद्रूपत्वादेव, कारणे कार्योपचारादिति गाथार्थः ॥

इत्थं पूर्वार्धे सूत्रस्पर्शिक-निर्युक्तिम-भिधायाधुनोत्तरार्धे पदावयवमधिकृत्याह-

नि.[१६७] णामपयं ठवणपयं दव्वपयं चेव होइ भावपयं।
एक्केक्कंपिय एत्तो णेगविहं होइ नायव्वं।

वृ.नामपदं स्थापनापदं द्रव्यपदं चैव भवति भावपदम्, एकैकमपि च 'अत' एतेभ्योऽनेक-विधं भवति ज्ञातव्यमिति गाथासमासार्थः ॥

अवयवार्थं तु नामस्थापने क्षुण्णत्वादनादृत्य द्रव्य-पदमभिधित्सुराह-

नि.[१६८] आउट्टिमउक्किन्नं उन्नेज्जं पीलिमं च रंगं च।
गंथिमवेढिमपूरिम वाइमसंघाइमच्छेज्जं ॥

वृ.आकोट्टिमं जहा रूवओ हेट्ठा वि उवरिंपि मुहं काऊण आउडिज्जति, उत्कीर्णं शिलादिषु नामकादि, तहा बउलादिपुप्फसंठणाणि चिक्खिल्लमयपडिबिंबगाणि काउं पच्चंति, तओ तेसु वग्घारित्ता मयणं छुब्भति, तओ मयणमया पुप्फा हवन्ति, एतदुपनेयम्, पीडावच्च-संवेष्टितवस्त्र-भङ्गावलीरूपं, रक्तावस्वच्छविधिचित्तरूवं रङ्गं, चः समुच्चये, 'ग्रथितं' मालादि, 'वेष्टिमं' पुष्पमयमुकुटरूपं, चिक्खिल्लमयं कुण्डिकारूपं अनेगच्छिड्डं पुप्फधामं पूरिमं, वातव्यं कुविन्दैर्वस्त्रविनिर्मितमश्वादि, संघात्यं-कञ्चुकादि, छेद्यं-पत्रच्छेद्यादि। पदता चास्य पद्यतेऽने-नेत्यर्थयोगात्, द्रव्यता च तद्रूपत्वादिति गाथार्थः ॥ उक्तं द्रव्यपदम्, अधुना भावपदमाह-

नि.[१६९] भावपयंपि य दुविहं अवराहपयं च नो य अवराहं।

नोअवराहं दुविहं माउगनोमाउगं चेव ॥

**वृ.** भावपदमपि च द्विविधम्, द्वैविध्यमेव दर्शयति-अपराधहेतुभूतं पदमपराधपदम्-इन्द्रियादि वस्तु, चशब्दः स्वगतानेकभेदसमुच्चयार्थः, 'नोअवराहं'त्ति चशब्दस्य व्यवहितोपन्यासान्नो-अपराधपदं च, चः पूर्ववत्, नोअपराधमिति-नोअपराधपदं द्विविधम्-'माउअ नोमाउअं चेव'त्ति मातृकापदं नोमातृकापदं च, तत्र मातृकापदं-मातृकाक्षराणि, मातृकाभूतं वा पदं मातृकापदं, यथा दृष्टिवादे "उप्पन्ने इ वा" इत्यादि, नोमातृकापदं त्वन्तरगाथया वक्ष्यतीति गाथार्थः ॥

**नि.[१७०]** नोमाउगंपि दुविहं गहियं च पइन्नयं च बोद्धव्वं ।
गहियं चउप्पयारं पइन्नगं होइ(अ)णेगविहं ॥

**वृ.** 'नोमाउयंपि' त्ति नोमातृकापदमपि द्विविधम्, कथमित्याह-'ग्रथितं च प्रकीर्णकं च बोद्धव्यम्' ग्रथितं रचितं बद्धमित्यनर्थान्तरम्, अतोऽन्यत्प्रकीर्णकं-प्रकीर्णकथोपयोगिज्ञान-पदमित्यर्थः, ग्रथितं चतुष्प्रकारं-गद्यादिभेदात्, प्रकीर्णकं त्वनेकविधम्, उक्तलक्षणत्वा-देवेति गाथार्थः ॥ ग्रथितमभिधातुकाम आह-

**नि.[१७१]** गज्जं पज्जं गेयं चुण्णं च चउव्विहं तु गहियपयं ।
तिसमुट्ठाणं सव्वं इह बेंति सलक्खणा कइणो ।

**वृ.** गद्यं पद्यं गेयं चौर्णं च चतुर्विधमेव ग्रथितपदम्, एभिरेव प्रकारैर्ग्रथनात्, एतच्च त्रिभ्यो धर्मार्थकामेभ्यः समुत्थानं-तद्विषयत्वेनोत्पत्तिरस्येति त्रिसमुत्थानं 'सर्वं' निरवशेषम्, आह-एवं मोक्षसमुत्थानस्य गद्यादेरभावप्रसङ्गः, न, तस्य धर्मसमुत्थान एवान्तर्भावात्, धर्मकार्य-त्वादेव मोक्षस्येति, लौकिकपदलक्षणमेवैतदित्यन्ये, अतस्त्रिसमुत्थानं सर्वम्, 'इह' एवं ब्रुयते 'सलक्षणा' लक्षणज्ञाः कवय इति गाथार्थः ॥

**नि.[१७२]** महुरं हेउनिजुत्तं गहियमपायं वीरामसंजुत्तं ।
अपरिमियं चऽवसाने कव्वं गज्जं ति नायव्वं ॥

**वृ.** गद्यलक्षणमाह-'मधुरं' सूत्रार्थोभयैः श्रव्यम् 'हेतुनियुक्तं' सोपपत्तिकम् 'ग्रथितं' बद्ध-मानुपूर्व्या 'अपादं' विशिष्टच्छन्दोरचनायोगात्पाद-वर्जितम् विरामः-अवसानं तत्संयुक्तमर्थतो न तु पाठतः इत्येके, जहा-जिनवरपादारविंद-संदाणिउरुनिम्मलसहस्स एवमादि असमाणिउं न चिट्ठइत्ति, यतिविशेषसंयुक्त अन्ये अपरि-मितं चावसाने बृहद् भवतीत्येके, अन्ये त्वपरिमितमेव भवति बृहदित्यर्थः, अवसाने मृदु पठ्यत इति शेषः, काव्यं गद्यम्, 'इति' एवंप्रकारं ज्ञातव्यमिति गाथार्थः ॥

**नि.[१७३]** पज्जं तु होइ तिविहं समसद्धसमं च नाम विसमं च ।
पाएहिँ अक्खरेहिँ य एव विहिन्नू कई बेंति ॥

**वृ.** अधुना पद्याह-पद्यं तु, तुशब्दो विशेषणार्थः, भवति 'त्रिविधं' त्रिप्रकारं, सममर्धसमं च नाम विषमं च, कैः सममित्यादि।, अत्राह-पादैरक्षरैश्च, पादैः चतुःपादादिभिरक्षरैः गुरुलघुभिः, अन्ये तु व्याचक्षते-समं यत्र चतुर्ष्वपि पादेषु समान्यक्षराणि, अर्धसमं यत्र प्रथमतृतीययोर्द्वितीय-चतुर्थयोश्च समान्यक्षराणि, विषमं तु सर्वपादेष्वेव विषमाक्षरमित्येवं 'विधिज्ञाः' छन्दःप्रकारज्ञाः कवयो ब्रुवत इति गाथार्थः ॥

नि.[१७४] तंतिसमं तालसमं वण्णसमं गहसमं लयसमं च।
कव्वं तु होइ गेयं पंचविहं गीयसन्नाए॥

वृ. अधुना गेयमाह-तन्त्रीसमं तालसमं वर्णसमं ग्रहसमं लयसमं च काव्यं तु भवति, तु-शब्दोऽवधारणार्थ एव, गीयत इति गेयं, 'पञ्चविधम्' उक्तैर्विधिभिः 'गीतसंज्ञायां' गेयाख्यायाम्, तत्र तन्त्रीसमं वीणादितन्त्रीशब्देन तुल्यं मिलितं च, एवं तालादिष्वपि योजनीयम्, नवरं ताला-हस्ततमाः, वर्णा-निषादपञ्चमादयः, ग्रहा-उत्क्षेपाः, प्रारम्भरसविशेषा इत्यन्ये, लयाः-तन्त्रीस्वन-विशेषाः। तत्थ किल कोणएण तंती छिप्पइ तओ नहेहि अनुमज्जिइ, तत्थ अन्नारिसो सरो उट्ठेइ, सो लयो त्ति गाथार्थः॥

नि.[१७५] अत्थबहुलं महत्थं हेउनिवाओवसग्गगंभीरं।
बहुपायमवोच्छिन्नं गमनयसुद्धं च चुण्णपयं॥ नोअवराहंपयं गयं

वृ.साम्प्रतं चौर्णं पदमाह-अर्थो बहुलो यस्मिंस्तदर्थबहुलम्,
'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः, क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य, चतुर्विधं बाहुलकं वदन्ति॥"

ततश्चैभिः प्रकारैर्बह्वर्थम्, महान्-प्रधानो हेयोपादेयप्रतिपादकत्वेनार्थो यस्मिँस्तन्महार्थम्, 'हेतुनिपातोपसर्गैर्गंभीरम्' तत्रान्यथाऽनुपपत्तिलक्षणो हेतुः, यथा-मदीयोऽयमश्वो विशिष्टचिह्नो-पलक्षितत्वात्, चवास्वल्वादयो निपाताः, पर्युतसमवादय उपसर्गाः, एभिरगाधम्, 'बहुपादम्' अ-परिमितपादम् 'अव्यवच्छिन्नं' श्लोकवद्विरामरहितम्, गमनयैः शुद्धम्, गमाः-तदक्षरोच्चारणप्रवणा भिन्नार्थाः, यथा 'इह खलु छज्जीवणिया० कयरा खलु सा छज्जीवणिया०' इत्यादि, नयाः-नैगमा-दयः प्रतीताः, तुरवधारणे, गमनयशुद्धमेव चौर्णं पदं ब्रह्मचर्याध्ययनपदवदिति गाथार्थः॥

उक्तं ग्रथितं, प्रकीर्णकं लोकादवसेयम्, उक्तं नोअपराधपदम्, अधुना अपराधपदमाह-

नि.[१७६] इंदियविसयकसाया परीसहा वेयणा य उवसग्गा।
एए अवराहपया जत्थ विसीयंति दुम्मेहा॥

वृ.इन्द्रियाणि-स्पर्शनादीनि विषयाः-स्पर्शादयः कषायाः-क्रोधादयः इन्द्रियाणि चेत्यादि-द्वन्द्वः, 'परिषहाः' क्षुत्पिपासादयः 'वेदना' असातानुभवलक्षणा उपसर्गा-दिव्यादयः, एतानि, 'अपराधपदानि' मोक्षमार्गं प्रत्यपराधस्थानानि, 'यत्र' येष्विन्द्रियादिषु सत्सु 'विषीदन्ति' आ(अव)बध्यन्ते, किं सर्व एव?, नेत्याह-दुर्मेधसः क्षुल्लकवत्, कृतिनस्तु एभिरेव कारणभूतैः संसारकान्तारमुत्तरन्तीति गाथार्थः॥

क्षुल्लकस्तु पदे पदे विषीदन् संकल्पस्य वशं गतः, कोऽसौ खुड्डओ त्ति?, कहाणयं-कंकुणओ जहा एगो खंतो सपुत्तो पव्वइओ, सो य चेल्लओ तस्स अईव इट्ठो, सीयमाणो य भणइ-खंता! न सक्केमि अनुवाहणो हिंडिउं, अनुकंपाए खंतेण दिन्नाओ उवाहणाओ, ताहे भणइ-उवरितला सीएणं फुट्टंति, खल्लिता से कयाओ, पुणो भणइ-सीसं मे अईव डज्झइ, ताहे सीसदुवारिया से अणुन्नाया, ताहे भणइ-न सक्केमि भिक्खं हिंडिउं, तो से पडिसए ठियस्स आनेइ, एवं न तरामि खंत! भूमिए सुविउं, ताहे संथारो से अणुन्नाओ, पुणो भणइ-न तरामि खंत! लोयं काउं, तो खुरेण पंकिज्जिय, ताहे भणइ-अण्हाणयं न सक्केमि, तओ से फासुयपाणएण कप्पो दिज्जइ,

आयरियणाउगं वत्थजुयलयं धिप्पइ, एवं जं जं भणइ तं तं सो खंतो नेहपडिबद्धो तस्सनुजाणइ, एवं काले गच्छमाणे पभाणिओ-न तरामि अविरइयाए विणा अच्छिउं खंतत्ति, ताहे खंतो भणइ-सढो, अजोग्गोत्ति काऊण पडिसयाओ निप्फेडिओ, कम्मं काउं न याणेइ, अयाणंतो खण-गंखडीए धाणिं काउं अजिण्णेण मओ, विसयविसट्टो मरिउं महिसो आयाओ, वाहिज्जइ य, सो य खंतो सामण्णपरियागं पालेऊण आउक्खए कालगओ देवेसु उववण्णो, ओहिं पउंजइ, ओहिणा आभोएऊण तं चेल्लयं तेन पुव्वणेहेणं तेसिं गोहाणं हत्थओ किणइ, वेउव्वियभंडीए जोएइ, वाहेइ य गरुगं, तं अतरंतो वोढुं तोत्तएण विंधेउं भणइ-न तरामि खंता! भिक्खं हिण्डिउं, एवं भूमीए सयणं लोयं काउं एवं ताणि वयणानि सव्वाणि उच्चारेइ जाव अविरययाए विना न तरामि खंतत्ति, ताहे एवं भणंतस्स तस्स महिसस्स इमं चित्तं जायं-कहिं एरिसं वक्कं सुअं ति?, ताहे ईहावूहमग्गणगवेसणं करेइ, एवं चिंतयंतस्स तस्स जाईसरणं समुप्पन्नं, देवेन ओही पउत्ता, सं-बुद्धो, पच्छा भत्तंपच्चक्खाइत्ता देवलोगं गओ। एवं पए पए विसीदन्तो संकप्पस्स वसं गच्छइ, जम्हा एस दासो तम्हा अट्ठारससीलंगसहस्साणं सारणाणिमित्तं एएल अवराहपए वज्जेज्ज।

तथा चाह-

नि.[१७७] अट्ठारस उ सहस्सा सीलंगाणं जिनेहिं पन्नत्ता।
तेसिं पडि(रि)रक्खणट्ठा अवराहपए उ वज्जेज्जा॥

वृ. अष्टादश सहस्राणि, तुरवधारणे, अष्टादशैव, शीलं-भावसमाधिलक्षणं तस्याङ्गानि-भेदाः कारणानि वा शीलाङ्गानि तेषां 'जिनैः' प्राग्निरूपितशब्दार्थैः 'प्रज्ञप्तानि' प्ररूपितानि, 'तेषां' शीलाङ्गानां 'परिरक्षणार्थं' परिरक्षणनिमित्तम् 'अपराधपदानि' प्राग्निरूपितस्वरूपाणि 'वर्जयेत्' जह्यादिति गाथार्थः॥

नि.[१७८] जोए करणे सन्ना इंदिय भोमाइ समणधम्मे य।
सीलंगसहस्साणं अट्ठारसगस्स निप्फत्ती॥

वृ. तत्थ ताव जोगो तिविहो, कायेण वायाए मणेणं ति, करणं तिविहं-कयं कारियं अनुमोइयं, सन्ना चउव्विहा, तंजहा-आहारसण्णा भयसण्णा मेहुणसण्णा परिग्गसण्णा, इंदिए पंच, तंजहा-सोइंदिए चक्खिदिए घाणिंदिए जिब्भिंदिए फासिंदिए, पुढविकाइयाइया पञ्च, बेइंदिया जाव पंचेदिंया अजीवनिकायपंचमा, समणधम्मो दसविहो, तंजहा-खंती मुत्ती अज्जवे मद्दवे लाघवे सच्चे तवे संजमे य आकिंचणया बंभचेरवासे। एसा ठाणपरूवणा, इयाणिं अट्ठारसण्हं सीलंगसहस्साणं समुक्कित्तणा-काएणं न करेमि आहारसन्नापडिविरए सोइंदियपरिसंवुडे पुढविकायसमारंभपडिविरए खंतिसंपजुत्ते, एस पढमो गमओ १, इयदानिं बिइओ भण्णइ-काएणं करेमि आहारसण्णापडिविरए सोइंदियपरिसंवुडे पुढविकायसमारंभपडिविरए मुत्तिसंपजुत्ते, एस बीइओ गमओ, इयदानिं तइयओ एवं एएण कमेण जाव दसमो गमओ बंभचेरसंपउत्तो, एस दसमओ गमओ।

एए दस गमा पुढविकायसंजमं अमुंचमाणेण लद्धा, एवं आउकाएणवि दस चेव, एवं जाव अजीवकाएणवि दस चेव, एवमेयं अणूणं सयं गमयाणं सोइंदियसंवुडं अमुंचमाणेण लद्धं, एवं

चक्खिंदिएणवि सयं, घाणिंदिएणवि सयं, जिब्भिंदिएणवि सयं, फासिंदिएणवि सयं, एवमेयाणि पंच गमसयाणि आहारसण्णापडिविरयममुंचमाणेणं लद्धाणि, एवं भयसण्णाएवि पंच सयाणि, मेहुणसण्णाएवि पंचसयाणि, परिग्गह सण्णाएवि पंच सयाणि, एवमेयाणि वीसं गमसयाणि न करेमि अमुञ्चमाणेण लद्धाणि, एवं न कारवेमित्ति वीसं सयाणि, करेंतंपि अन्नं न समणुजाणा-मित्ति वीसं सयाणि, एवमेयाणि छ सहस्साणि कायं अमुंचमाणेण लद्धाणि, एवं वायाएवि छ सहस्साणि, एवं मणेणावि छ सहस्साणि। एवमेतेन प्रकारेण शीलाङ्गसहस्राणामष्टादशकस्य निष्पत्तिर्भवतीति गाथार्थः ॥ न केवलमयमधिकृतसूत्रोक्तं उक्तवच्छ्रामण्याकरणादश्रमणः किन्त्वाजीविकादिभयप्रव्रजितः संक्लिष्टचित्तो द्रव्यक्रियां कुर्वन्नप्यश्रमण एव-अत्याग्येव, कथम् ?, यत आह सूत्रकारः-

मू. (७) *वत्थगंधमलंकारं, इत्थीओ सयणाणि य।*
*अच्छंदा जे न भुंजंति, न से चाइत्ति वुच्चइ ॥*

वृ. 'वस्त्रगन्धालङ्कारानि'ति, अत्र वस्त्राणि-चीनांशुकादीनि गन्धाः-कोष्टपुटादयः अलङ्काराः-कटकादयः, अनुस्वारोऽलाक्षणिकः, स्त्रियोऽनेकप्रकाराः, 'शयनानि' पर्यङ्कादीनि, चशब्द आसनाद्यनुक्तसमुच्चायार्थः, एतानि वस्त्रादीनि किम् ?, 'अच्छन्दाः' अस्ववशा ये केचन 'न भुञ्जते' नासेवन्ते, किं बहुवचनोद्देशेऽप्येकवचननिर्देशः ?, विचित्रत्वात्सूत्रगतेर्विपर्ययश्च भवत्येवेतिकृत्वा, आह-'नासौ त्यागीत्युच्यते' सुबन्धुवन्नासौ श्रमण इति सूत्रार्थः।

कः पुनः सुबन्धुरिति ?, अत्र कथानकमजया नंदो चंदगुत्तेण निच्छूढो, तया तस्स दारेण निगच्छंतस्स दुहिया चंदगुत्ते दिट्ठिं बंधेइ, एवं अक्खाणयं जहा आवस्सए जाव बिंदुसारो राया जाओ, नंदसंतिओ य सुबंधू नाम अमच्चो, सो चाणक्कस्स पदोसमावण्णो छिद्दाणि मग्गइ, अन्नया रायाणं विन्नवेइ-जइवि तुम्हे अम्हं वित्तणं देह तहावि अम्हेहिं तुम्ह हियं वत्तव्वं, भणियं च-तुम्ह माया चाणक्केण मारिया, रन्ना धाई पुच्छिया, आमंति, कारणं ण पुच्छियं, केणवि कारणेण रन्नो य सगासं चाणक्को आगओ, जावं दिट्ठिं न देई ताव चाणक्को चिंतेइ-रुट्ठो एस राया, अहं गयाउओत्तिकाउं दव्वं पुत्त पउत्ताणं दाऊणं संगोवित्ता य गंधा संजोइआ, पत्तयं च लिहिऊण सोऽवि जोगो समुग्गे छूढो, समुग्गो य चउसु मंजूसासु छूढो, तासु छुभित्ता पुणो गन्धोवरए छूढो, तं बहूहिं कीलियाहिं सुघडियं करेत्ता दव्वजायं नातिवग्गं च धम्मे निओइत्ता अडवीए गोकुलट्ठाणे इंगिनिमरणं अब्भुवगओ, रन्ना य पुच्छियं चाणक्को किं करेइ ?, धाई य से सव्वं जहावत्तं परिकहेइ, गहियपरमत्थेण य भणियं अहो मया असमिक्खियं कयं, सव्वंतेउरजोहबलसमग्गो खामेउं निग्गओ, दिट्ठो अनेन करीसमज्झट्ठिओ, खामियं सबहुमाणं, भणिओ अनेन-नगरं वच्चामो, भणइ-मए सव्वपरिच्चाओ कओत्ति।

तओ सुबंधुना राया विन्नविओ- अहं से पूयं करेमि अनुजाणह, अणुन्नाए धूवं डहिऊण तंमि चेव एगप्पएसे करीसस्सोवरि ते अंगारे परिट्ठवेइ, सो य करीसो पलित्तो, दड्ढो चाणक्को, ताहे सुबंधुना राया विन्नविओ-चाणक्कस्स संतियं घरं ममं अनुजाणए, अणुन्नाए गओ, पच्चुविक्खमाणेण य घरं दिट्ठो अपवरओ घट्टिओ, सुबंधू चिंतेइ-किमवि इत्थत्ति कवाडे भंजित्ता उग्घाडिओ, मंजूसं पासइ, सावि उग्घाडिया, जाव समुग्गं पासइ, मघमघंतं गंधं सपत्तयं पेच्छइ, तं पत्तयं वाएइ, तस्स य पत्तगस्स एसो अत्थो-जो एयं चुण्णयं अग्घाइ सो जइ ण्हाइ वा समालभइ

वा अलंकारेइ सीउदगं पिवइ महईए सेज्जाए सुवइ जाणेण गच्छइ गंधव्वं वा सुणेइ एवमाई अन्ने वा इट्ठे विसए सेवेइ जहा साहुणो अच्छंति तह सो जइ न अच्छेइ तो मरइ, ताहे सुबंधुना विण्णासणत्थं अन्नो पुरिसो अग्घावित्ता सद्दाइणो विसए भुंजाविओ मओ य, तओ सुबंधू जीवियट्ठी अकामो साहू जहा अच्छंतोऽवि ण साहू। एवमधिकृतसाधुरपि न साधुः, अतो न त्यागीत्युच्यते, अभिधेयार्थाभावात्। यथा चोच्यते तथाऽभिधातुकाम आह-

*मू. (८) जे य कंते पिए भोए, लद्धे वि पिट्ठिकुव्वइ।*

*साहीणे चयइ भोए, से हु चाइ त्ति वुच्चई।*

वृ. चशब्दस्यावधार(णार्थ)त्वात् य एव 'कान्तान्' कमनीयान् शोभनानित्यर्थः 'प्रियान्' इष्टान्, इह कान्तमपि किञ्चित् कस्यचित् कुतश्चिन्निमितान्तरादप्रियं भवति, यथोक्तम्- "चउहिं ठाणेहिं संते गुणे नासेज्जा, तंजहा-रोसेणं पडिनिवेसेणं अकयण्णुयाए मिच्छत्ताभिनिवेसेणं" अतो विशेषणं प्रियानिति, 'भोगान्' शब्दादीन् विषयान् 'लब्धान्' प्राप्तान् उपनतानितियावत्, 'वि पिट्ठिकुव्वइ' त्ति विविधम्-अनेकैः प्रकारैः शुभभावनादिभिः पृष्ठतः करोति, परित्यजतीत्यर्थः, स च न बन्धनबद्धः प्रोषितो वा किन्तु ? 'स्वाधीनः' अपरायत्तः स्वाधीनानेव त्यजति भोगान्, पुनस्त्यागग्रहणं प्रतिसमयं त्यागपरिणामवृद्धिसंसूचनार्थम्, भोगग्रहणं तु संपूर्णभोगग्रहणार्थं-त्यक्तोपनतभोगसूचनार्थं वा, ततश्च य ईदृशः हुशब्दस्यावधारणार्थत्वात् स एव त्यागीत्युच्यते, भरतादिवदिति।

अत्राह-जइ भरहजंबुनामाइणो जे संते भोए परिच्चयंति ते परिच्चाइणो, एवं ते भणंतस्स अयं दोसो हवइ-जे केऽवि अत्थसारहीणा दमगाइणो पव्वइऊण भावओ अहिंसाइगुणजुत्ते सामण्णे अब्भुज्जुया ते किं अपरिच्चाइणो हवंति ?, आयरिय आह-तेऽवि तिन्नि रयणकोडीओ परिच्चइऊण पव्वइया-अग्गी उदयं महिला तिन्नि रयणाणि लोगसाराणि परिच्चइऊण पव्वइया, दिट्ठंतो-एगो पुरिसो सुधम्मसामिणो सयासे कट्ठहारओ पव्वइओ, सो भिक्खं हिंडंतो लोएण भण्णइ-एसो कट्ठहारओ पव्वइओ, सो सेहत्तेण आयरियं भणइ-ममं अन्नत्थ नेह, अहं न सक्केमि अहियासेत्तए, आयरिएहिं अभओ आपुच्छिओ-वच्चामोत्ति, अभओ भणइ-मास-कप्पपाउग्गं खित्तं किं एयं न भवइ ? जेन अत्थक्के अन्नत्थ वच्चह ?, आयरिएहिं भणियं-जहा सेहनिमित्तं, अभओ भणइ-अच्छह वीसत्था, अहमेयं लोगं उवाएण निवारेमि, ठिओ आयरिओ। बिइए दिवसे तिन्नि रयणकोडीओ ठवियाओ, उग्घोसावियं नगरे-जहा अभओ दानं देइ, लोगो आगओ, भणियं चऽनेन-तस्साहं एयाओ तिन्नि कोडिओ देमि जो एयाइं तिन्नि परिहरइ-अग्गीं पाणियं महिलियं च, लोगो भणइ-एएहिं विना किं सुवन्नकोडिहिं ?, अभओ भणइ-ता किं भणह-दमओत्ति पव्वइओ, जोऽवि निरत्थओ पव्वइओ तेनवि एयाओ तिन्नि सुवन्नकोडीओ परिच्चत्ताओ, सच्चं सामि ! ठिओ लोगो पत्तीओ। तम्हा अत्थपरिहीनोऽवि संजमे ठिओ तिन्नि लोगसाराणि अग्गी उदयं महिलाओ य परिच्चयंतो चाइत्ति लब्भइ। कृतं प्रसङ्गेनेति सूत्रार्थः।

*मू. (९) समाइ पेहाइ परिव्वयंतो, सिया मणो निस्सरई बहिद्धा।*

*न सा महं नोवि अहंपि तीसे, इच्चेव ताओ विणइज्ज रागं।*

वृ. तस्यैवं त्यागिनः 'समया' आत्मपरतुल्यया प्रेक्ष्यतेऽनयेति प्रेक्षा-दृष्टिस्तया प्रेक्षया

दृष्ट्या परि-समन्ताद्व्रजतो-गच्छतः परिव्रजतः, गुरूपदेशादिना संयमयोगेषु वर्तमानस्येत्यर्थः, 'स्यात्' कदाचिद्चिन्त्यत्वात् कर्मगतेः मनो निःसरति 'बहिर्धा' बहिः भुक्तभोगिनः पूर्वक्रीडितानुस्मरणादिना अभुक्तभोगिनस्तु कुतूहलादिना मनः-अन्तःकरणं निःसरति-निर्गच्छति बहिर्धा-संयमगेहाद्बहिरित्यर्थः । एत्थ उदाहरणम्-जहा एगो रायपुत्तो बाहिरियाए उवट्ठाणसालाए अभिरमंतो अच्छइ, दासी य तेण अंतेण जलभरियघडेण बोलेइ, तओ तेन तीए दासीए सो घडो गोलियाए भिन्नो, तं च अधिइं करिंति दट्ठूण पुनरावत्ती जाया, चिंतियं च -

जे चेव रक्खगा ते चेव लोलगा कत्थ कुविउं सक्का ? ।
उदगाउ समुज्जलिओ अग्गी किह विज्झवेयव्वो ॥

पुणो चिक्खलगोलएण तक्खणा एव लहुहत्थयाए तं एडछिड्डं ढक्कियं । एवं जइ संजयस्स - संजमं करेंतस्स बहिया मणो निग्गच्छइ तत्थ पसत्थेण परिणामेण तं असुहसंकप्पछिड्डुं चरित्तजलरक्खणट्ठाए ढक्केयव्वं । केनालम्बनेनेति ?, यस्यां राग उत्पन्नस्तां प्रति चिन्तनीयम्-न सा मम नाप्यहं तस्याः, पृथक्कर्मफलभुजो हि प्राणिन इति, एवं ततस्तस्याः सकाशाद्व्यपनयेत रागं, तत्त्वदर्शिनो हि सन्निवर्त्तन्त (स निवर्त्तते) एव, अतत्वदर्शननिमित्तत्वात्तस्येति ।

तत्थ न सा महं नोऽपि अहंवि तीसेत्ति, एत्थ उदाहरणं-एगो वाणियदारओ, सो जायं उज्झित्ता पव्वइओ, सो य ओहाणुप्पेही भूओ, इमं च घोसेइ-न सा महं नोवि अहंपि तीसे, सो चिंतेइ-सावि ममं अहंपि तीसे, सा ममाणुरत्ता कहमहं तं छड्डेहामित्तिकाउं गहियायारभंडगणेवत्थो चेव संपट्ठिओ । गओ अ तं गामं जत्थ सा सो इ(य) निवाणतडं संपत्तो, तत्थ य सा पुव्वजाया पाणियस्स आगया, सा य साविया जाया पव्वइउकामा य, ताए सो नाओ, इयरो तं न याणइ, तेन सा पुच्छिया-अभुगस्स धूया किं मया जीवइ वा ?, सो चिंतेइ-जइ सासहरा तो उप्पव्वयामि, इयरहा न, ताए नयं-जहा एस पव्वज्जं पयहिउकामो, तो दोवि संसारे भमिस्सामि (मो)त्ति, भणियं चऽणाए-सा अन्नस्स दिन्ना, तओ सो चिंतिउमारद्धो-सच्चं भगवंतेहिं साहूहिं अहं पाढिओ-जहा न सा महं नोवि अहंपि तीसे, परमसंवेगमावण्णो, भणियं चऽनेन-पडिणियत्तामि, तीए वेरग्गपडिओत्ति नाऊण अनुसासिओ 'अनिच्चं जीवियं कामभोगा इत्तरिया' एवं तस्स केवलिपन्नत्तं धम्मं पडिकहेइ, अणुसिट्ठो जाणाविओ य पडिगओ आयरियसगासं पवज्जाए थिरीभूओ । एवं अप्पा साहरेतव्वो जहा तेणंति सूत्रार्थः ॥ एवं तावदान्तरो मनोनिग्रहविधि-रुक्तः, न चायं बाह्यविधिमन्तरेण कर्तुं शक्यते अतस्तद्विधानार्थमाह-

*मू.(१०) आयावयाहि चय सोगमल्लं, कामे कमाही कमियं खु दुक्खं*
*छिंदाहि दोसं विणएज्ज रागं, एवं सुही होहिसि संपराए ॥*

**वृ.** संयमगेहान्मनसोऽनिर्गमनार्थम् 'आतापय' आतापनां कुरु, 'एकग्रहणे तज्जातीय-ग्रहण' मिति न्यायाद्यथानुरूपमूनोदरतादेरपि विधिः, अनेनात्मसमुत्थदोषपरिहारमाह, तथा 'त्यज सौकुमार्यं' परित्यज सुकुमारत्वम्, अनेन तूभयसमुत्थदोषपरिहारम्, तथाहि-सौकुमार्यात्का-मेच्छा प्रवर्तते योषितां च प्रार्थनीयो भवति, एवमुभयासेवनेन 'कामान्' प्राग्निरूपितस्वरूपान् 'क्राम' उल्लङ्घय, यतस्तैः क्रान्तैः क्रान्तमेव दुःखं, भवति इति शेषः, कामनिबन्धनत्वाद्दुःखस्य, खुशब्दोऽवधारणे, अधुनाऽऽन्तरकामक्रमणविधिमाहछिन्द्धि द्वेषं व्यपनय रागं सम्यग्ज्ञानबलेन

विपाकालोचनादिना, क्व ?, कामेष्विति गम्यते, शब्दादयो हि विषया एव कामा इतिकृत्वा। एवं कृते फलमाह- 'एवम्' अनेन प्रकारेण प्रवर्तमानः, किम् ?-सुखमस्यास्तीति सुखी भविष्यसि, क्व ?-'संपराये' संसारे, यावदपवर्गं न प्राप्स्यसि तावत्सुखी भविष्यसि, 'संपराये' परीषहो-पसर्गसंग्राम इत्यन्ये। कृतं प्रसङ्गेनेति सूत्रार्थः ॥

किं च संयमगेहान्मनस एवानिर्गमनार्थमिदं चिन्तयेत्, यदुत-

मू.[११] *पक्खंदे जलियं जोइं, धूमकेउं दुरासयं।*
*नेच्छंति वंतयं भोत्तुं, कुले जाया अगंधने ॥*

वृ. 'प्रस्कन्दन्ति' अध्यवस्यन्ति 'ज्वलितं' ज्वालामालाकुलं न मुर्मुरादिरूपं, कम् ?-'ज्योतिषम्' अग्निं 'धूमकेतुं' धूमचिह्नं, धूमध्वजं नोल्कादिरूपं 'दुरासदं' दुःखेनासद्यतेऽभि-भूयत इति दुरासदस्तं, दुरभिभवमित्यर्थः, चशब्दलोपात् न चेच्छन्ति-न च वाञ्छन्ति 'वान्तं भोक्तुं' परित्यक्तमादातुं, विषमिति गम्यते, के ?-नागा इति गम्यते, किंविशिष्टा इत्याह-कुले 'जाताः' समुत्पन्ना अगन्धने। नागानां हि भेदद्वयं-गन्धनाश्चागन्धनाश्च, तत्थ गंधणा नाम जे डसिए मंतेहिं आकड्डिया तं विसं वणमुहाओ आवियंति, अगंधणाओ अवि मरणमज्झवस्संति न य वंतमावियंति। उदाहरणं द्रुमपुष्पिकायामुक्तमेव। उपसंहारस्त्वेवं भावनीयः-यदि तावत्तिर्यञ्चोऽप्यभिमानमात्रादपि जीवितं परित्यजन्ति न च वान्तं भुञ्जते तत्कथमहं जिनवचना-भिज्ञो विपाकदारुणान् विषयान् वान्तान् भोक्ष्ये ? इति सूत्रार्थः ॥ अस्मिन्नेवार्थे द्वितीयमुदाहरणम्-यदा किल अरिट्ठनेमी पव्वइओ तया रहनेमी तस्स जेट्ठो भाउओ राइमइं उवयरइ, जइ नाम एसा ममं इच्छिज्जा, सावि भगवई निव्विन्नकामभोगा, नायं च तीए-जहा एसो मम अज्झोववण्णो, अन्नया य तीए महुघयसंजुत्ता पेज्जा पीया, रहनेमी आगओ, मयणफलं मुहे काऊण य तीए वंतं, भणियं च-एयं पेज्जं पियाहि, तेण भणियं-कहं वन्तं पिज्जइ ?, तीए भणिओ-जइ न पिज्जइ वंतं तओ अहंपि अरिट्ठनेमिसामिणा वंता कहं पिविउमिच्छसि ?।

तथा ह्यधिकृतार्थसंवाद्येवाह-

मू.[१२] *धिरत्थु ते जसोकामी, जो तं जीवियकारणा।*
*वंतं इच्छसि आवेउं, सेयं ते मरणं भवे ॥*

वृ. तत्र राजीमतिः किलैवमुक्तवती-'धिगस्तु' धिक्शब्दः कुत्सायाम् 'अस्तु' भवतु 'ते' तव, पौरुषमिति गम्यते, हे यशस्कामिन्निति सासूयं क्षत्रियामन्त्रणम्, अथवा अकारप्रश्लेषा-दयशस्कामिन् !, धिगस्तु तव यस्त्वं 'जीवितकारणात्' असंयमजीवितहेतोः वान्तमिच्छस्यापातुं-परित्यक्तां भगवता अभिलषसि भोक्तुम्, अत उत्क्रान्तमर्यादस्य 'श्रेयस्ते मरणं भवेत्' शोभनतरं तव मरणं, न पुनरिदमकार्यसेवनमिति सूत्रार्थः ॥ तओ धम्मो से कहिओ, संबुद्धो पव्वइओ य, राईमईवि तं बोहेऊणं पव्वइया। पच्छा अन्नया कयाइ सो रहनेमी बारवईए भिक्खं हिंडिऊणं सामिसगासमागच्छन्तो वासवद्दलएण अब्भाहओ एक्कं गुहं अणुप्पविट्ठो। राईमईवि सामिणो वंदणाए गया, वंदित्ता पडिस्सयमागच्छइ, अंतरे य वरिसिउमाढत्तो, तिंता य(भिन्ना) तमेव गुहमणुप्पविट्ठा-जत्थ सो रहनेमी, वत्थाणि य पविसारियाणि, ताहे तीए अंगपच्चंगं दिट्ठं, सो रहनेमी तीए अज्झोववन्नो, दिट्ठो अनाए इंगियागारकुसलाए य नाओ असोहणो भावो एयस्स।

ततोऽसाविदमवोचत-

*मू.(१३) अहं च भोगरायस्स, तं चऽसि अंधगवण्हिणो।*

*मा कुले गंधणा होमो, संजमं निहुओ चर॥*

**वृ.** अहं च भोगराज्ञः - उग्रसेनस्य, दुहितेति गम्यते, त्वं च भवसि अन्धकवृष्णेः समुद्रविजयस्य, सुत इति गम्यते, अतो मा एकैकप्रधानकुले आवां गन्धनौ भूव, उक्तं च-'जह न सप्प-तुल्ला होमुत्ति भणियं होइ' अतः संयमं निभृतश्चर- सर्वदुःखनिवारणं क्रियाकलापमव्याक्षिप्तः कुर्विति सूत्रार्थः॥

*मू.(१४) जइ तं काहिसि भावं, जा जा दिच्छसि नारीओ।*

*वायाविद्धुव्व हडो, अट्ठिअप्पा भविस्ससि॥*

**वृ.** किञ्च-यदि त्वं करिष्यसि भावम्-अभिप्रायं प्रार्थनामित्यर्थः, क्व?-या या द्रक्ष्यसि नारीः-स्त्रियः, तासु तासु एताः शोभना एताश्चाशोभना अतः सेवे काममित्येवंभूतं भावं यदि करिष्यसि ततो वातविद्ध इव हडः-वातप्रेरित इवाबद्धमूलो वनस्पतिविशेषः अस्थितात्मा भविष्यसि, सकलदुःखक्षयनिबन्धनेषु संयमगुणेष्व(प्रति)बद्धमूलत्वात् संसारसागरे प्रमादपवनप्रेरित इतश्चेतश्च पर्यटिष्यसीति सूत्रार्थः।

*मू.(१५) तीसे सो वयणं सोच्चा, संजयाइ सुभासियं।*

*अंकुसेण जहा नागो, धम्मे संपडिवाइओ।*

**वृ.** 'तस्याः' राजीमत्या 'असौ' रथनेमिः 'वचनम्' अनन्तरोदितं 'श्रुत्वा' आकर्ण्य, किंविशिष्टायास्तस्याः?-'संयतायाः' प्रव्रजिताया इत्यर्थः, किंविशिष्टं वचनम्?-'सुभाषितं' संवेगनिबन्धनम्, अङ्कुशेन जहा नागो'त्ति, एत्थ उदाहरणं-वसंतपुरं नयरं, तत्थ एगा इब्भण्हुया नदीए ण्हाइ, अन्नो य तरूणो तं दट्ठूण भणइ-

"सुण्हायं ते पुच्छइ एसा नइ पवरसोहियतरङ्गा।

ए ए य नदीरुक्खा अहं च पाएसु ते पडिओ॥"

ताहे सा पडिभणइ-

"सुहया होउ नईते चिरं च जीवंतु जे नईरुक्खा।

सुण्हायपुच्छयाणं घत्तीहामो पियं काउं॥"

सो य तीसे घरं वा दारं वा न याणइ, तीसे व बितिज्जियाणि चेडरूवाणि रुक्खे पलोयंताणि अच्छंति, तेन ताणं पुप्फफलाणि सुबहूणि दिन्नाणि पुच्छियाणि य-का एसा?, तानि भणन्ति-अमुगस्स सुण्हा, सो य तीए विरहं न लहति, तओ परिव्वाइयं ओलग्गिउमाढत्तो, भिक्खा दिन्ना, सा तुट्ठा भणइ-किं करेमि ओलग्गाए फलं?, तेन भणिया-अमुगस्स सुण्हं मम कए भणाहि, तीए गन्तूण भणिया-अमुगो ते एवंगुणजातीओ पुच्छई, ताए रुट्ठाए पउझगाणि धोवन्तीए मसिलित्तएण हत्थेण पिट्ठीए आहया, पंचंगुलियं ठट्ठियं, अवदारेण निच्छुड्ढा, गया तस्स साहइ- नामं पि सा तव न सुणेइ, तेन नायं-कालपंचमीए अवदारेण अइगंतव्वं, अइगओ य, असोगवणियाए मिलियाणि सुत्ताणि य, जाव पस्सवणागएण ससुरेण दिट्ठाणि।

तेन नायं-न एस मम पुत्तो, पारदारिओ कोइ, पच्छा पायाओ तेन नेउरं गहियं, चेइयं च तीए, सो

'विस्रोतसिका' तद्रूपसंदर्शनस्मरणापध्यानकचवरनिरोधतः ज्ञानश्रद्धाजलोज्झनेन संयमस(श)स्यशोषफला चित्तविक्रियेति सूत्रार्थः ॥

मू. (८५) अनायणे चरंतस्स, संसग्गीए अभिक्खणं।
*हुज्ज वयाणं पीला, सामन्नंमि अ संसओ।*

**वृ.** एष सकृच्चरणदोषो वेश्यासामन्तसंगत उक्तः साम्प्रतमिहान्यत्र चासकृच्चरणदोषमाह-'अनायणे'त्ति सूत्रम्, अनायतने-अस्थाने वेश्यासामान्तादौ 'चरतो' गच्छतः 'संसर्गेण' संबन्धेन 'अभीक्ष्णं' पुनः पुनः, किमित्याह-भवेत् 'व्रतानां' प्राणातिपातविरत्यादीनां पीडा, तदाक्षेपतोऽसो भावविराधना, 'श्रामण्ये च' श्रमणभावे च द्रव्यतो रजोहरणादिधारणरूपे भूयो भावव्रतप्रधानहेतौ संशयः, कदाचिदुन्निष्क्रामत्येवेत्यर्थः, तथा च वृद्धव्याख्या-वेसादिगयभावस्स मेहुणं पीडिज्जइ, अनुवओगेणं एसणाकरणे हिंसा, पडुप्पायणे अन्नपुच्छण-अवलणाऽसच्चवयणं, अणणुण्णायवेसाइदरिसणे अदत्तादाणं, ममत्तकरणे परिग्गहो, एवं सव्ववय-पीडा, दव्वसामन्ने पुण संसयो उन्निक्खमणेण त्ति सूत्रार्थः ॥

मू. (८६) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं।*
*वज्जए वेससामंतं, मुनी एगंतमस्सिए॥*

**वृ.** निगमयन्नाह-'तम्हा' इति सूत्रम्, यस्मादेवं तस्मादेतत् विज्ञाय 'दोषम्' अनन्तरोदितं दुर्गतिविर्धनं वर्जयेद्वेश्यासामन्तं मुनि 'एकान्तं' मोक्षमाश्रित इति सूत्रार्थः ॥

आह-प्रथमव्रतविराधनानन्तरं चतुर्थव्रतविराधनोपन्यासः किमर्थम्?, उच्यते, प्राधान्यख्यापनार्थम्, अन्यव्रतविराधनाहेतुत्वेन प्राधान्यम्, तच्च लेशतो दर्शितमेवेति। अत्रैव विशेष-

मू. (८७) *साणं सूइअं गाविं, दित्तं गोणं हयं गयं।*
*संडिम्भं कलहं जुद्धं, दूरओ परिवज्जए॥*

**वृ.** 'साणं'ति सूत्रं, 'श्वानं' लोकप्रतीतम्, 'सूतां गाम्' अभिनवप्रसूतामित्यर्थः 'दृप्तं' च दर्पितं, किमित्याह-गावं हयं गजं, गौः-बलीवर्दो हयः-अश्वो गजो-हस्ती। तथा 'संडिम्भं' बालक्रीडास्थानं 'कलहं' वाक्प्रतिबद्धं 'युद्धं' खड्गादिभिः, एतत् 'दूरतो' दूरेण परि-वर्जयेत्, आत्मसंयमविराधनासंभवात्, श्वसूतगोप्रभृतिभ्य आत्मविराधना, डिम्भस्थाने वन्दनाद्यागमनपतनभण्डनप्रलुठनादिना संयमविराधना, सर्वत्र चात्मपात्रभेदादिनोभयविराधनेति सूत्रार्थः ॥

मू. (८८) *अणुन्नए नावणए, अप्पहिट्ठे अनाउले।*
*इंदिआणि जहाभागं, दमइत्ता मुनी चरे॥*

**वृ.** अत्रैव विधिमाह-'अणुन्नए'त्ति सूत्रम्, 'अनुन्नतो' द्रव्यतो भावतश्च, द्रव्यतो नाकाशदर्शी भावतो न जात्याद्यभिमानवान्, 'नावनतो' द्रव्यभावाभ्यामेव, द्रव्यानवनतोऽनीचकायः भावानवनतः अलब्ध्यादिनाऽदीनः 'अप्रहृष्टः' अहसन् 'अनाकुलः' क्रोधादिरहितः 'इन्द्रियाणि' स्पर्शनादीनि 'यथाभागं' यथाविषयं 'दमयित्वा' इष्टानिष्टेषुस्पर्शादिषु रागद्वेषरहितो 'मुनिः' साधुः 'चरेद्' गच्छेत्, विपर्यये प्रभूतदोषप्रसङ्गात्, तथाहि-द्रव्योन्नतो लोकहास्यः भावोन्नत ईर्यां न रक्षति द्रव्यावनतः बक इति संभाव्यते भावावनतः क्षुद्रसत्त्व इति, प्रहृष्टो योषिद्दर्शनाद्रक्त

इति लक्ष्यते, आकुल एवमेव, अदान्तः प्रव्रज्यानर्ह इति सूत्रार्थः ॥

मू.( ८९ ) *दवदवस्स न गच्छेज्जा, भासमाणो अ गोअरे।*
*हसंतो नाभिगच्छिज्जा, कुलं उच्चावयं सया।*

वृ. किं च -'दवदवस्स'त्ति सूत्रं, 'द्रुतं द्रुतं' त्वरितमित्यर्थः, न गच्छेत् भाषमाणो वा न गोचरे गच्छेत्, तथा हसन्नाभिगच्छेत्, कुलमुच्चावचं सदा, उच्चं-द्रव्यभावभेदाद्विधा-द्रव्योच्चं धवलगृहवासि भावोच्चं जात्यादियुक्तम्, एवमवचमपि द्रव्यतः कुटीरकवासि भावतो जात्यादिहीनमिति। दोषा उभयविराधनालोकोपघातादय इति सूत्रार्थः ॥

मू.( ९० ) *आलोअं थिग्गलं दारं, संधिं दगभवणाणि अ।*
*चरंतो न विनिज्झाए, संकट्ठाणं विवज्जए।*

वृ.अत्रैव विधिमाह-'आलोअं थिग्गलं'ति सूत्रम्, 'अवलोकं' निर्यूहकादिरूपं 'थिग्गलं' चित्तं द्वारादि, संधिः-चित्तं क्षत्रम्, 'उदकभवनानि' पानीयगृहाणि चरन् भिक्षार्थं न 'विनिध्यायेत्' विशेषेण पश्येत्, शङ्कास्थानमेतदवलोकादि अतो विवर्जयेत, तथा च नष्टादौ तत्राशङ्कोपजायत इति सूत्रार्थः ॥

मू.( ९१ ) *रन्नो गिहवईणं च, रहस्सारक्खियाण य।*
*संकिलेसकरं ठाणं, दूरओ परिवज्जए।*

वृ.किंच-'रन्नो'त्ति सूत्रं, राज्ञः-चक्रवर्त्यादेः 'गृहपतीनां' श्रेष्ठिप्रभृतीनां रहसाठाणामिति योगः, 'आरक्षकाणां च' दण्डनायकादीनां 'रहःस्थानं' गुह्यापवरकमन्त्रगृहादि 'संक्लेश-करम्' असदिच्छाप्रवृत्त्या मन्त्रभेदे वा कर्षणादिनेति, दूरतः परिवर्ज्जयेदिति सूत्रार्थः ॥

मू.( ९२ ) *पडिकुट्ठकुलं न पविसे, मामगं परिवज्जए।*
*अचिअत्तकुलं न पविसे, चिअत्तं पविसे कुलं॥*

वृ. किंच-'पडिकुट्ठ' त्ति सूत्रं, प्रतिकृष्टकुलं द्विविधम्-इत्वरं यावत्कथिकं च, इत्वरं सूतकयुक्तं, यावत्कथिकम्-अभोज्यम्, एतन्न प्रविशेत् शासनलघुत्वप्रसङ्गात्, 'मामकं' यत्राऽऽह गृहपतिः-मा मम कश्चिद्गृहमागच्छेत्, एतत् वर्जयेत, भण्डनादिप्रसङ्गात्, 'अचि-अत्तकुलम्' अप्रीतिकुलं यत्र प्रविशद्भिः साधुभिरप्रीतिरुत्पद्यते, न च निवारयन्ति, कुतश्चि-न्निमित्तान्तरात्, एतदपि न प्रविशत्, तत्संक्लेशनिमित्तत्वप्रसङ्गात्, 'चिअत्तम्' अचिअत्तविपरीतं प्रविशेत्कुलं, तदनुग्रहप्रसङ्गादिति सूत्रार्थः ॥

मू.( ९३ ) *साणीपावारपिहिअं, अप्पणा नावपंगुरे।*
*कवाडं नो पणुल्लिज्जा, उग्गहंसि अजाइआ॥*

वृ.किंच -'साणि'त्ति सूत्रं, 'शाणीप्रावारपिहित'मिति शाणीअतसीवल्कजा पटी, प्रावारः-प्रतीतः कम्बल्याद्युपलक्षणमेतत्, एवमादिभिः पिहितं-स्थगितं, गृहमिति वाक्य-शेषः। 'आत्मना' नापवृणुयात्' नोद्घाटयेदित्यर्थः, अलौकिकत्वेन तदन्तर्गतभुजिक्रियादि-कारिणां प्रद्वेषप्रसङ्गात्, तथा 'कपाटं' द्वारस्थगनं 'न प्रेरयेत्' नोद्घाटयेत्, पूर्वोक्तदोषप्रसङ्गात्, किमविशेषण ?, नेत्याह - 'अवग्रहमयाचित्वा' आगाढप्रयोजनेऽननुज्ञाप्यावग्रहं-विधिना धर्मलाभमकृत्वेति सूत्रार्थः ॥

मू.( ९४ ) *गोअरग्गपविठ्ठो अ, वच्चमुत्तं न धारए।*

*ओगासं फासुअं नच्चा, अणुन्नविअ वोसिरे।*

वृ. विधिशेषमाह- 'गोयरग्ग'त्ति सूत्रं, गोचराग्रप्रविष्टस्तु वर्चो मूत्रं वा न धारयेत्, अवकाशं प्रासुकं ज्ञात्वाऽनुज्ञाप्य व्युत्सृजेदिति। अस्य विषयो वृद्धसंप्रदायादवसेयः, स चायम्- पुव्वमेव साहुणा सन्नाकाइओवयोगं काऊण गोअरे पविसिअव्वं, कहिंचिवि न कओ कए वा पुणो होज्जा ताहे वच्चमुत्तं न धारेअव्वं, जओ मुत्तनिरोहे चक्खुवघाओ भवति, वच्चनिरोहे जीविओवघाओ, असोहणा अ आयविराधना, जओ भणिअं -'सव्वत्थ संजम' मित्यादि। वित्थरओ जहा ओहनिज्जुत्तीए। इति सूत्रार्थः ॥

मू. ( १५ ) *नीअदुवारं तमसं कुट्ठगं परिवज्जए।*
*अचक्खुविसओ जत्थ, पाणा दुप्पडिलेहगा*

वृ. तथा 'नीयदुवार'न्ति सूत्रं, 'नीचद्वारं' नीचनिर्गमप्रवेशं 'तमस'मिति तमोवन्तं 'कोष्ठकम्' अपरकं परिवर्जयेत् न तत्र भिक्षां गृह्णीयात्, सामान्यपेक्षया सर्व एवंविधो भवत्यत आह- 'अचक्षुर्विषयो यत्र' न चक्षुर्व्यापारो यत्रेत्यर्थः, अत्र दोषमाह- प्राणिनो दुष्प्रत्युपेक्षणीया भवन्ति, ईर्याशुद्धिर्न भवतीति सूत्रार्थः ॥

मू. ( १६ ) *जत्थ पुप्फाइं बीआइं, विप्पन्नाइं कुट्ठए।*
*अहुणोवलित्तं उल्लं, दट्ठूणं परिवज्जए*

वृ. किंच- 'जत्थ'त्ति सूत्रं, यत्र 'पुष्पाणि' जातिपुष्पादीनि 'बीजानि' शालिबीजादिनी 'विप्रकीर्णानि' अनेकधा विक्षिप्तानि, परिहर्तुमशक्यानीत्यर्थः, कोष्ठके कोष्ठकद्वारे वा, तथा 'अधुनोपलिप्तं' साम्प्रतोपलिप्तम् 'आर्द्रम्' अशुष्कं कोष्ठकमन्यद्वा दृष्ट्वा परिवर्जयेदूरत एव, न तु तत्र धर्मलाभं कुर्यात्, संयमात्मविराधनापत्तेरिति सूत्रार्थः ॥

मू. ( १७ ) *एलगं दारगं साणं, वच्छगं वावि कुट्ठए।*
*उल्लंघिआ न पविसे, विऊहित्ताण व संजए॥*

वृ. किं च -'एलगं'ति सूत्रम्, 'एडकं'-मेषं 'दारकं' बालं 'श्वानं' मण्डलं 'वत्सकं वापि' क्षुद्रवृषभलक्षणं कोष्ठके उल्लङ्घ्य पद्भ्यां न प्रविशेत्, 'व्यूह्य वा' प्रेर्य वेत्यर्थः, 'संयतः' साधुः आत्मसंयमविराधनादोषाल्लाघवाच्चेति सूत्रार्थः ॥

मू. ( १८ ) *असंसत्तं पलोइज्जा, नाइदूरा वलोअए।*
*उप्फुल्लं न विनिज्झाए, निअट्टिज्ज अयंपिरो॥*

वृ. इहैव विशेषमाह- 'असंसत्तं' ति सूत्रम् 'असंसक्तं प्रलोकयेत्', न योषिद्दृष्टेर्दृष्टिं मेलयेदित्यर्थः, रागोत्पत्तिलोकोपघातदोषप्रसङ्गात्, तथा 'नातिदूरं प्रलोकयेत्' दायकस्या-गमनमात्रदेशं प्रलोकयेत्, परतश्चौरादिशङ्कादोषः, तथा 'उत्फुल्लं' विकसितलोचनं 'न विणिज्झाए' त्ति न निरीक्षेत गृहपरिच्छदमपि, अदृष्टकल्याण इति लाघवोत्पत्तेः, तथा निवर्तेत गृहादलब्धेऽपि सति अजल्पन्-दीनवचनमनुच्चारयन्निति।

मू. ( १९ ) *अइभूमिं न गच्छेज्जा, गोअरग्गओ मुनी।*
*कुलस्स भूमिं जाणित्ता, मिअं भूमिं परक्कमे॥*

वृ. तथा- 'अइभूमिं न गच्छिज्जा' इति सूत्रम्, अतिभूमिं न गच्छेद्-अननुज्ञातां गृहस्थैः, यत्रान्ये

भिक्षाचारा न यान्तीत्यर्थः, गोचराग्रगतो मुनिः, अनेनान्यदा तदगमनासंभवमाह, किं तर्हि ?, कुलस्य भूमिम्–उत्तमादिरूपागवस्थां ज्ञात्वा 'मितां भूमिं' तैरनुज्ञातां पराक्रमेत्, यत्रैषामप्रीतिर्नोपजायत इति सूत्रार्थः ॥

*मू.( १०० ) तत्थेव पडिलेहिज्जा, भूमिआगं विअक्खणो।*
*सिणाणस्स य वच्चस्स, संलोगं परिवज्जए॥*

वृ. विधिशेषमाह–'तत्थेव'त्ति सूत्रं, 'तत्रैव' तस्यामेव मितायां भूमौ प्रत्युपेक्षेत सूत्रोक्तेन विधिना 'भूमिभागम्' उचितं भूमिदेशं 'विचक्षणो' विद्वान, अनेन केवलागीतार्थस्य भिक्षाटनप्रतिषेधमाह, तत्र च तिष्ठन् स्नानस्य तथा 'वर्चसो' विष्ठायाः संलोकं परिवर्जयेत्, एतदुक्तं भवति–स्नानभूमिकायिकादिभूमिसंदर्शनं परिहरेत्, प्रवचनलाघवप्रसङ्गात्, अप्रावृतस्त्रीदर्शनाच्च रागादिभावादिति सूत्रार्थः ॥

*मू.( १०१ ) दगमट्टिअआयाणे, बीआणि हरिआणि अ।*
*परिवज्जंतो चिट्ठिज्जा, सव्विंदिअसमाहिए॥*

वृ.किंच–'दग'त्ति सूत्रम्, 'उदकमृत्तिकादानम्' आदीयतेऽनेनेत्यादानो–मार्गः, उदकमृत्तिकानयनमार्गमित्यर्थः, 'बीजानि' शाल्यादीनि 'हरितानि च' दूर्वादीनि, चशब्दादन्यानि च सचेतनानि परिवर्जयंस्तिष्ठेदनन्तरोदिते देशे 'सर्वेन्द्रियसमाहितः' शब्दादिभिरनाक्षिप्तचित्त इति सूत्रार्थः ॥

*मू.( १०२ ) तत्थ से चिट्ठमाणस्स, आहरे पानभोअणं।*
*अकप्पिअं न गेण्हिज्जा, पडिगाहिज्ज कप्पिअं॥*

वृ.'तत्थ'त्ति सूत्रं, 'तत्र' कुलोचितभूमौ 'से' तस्य साधोस्तिष्ठतः सतः 'आहरेद्' नयेत्पानभोजनं, गृहीति गम्यते, तत्रायं विधिः–'अकल्पिकम्' अनेषणीयं न गृह्णीयात, प्रतिगृह्णी–यात् 'कल्पिकम्' एषणीयम्, एतच्चार्थापन्नमपि कल्पिकग्रहणं द्रव्यतः शोभनमशोभनमप्येतद–विशेषेण ग्राह्यमिति दर्शनार्थं साक्षादुक्तमिति सूत्रार्थः ॥

*मू.( १०३ ) आहरंती सिआ तत्थ, परिसाडिज्ज भोअणं।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं॥*

वृ.'आहरंति'त्ति सूत्रम्, 'आहरन्ती' आनयन्ती भिक्षामगारीति गम्येत 'स्यात्' कदाचित् 'तत्र' देशे 'परिशाटयेद्' इतश्चेतश्च विक्षिपेद् भोजनं वा पानं वा, ततः किमित्याह–ददतीं 'प्रत्याचक्षीत' प्रतिषधयेत्तामगारीं, स्त्र्येव प्रायो भिक्षां ददातीति स्त्रीग्रहणं, कथं प्रत्याचक्षीतेत्यत आह–न मम कल्पते तादृशं–परिशाटनावत्, समयोक्तोदोषप्रसङ्गात्, दोषांश्च भावं ज्ञात्वा कथयेद् मधुबिन्दूदाहरणादिनेति सूत्रार्थः ॥

*मू.( १०४ ) समंद्दमाणी पाणाणि, बीआणी हरिआणी अ।*
*असंजमकरिं नच्चा, तारिसिं परिवज्जए॥*

वृ. किंच–'संमद्द'त्ति सूत्रं, 'संमर्दयन्ती' पद्भ्यां समाक्रामन्ती, कानित्याह–'प्राणिनो' द्वीन्द्रियादीन् 'बीजानि' शालिबीजादीनि 'हरितानि' दूर्वादीनि 'असंयमकरीं' साधुनिमित्तमसंयमकरणशीलां ज्ञात्वा तादृशीं परिवर्जयेत्, ददतीं प्रत्याचक्षीत इती सूत्रार्थः ॥

*मू.( १०५ ) साहट्टु निक्खिवित्ता णं, सचित्त घट्टियाणि य।*

*तहेव समणट्ठाए, उदगं संपणुल्लिया ॥*

**वृ.** तथा 'साहट्टु'त्ति सूत्रं, संहृत्यान्यस्मिन् भाजने ददाति, 'तं फासुगमवि वज्जए, तत्थ फासुए फासुयं साहरइ फासुए अफासुअं साहरइ अफासुए फासुयं साहरइ अफासुए अफासुअं साहरइ, तत्थ जं फासुअं फासुए साहरइ तत्थवि थेवे थेवं साहरइ थेवे बहुअं साहरइ बहुए थेवं साहरइ बहुए बहुअं साहरइ। एवमादि यथा पिण्डनिर्युक्तौ। तथा निक्षिप्य भाजनगतमदेयं षट्सु जीवनिकायेषु ददाति, 'सचित्तम्' अलातपुष्पादि 'घट्टयित्वा' संचाल्य च ददाति तथैव 'श्रमणार्थं' प्रव्रजितनिमित्तमुदकं 'संप्रणुद्य' भाजनस्थं प्रेर्य ददातीति सूत्रार्थः॥

**मू. (१०६)** *ओगाहइत्ता चलइत्ता, आहरे पानभोअणं।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं॥*

**वृ.** 'ओगाहइत्ता' सूत्रं, तथा च 'अवगाह्य' उदकमेवात्माभिमुखकाकृष्य ददाति तथा चालयित्वा उदकमेव ददाति, उदके नियमादनन्तवनस्पतिरिति प्राधान्यख्यापनार्थं सचित्तं घट्टयित्वेत्युक्तेऽपि भेदेनोपादानाम्, अस्ति चायं न्यायो-यदुत सामान्यग्रहणेऽपि प्राधान्य-ख्यापनार्थं भेदेनोपादानं, यथा-ब्राह्मणा आयाता वशिष्ठोऽप्यायात इति, ततश्चोदकं चालयित्वा 'आहरेत्' आनीय दद्यादित्यर्थः, किं तदित्याह-'पानभोजनम्' ओदनारनालादि तदित्थंभूतां ददतीं 'प्रत्याचक्षीत' निराकुर्यात् न मम कल्पते तादृशमिति पूर्ववदेवेति सूत्रद्वयार्थः ॥

**मू. (१०७)** *पुरेकम्मेण हत्थेण, दव्वीए भायणेन वा।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं॥*

**वृ.** 'पुरेकम्मे'त्ति सूत्रं, पुरःकर्मणा हस्तेन-साधुनिमित्तं प्राक्कृतजलोज्झनव्यापारेण, तथा 'दर्व्या डोनसदृशया 'भाजनेन वा' कांस्यभाजनादिना ददतीं 'प्रत्याचक्षीत' प्रतिषेधयेत्, न मम कल्पते तादृशमिति पूर्वदेवेति सूत्रार्थः ॥

**मू. (१०८)** *एवं उदउल्ले ससिणिद्धे, ससरक्खे मट्टिआउसे।*
*हरिआले हिंगुलए, मनोसिला अंजने लोणे॥*

**वृ.** 'एवं'ति सूत्रम्, 'एवम्' उदकार्द्रेण 'हस्तेन' करेण, उदकार्द्रो नाम गलदुदकबिन्दुयुक्तः, एवं सस्निग्धेन हस्तेन, सस्निग्धो नाम ईषदुदकयुक्तः, एवं 'सरजस्केन हस्तेन' सरजस्को नाम-पृथिवीरजोगुण्डितः, एवं 'मृद्गतेन हस्तेन' मृद्गतो नाम-कर्दमयुक्तः, एवमूषादिष्वपि योजनीयम्, एतावन्ति एव एतानि सूत्राणि, नवरमूषः-पांशुक्षारः, हरितालहिङ्गुकमनः-शिला-पार्थिवा वर्णकभेदाः, अञ्जनं-रसाञ्जनादि लवणं-सामुद्रादि ॥

**मू. (१०९)** *गेरुअवन्निअसेढिअसोरट्ठिअपिट्ठ कुक्कुसकए य।*
*उक्किट्ठमसंसट्ठे, संसट्ठे चेव बोद्धव्वे॥*

**वृ.** तथा 'गेरुअ'त्ति सूत्रं, गैरिका- धातुः, वर्णिकापीतमृत्तिका, श्वेतिका--शुक्लमृत्तिका, सौराष्ट्रिका-तुवरिका, पिष्टम्-आमतण्डुलक्षोदः, कुक्कुसाः प्रतीताः, 'कृतेनेति' एभिः कृतेन, हस्तेनेति गम्यते, तथोत्कृष्ट इति उत्कृष्टशब्देन कालिङ्गालाबुत्रपुषफलादीनां शस्त्रकृतानि श्लक्ष्णखण्डानि भण्यन्ते, चिञ्चिणिकादिपत्रसमुदायो वा उद्खलकण्डिल इति, तथा असंसृष्टो व्यञ्जनादिना अलिप्तः संसृष्टश्चैव व्यञ्जनादिलिप्तो बोद्धव्यो हस्त इति, विधिं पुनरत्रोर्द्धं

वक्ष्यति स्वयमेवेति सूत्रार्थः ॥

मू. ( ११० ) *असंसट्ठेण हत्थेण, दव्वीए भायणेन वा।*
*दिज्जमाणं न इच्छिज्जा, पच्छाकम्मं जहिं भवे ॥*

वृ. आह च-'असंसट्ठेण' त्ति सूत्रम्, असंसृष्टेन हस्तेन-अन्नादिभिरलिप्तेन दर्व्या भाजनेन वा दीयमानं नेच्छेत्, किं सामान्येन ?, नेत्याह-पश्चात्कर्म भवति 'यत्र' दध्यादौ, शुष्कमण्डकादिवत् तदन्यदोषरहितं गृह्णीयादिति सूत्रार्थः ॥

मू. ( १११ ) *संसट्ठेण य हत्थेण, दव्वीए भायणेन वा।*
*दिज्जमाणं पडिच्छिज्जा, जं तत्थेसणियं भवे ॥*

वृ. 'संसट्ठेण' त्ति सूत्रं, संसृष्टेन हस्तेन-अन्नादिलिप्तेन, तथा दर्व्या भाजनेन वा दीयमानं 'प्रतीच्छेद्' गृह्णीयात्, किं सामान्येन ? नेत्याह-यत्तत्रैषणीयं भवति, तदन्यदोषरहित-मित्यर्थः, इह च वृद्धसंप्रदायः-संसट्ठे हत्थे संसट्ठे मत्ते सावसेसे दव्वे, संसट्ठे हत्थे संसट्ठे मत्ते णिरवसेसे दव्वे, एवं अट्ठ भंगा, एत्थ पढमभंगो सव्वुत्तमो, अन्नेऽवि जत्थ सावसेसं दव्वं तत्थ घिप्पइ, न इयरेसु, पच्छाकम्मदोसाउ त्ति सूत्रार्थः ॥ किंच

मू. ( ११२ ) *दुण्हं तु भुंजमाणाणं, एगो तत्थ निमंतए।*
*दिज्जमाणं न इच्छिज्जा, छंदं से पडिलेहए।*

वृ. 'दुण्हं'ति सूत्रं, 'द्वयोर्भुञ्जतोः' पालनां कुर्वतोः, एकस्य वस्तुनः स्वामिनोरित्यर्थः, एकस्तत्र 'निमत्रयेत्' तद्दानं प्रत्यामत्रयेत्, तद्दीयमानं नेच्छेदुत्सर्गतः, अपितु 'छन्दम्' अभिप्रायं 'से' तस्य द्वितीयस्य प्रत्युपेक्षेत नेत्रवक्त्रादिविकारैः, किमस्येदमिष्टं दीयमानं नवेति, इष्टं चेद्गृह्णीयान्न चेन्नैवेति, एवं भुञ्जानयोः-अभ्यवहारायोद्यतयोरपि योजनीयं, यतो भुजिः पालनेऽभ्यवहारे च वर्तत इति सूत्रार्थः ॥

मू. ( ११३ ) *दुण्हं तु भुंजमाणाणं, दोऽवि तत्थ निमंतए।*
*दिज्जमाणं पडिच्छिज्जा जं तत्थेसणियं भवे ॥*

वृ. ततो 'दुण्हं'ति सूत्रं द्वयोस्तु पूर्ववत् भुञ्जतोर्भुञ्जानयोर्वा द्वावपि तत्रातिप्रसादेन निमन्त्रयेयातां, तत्रायं विधिः-दीयमानं 'प्रतीच्छेद' गृह्णीयात् यत्तत्रैषणीयं भवेत्, तदन्यदोषरहितमिति सूत्रार्थः ॥

मू. ( ११४ ) *गुव्विणीए उवन्नत्थं, विविहं पानभोअणं।*
*भुंजमाणं विवज्जिज्जा, भुत्तसेसं पडिच्छए ॥*

वृ. विशेषमाह-'गुव्विणीए' त्ति सूत्रं, 'गुर्विण्या' गर्भवत्या 'उपन्यस्तम्' उपकल्पितं, किं तदित्याह 'विविधम्' अनेकप्रकारं 'पानभोजनं' द्राक्षापानखण्डखाद्यकादि, तत्र भुज्यमानं तया विवर्ज्य, मा भूत्तस्या अल्पत्वेनाभिलाषानिवृत्त्या गर्भपतनादिदोष इति, 'भुक्तशेषं' भुक्तोद्धरितं प्रतीच्छेत्, यत्र तस्या निवृत्तोऽभिलाष इति सूत्रार्थः ॥

मू. ( ११५ ) *सिआ य समणट्ठाए, गुव्विणी कालमासिणी।*
*उट्ठिआ वा निसीइज्जा, निसन्ना वा पुणुट्ठए।*

वृ. किञ्च-'सिआ य' त्ति सूत्रं, 'स्याच्च' कदाचिच्च 'श्रमणार्थं' साधुनिमित्तं 'गुर्विणी'

पूर्वोक्ता 'कालमासवती' गर्भाधानान्नवममासवतीत्यर्थः, उत्थिता वा यथाकथञ्चिन्निषीदेद् निषण्णा ददामीति साधुनिमित्तं, निषण्णा वा स्वव्यापारेण पुनरुत्तिष्ठेद् ददामीति साधुनिमित्तमेवेति सूत्रार्थः ॥

मू. ( ११६ ) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तं भवे' त्ति सूत्रं, तद्भवेद्भक्तपानं तु तथा निषीदनोत्थानाभ्यां दीयमानं संयतानामकल्पिकम्, इह च स्थविरकल्पिकानामनिषीदनोत्थानाभ्यां यथावस्थितया दीयमानं कल्पिकं, जिनकल्पिकानां त्वापन्नसत्त्वया प्रथमदिवसादारभ्य सर्वथा दीयमानमकल्पिकमेवेति सम्प्रदायः, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमित्येतत्पूर्ववदेवेति सूत्रार्थः ॥

मू. ( ११७ ) *थणगं पिज्जेमाणी, दारगं वा कुमारिअं ।*
*तं निक्खिवित्तु रोअंतं, आहरे पानभोअणं ॥*

वृ. किं च-'थणगं'ति सूत्रं, स्तनं(न्यं) पाययन्ती, निक्षिप्य दारकं वा कुमारिकां, वाशब्दस्य व्यवहितः संबन्धः, अत एव नपुंसकं वा, तद्दारकादि निक्षिप्य रुदद्भूम्यादौ आहरेत्पानभोजनम्, अत्रायं वृद्धसंप्रदायः गच्छवासी जइ थणजीवी पिअंतो निक्खित्तो तो न गिण्हंति, रोवउ वा मा वा, अह अन्नंपि आहारेइ तो जति ज रोवइ तो गिण्हंति, अह रोवइ तो न गिण्हंति, अह अपिअंतो निक्खित्तो थणजीवी रोवइ तओ न गिण्हंति, अह न रोवइ तो गिण्हंति, गच्छणिग्गया पुण जाव थणजीवी ताव रोवउ वा मा वा पिबंतओ(वा) अपिबंतओ वा न गिण्हंति, जाहे अन्नंपि आहारेउं आढत्तो भवति ताहे जइ पिबंतओ तो रोवउ वा मा वा न गेण्हंति, अह अपिबंतओ तो जइ रोवइ तो परिहरंति, अरोविए गेण्हंति, सीसो आह-को तत्थ दोसोऽत्थि ?, आयरिओ भणइतस्स णिक्खिप्पमाणस्स खरेहिं हत्थेहिं धिप्पमाणस्स अथिरत्तणेण परितावणादोसा मज्जारादि वा अवहरेज्ज त्ति सूत्रार्थ : ॥

मू. ( ११८ ) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तं भवे' त्ति सूत्रं, तद्भवेद्भक्तपान त्वनन्तरोदितं संयतानामकल्पिकं, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. ( ११९ ) *जं भवे भत्तपानं तु, कप्पाकप्पंमि संकिअं ।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. किं बहुनेति, उपदेशसर्वस्वमाह-'जं भवे'त्ति सूत्रं, यद्भवेद्भक्तपानं तु 'कल्पाकल्पयोः' कल्पनीयाकल्पनीयधर्मविषय इत्यर्थः, किम् ?-'शङ्कितं' न विद्मः किमिदमुद्गमादिदोषयुक्तं किंवा नेत्याशङ्कास्पदीभूतं, तदित्थंभूतमसति कल्पनीयनिश्चये ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. ( १२० ) *दगवारेण पिहिअं, नीसाए पीढएण वा*
*लोढेण वावि लेवेण, सिलेसेणवि केणइ ॥*

वृ. किं च -'दगवारेण'त्ति सूत्रं, 'दकवारेण' उदककुम्भेन 'पिहितं' भाजनस्थं सन्तं स्थगितं, तथा 'नीसाए'त्ति पेषण्या, 'पीठकेन वा' काष्ठपीठादिना, 'लोढेन वापि' शिलापुत्रकेण, तथा 'लेपेन' मृल्लेपनादिना 'श्लेपेण वा' केनचिज्जतुसिक्थादिनेति सूत्रार्थः ।

मू. (१२१) *तं च उब्भिंदिआ दिज्जा, समणट्ठाए व दावए।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तं च' त्ति सूत्रं, 'तच्च' स्थगितं लिप्तं वा सत् उद्भिद्य दद्याच्छ्रमणार्थं दायकः, नात्माद्यर्थं, तदित्थंभूतं ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. (१२२) *असनं पानगं वावि, खाइमं साइमं तहा।*
*जं जाणिज्ज सुणिज्जा वा, दाणट्ठा पगडं इमं ॥*

मू. (१२३) *तारिसं भत्तपानं तु, संजयाण अकप्पिअं।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. किं च-'असनं'ति सूत्रं, अशनं पानकं वापि खाद्यं स्वाद्यम्, 'अशनम्' ओदनादि 'पानकं' च आरनालादि, 'खाद्यं' लड्डुकादि, 'स्वाद्यं' हरीतक्यादि, यज्जानीयादामन्त्र-णादिना, शृणुयाद्वा अन्यतः, यथा दानार्थं प्रकृतमिदं, दानार्थं प्रकृतं नाम-साधुवादनिमित्तं यो ददात्यव्यापारपाखण्डिभ्यो देशान्तरादेरागतो वणिक्प्रभृतिरिति सूत्रार्थः ॥

मू. (१२४) *असनं पानगं वावि, खाइमं साइमं तहा।*
*जं जाणिज्ज सुणिज्जा वा, पुण्णट्ठा पगडं इमं ॥*

वृ. 'तारिसं'ति सूत्रं, तादृशं भक्तपानं दानार्थं प्रवृत्तव्यापारं संयतानामकल्पिकं, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. (१२५) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'असणं'ति सूत्रम्, एवं पुण्यार्थं, पुण्यार्थं प्रकृतं नाम-साधुवादानङ्गीकरणेन यत्पुण्यार्थं कृतमिति। अत्राह-पुण्यार्थप्रकृतपरित्यागे शिष्यकुलेषु वस्तुतो भिक्षाया अग्रहणमेव, शिष्टानां पुण्यार्थमेव पाकप्रवृत्तेः, तथाहि-न पितृकर्मादिव्यपोहेनात्मार्थमेव क्षुद्रसत्त्ववत्प्रवर्तन्ते शिष्टा इति, नैतदेवम्, अभिप्रायापरिज्ञानात्, स्वभोग्यातिरिक्तस्य देयस्यैव पुण्यार्थकृतस्य निषेधात्, स्वभृत्यभोगस्य पुनरुचितप्रमाणस्येत्वरयदृच्छादेयस्य कुशलप्रणिधानकृतस्याप्यनिषेधादिति, एतेनाऽदेयदानाभावः प्रत्युक्तः, देयस्यैव यदृच्छादानानुपपत्तेः, कदाचिदपि वा दाने यदृच्छा-दानोपपत्तेः, तथा व्यवहारदर्शनात्, अनीदृशस्यैव प्रतिषेधात्, तदारम्भदोषेण योगात्, यदृच्छादाने तु तदभावेऽप्यारम्भप्रवृत्तेः नासौ तदर्थ इत्यारम्भदोषायोगात्, दृश्यते च कदाचित्सूतकादाविव सर्वेभ्य एव प्रदानविकला शिष्टभिमतानामपि पाकप्रवृत्तिरिति, विहितानुष्ठानत्वाच्च तथा-विधग्रहणान्न दोष इत्यलं प्रसङ्गेन, अक्षरगमनिकामात्रफलत्वात्प्रयासस्येति ॥

मू. (१२६) *असनं पानगं वावि, खाइमं, साइमं तहा।*
*जं जाणिज्ज सुणिज्जा वा, वणिमट्ठा पगडं इमं ॥*

वृ. 'तं भवे' त्ति सूत्रं, प्रतिषेधः पूर्ववत्।

*मू. ( १२७ ) तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'असनं' ति सूत्रं, एवं वनीपकार्थं वनीपकाः-कृपणाः ॥

*मू. ( १२८ ) असनं पानगं वावि, खाइमं साइमं तहा ।*
*जं जाणिज्ज सुणिज्जा वा, समणट्ठा पगडं इम ॥*

वृ. 'तं भवे' त्ति सूत्रं, प्रतिषेधः पूर्ववत् ॥

*मू. ( १२९ ) तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'असनं' ति सूत्रं, एवं श्रमणार्थं, श्रमणा-निर्ग्रन्था: शाक्यादयः
'तं भवे' त्ति सूत्रं, प्रतिषेधः पूर्ववत् ॥

*मू. ( १३० ) उद्देसिअं कीअगडं, पूइकम्मं च आहडं ।*
*अज्झोअर पामिच्चं, मीसजायं विवज्जए ॥*

वृ. किंच- 'उद्देसिअं' ति सूत्रं, उद्दिश्य कृतमौद्देशिकम्-उद्दिष्टकृतकर्मादिभेदं, क्रीतकृतं-द्रव्य-भावक्रयक्रीतभेदं पूतिकर्म-संभाव्यमानाधाकर्मावयवसंमिश्रलक्षणम्, अभ्याहृतं स्वग्रामा-हृतादि, तथा अध्यवपूरकं-स्वार्थमूलाद्रहणप्रक्षेपरूपं, प्रामित्यं- साध्वर्थमुच्छिद्य दानलक्षणं, मिश्रजातं च-आदित एव गृहिसंयतमिश्रोपस्कृतरूपं, वर्जयेदिति सूत्रार्थः ॥

*मू. ( १३१ ) उग्गमं से अ पुच्छिज्जा, कस्सट्ठा केन वा कडं ? ।*
*सुच्चा निस्संकिअं सुद्धं, पडिगाहिज्ज संजए ॥*

वृ. संशयव्यपोहायोपायमाह- 'उग्गमं' ति सूत्रं, 'उद्गमं' तत्प्रसूतिरूपम् 'से' तस्य शङ्कित-स्याशनादेः 'पृच्छेत्' तत्स्वामिनं कर्मकरं वा, यथा-कस्यार्थमेतत् केन वा कृतमिति, श्रुत्वा तद्वचो न भवदर्थं किं त्वन्यार्थमित्येवंभूतं निःशङ्कितं 'शुद्धं' सद्जुत्वादिभावगत्या प्रतिगृह्णीया-त्संयतो, विपर्ययग्रहणे दोषादिति सूत्रार्थः ॥

*मू. ( १३२ ) असनं पानगं वावि, खाइमं साइमं तहा ।*
*पुप्फेसु हुज्ज उम्मीसं, बीएसु हरिएसु वा ॥*

वृ. तथा 'असनं' ति सूत्रं, अशनं पानकं वापि खाद्यं खाद्यं तथा 'पुष्पैः' जातिपाटलादिभिः भवेदुन्मिश्रं, बीजैर्हरितैर्वेति सूत्रार्थः ॥

*मू. ( १३३ ) तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दितिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तारिसं' ति सूत्रं, तादृशं भक्तपानं तु संयतानमकल्पिकं, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

*मू. ( १३४ ) असनं पानगं वावि, खाइमं साइमं तहा ।*
*उदगंमि हुज्ज निक्खित्तं, उत्तिंगपणगेसु वा ॥*

वृ. तथा 'असनं' ति सूत्रं, अशनं पानकं वापि खाद्यं स्वाद्यं तथा, उदके भवेन्निक्षिप्तमुत्तिं-गपनकेषु वा कीटिकानगरोल्लीषु वेत्यर्थः, उदयनिक्खित्तं दुविहं अनंतरं परंपरं च, अनंतरं

नवनीतपोग्गलियमादि, परोप्परं जलघडोवरिभायणत्थं दधिमादि, एवं उत्तिगपणएसु भावनीयमिति सूत्रार्थः ॥

मू. ( १३५ ) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तं भवे'त्ति सूत्रं, तद्भवेतद्भक्तपान तु संयतानामकल्पिकं, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. ( १३६ ) *असनं पानगं वावि, खाइमं साइमं तहा ।*
*तेउम्मि हुज्ज निक्खित्तं, तं च संघट्टिआ दए ॥*

वृ. तथा 'असनं'ति सूत्रं, अशनं पानकं वापि खाद्यं स्वाद्यं तथा, तेजसि भवेन्निक्षिप्तं, 'तेजसि भवेन्निक्षिप्तं, 'तेजसि' इत्यग्नौ तेजस्काय इत्यर्थः, तच्च संघट्य, यावद्भिक्षां ददामि तावत्तापातिशयेन मा भूदुद्वर्तिष्यत इत्याघट्य दद्यादिति सूत्रार्थः ॥

मू. ( १३७ ) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तं भवे'त्ति सूत्रं, तद्भवेद्भक्तपान तु संयतानामकल्पिकमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. ( १३८ ) *एवं उस्सक्किया, ओसक्किया, उज्जालिया, पज्जालिआ,*
*निव्वाविया, उस्सिंचिया, निस्सिंचिया, उववत्तिया, ओयारिया दए ।*

वृ. एवं 'उस्सक्किय'त्ति यावद्भिक्षां ददामि तावन्मा भूद्विध्यास्यतीत्युत्सिच्य दद्याद्, एवं 'ओसक्किया' अवसर्प्य अतिदाहभयादुल्मुकान्युत्सार्येत्यर्थः, एवं 'उज्जालिया पज्जालिया' 'उज्जवाल्य' अर्धविध्यातं सकृदिन्धनप्रक्षेपेण, 'प्रज्वाल्य' पुनः पुनः । एवं 'निव्वाविया' निर्वाप्य दाहभयादेवेति भावः, एवं उस्सिचिया निस्सिचिया, 'उत्सिच्य' अति- भृतादुज्झनभयेत ततो वा दानार्थं तीमनादीनि, 'निषिच्य' तद्भाजनाद्रहितं द्रव्यमन्यत्र भाजने तेन दद्यात्, उद्वर्तनभयेन वाऽऽद्रहितमुदकेन निषिच्य, एवं 'ओवत्तिया ओयारिया', 'अपवर्त्य' तेनैवाग्निनिक्षिप्तेन भाजनेनान्येन वा दद्यात्, तथा 'अवतार्य' दाहभयाद्दानार्थं वा दद्यात्, अत्र तदन्यश्च साधुनिमित्तयोगे न कल्पते ॥

मू. ( १३९ ) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. 'तं भवे' त्ति सूत्रं पूर्ववत् ॥

मू. ( १४० ) *हुज्ज कट्ठं सिलं वावि, इट्टालं वावि एगया ।*
*ठविअं संकमट्ठाए, तं च होज्ज चलाचलं ॥*

वृ. गोचराधिकार एव गोचरप्रविष्टस्य 'होज्ज'त्ति सूत्रं, भवेत् काष्ठं शिला वापि इट्टालं वाऽपि 'एकदा' एकस्मिन् काले प्रावृडादौ स्थापितं संक्रमार्थं, तच्च भवेत्, 'चलाचलम्' अप्रतिष्ठितं, न तु स्थिरमेवेति सूत्रार्थः ॥

मू. ( १४१ ) *न तेन भिक्खू गच्छिज्जा, दिट्ठो तत्थ असंजमो ।*

*गंभीरं झुसिरं चेव, सव्विंदिअसमाहिए ॥*

वृ. 'न तेन' त्ति सूत्रं, न 'तेन' काष्ठादिना भिक्षुर्गच्छेत्, किमिति ?, अत्राहदृष्टस्तत्रासंयमः, तच्चलने प्राण्युपमर्दसंभवात्, तथा 'गम्भीरम्' अप्रकाशं 'शषीरं चैव' अन्तःसाररहितम्, 'सर्वेन्द्रियसमाहितः' शब्दादिषु रागद्वेषावगच्छन्, परिहरेदिति सूत्रार्थः ॥

मू. ( १४२ ) *निस्सेणिं फलगं पीढं, उस्सवित्ता नमारुहे ।*
*मंचं कीलं च पासायं, समणट्ठा एव दावए ॥*

वृ. किं च -'निस्सेणिं' ति सूत्रं, निश्रेणिं फलकं पीठम् 'उस्सवित्ता' उत्सृत्य ऊर्ध्वं कृत्वा इत्यर्थः, आरोहेन्मञ्चं कीलकं च उत्सृत्य कमारोहेदित्याह-प्रासादं, 'श्रमणार्थं' साधुनिमित्तं दायको' दाता आरोहेत्, एतदप्यग्राह्यमिति सूत्रार्थः ॥

मू. ( १४३ ) *दुरूहमाणी पवडिज्जा, हत्थं पायं व लूसए ।*
*पुढविजीवे विहिंसिज्जा, जे अ तन्निस्सिया जगे ॥*

वृ. अत्रैव दोषमाह-'दुरूहमाणि' त्ति सूत्रं, आरोहन्ती प्रपेतत्, प्रपतन्ती च हस्तं पादं वा 'लूषयेत्' स्वकं स्वत एव खण्डयेत्, तथा पृथ्वीजीवान् विहिंस्यात्, कथंचित्तत्रस्थान्, तथा यानि च तन्निश्रितानि 'जगन्ति' प्राणिनस्तांश्च हिंस्यादिति सूत्रार्थः ॥

मू. ( १४४ ) *एआरिसे महादोसे, जाणिऊण महेसिणो ।*
*तम्हा मालोहडं भिक्खं, न पडिगिण्हंति संजया ॥*

वृ. 'एआरिसे' त्ति सूत्रं, 'ईदृशान्' अनन्तरोदितरूपान्महादोषान् ज्ञात्वा 'महर्षयः' साधवः । 'हंदि मालोहडं' ति, हन्दीत्युपप्रदर्शन इति सूत्रार्थः ॥

मू. ( १४५ ) *कंदं मूलं पलंबं वा, आमं छिन्नं व सन्निरं ।*
*तुंबागं सिंगबेरं च, आमगं परिवज्जए ॥*

वृ. प्रतिषेधाधिकार एवाह-'कंदं मूलं' ति सूत्रं, 'कन्दं' सूरणादिलक्षणम् 'मूलं' विदारिकारूपम् 'प्रलम्ब वा' तालफलादि, आमं छिन्न वा 'सन्निरम्' सन्निरमिति पत्रशाकम्, 'तुम्बाकं' त्वग्मिजान्तर्वर्ति आर्द्रां वा तुलसीमित्यन्ये, 'शृङ्गबेरं' चार्द्रकम्, आमं परिवर्जयेदिति सूत्रार्थः ॥

मू. ( १४६ ) *तहेव सत्तुचुन्नाइं, कोलचुन्नाइं आवणे ।*
*सक्कुलिं फाणिअं पूअं, अन्नं वावि तहाविहं ॥*

वृ. 'तहेव' त्ति सूत्रं, तथैव 'सक्तुचूर्णान्' सक्तून् 'कोलचूर्णान्' बदरसक्तून् 'आपणे' वीथ्यां, तथा 'शुष्कुलीं' तिलपर्पटिकां 'फाणितं' द्रवगुडं 'पूपं' कणिकादिमयम्, अन्यद्वा तथाविधं मोदकादि ॥

मू. ( १४७ ) *विक्कायमाणं पसढं, रएणं परिफासिअं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. किमित्याह-'विक्कायमाणं' ति सूत्रं, विक्रीयमाणमापणे इति वर्तते, 'प्रसह्य' अनेकदिवसस्थापनेन प्रकटम्, अत एव 'रजसा' पार्थिवेन 'परिस्पृष्टं' व्याप्तं, तदित्थम्भूतं तत्र ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रद्वयार्थः ॥

मू. ( १४८ ) *बहुअट्ठियं पुग्गलं, अनिमिसं वा बहुकंटयं ।*
*अच्छियं तिंदुयं बिल्लं, उच्छुखंडं व सिंबलिं ॥*

वृ. किंच-'बहुअट्ठियं'ति सूत्रं, बह्वस्थि 'पुद्गलं' मांसम् 'अनिमिषं वा' मत्स्यं वा बहुकण्टकम्, अयं किल कालाद्यपेक्षया ग्रहणे प्रतिषेधः, अन्ये त्वभिदधति- वनस्पत्यधिकारात्-तथाविधफलाभिधाने एते इति, तथा चाह-'अत्थिकं' अस्थिकवृक्षफलम्, 'तेंदुकं' तेंदुरुकी-फलम्, बिल्वम् इक्षुखण्डमिति च प्रतीते, 'शाल्मलिं वा' वल्लादिफलिं वा, वाशब्दस्य व्यवहितः संबन्ध इति सूत्रार्थः ॥

मू. ( १४९ ) *अप्पे सिआ भोअणज्जाए, बहुउज्झियधम्मियं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. अत्रैव दोषमाह-'अप्पे'त्ति सूत्रं, अल्पंस्याद्भोजनजातमत्र, अपि तु बहूज्झनधर्मकमेतत्, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. ( १५० ) *तहेवुच्चावयं पानं, अदुवा वारधोअणं ।*
*संसेइमं चाउलोदगं, अहुणाधोयं विवज्जए ॥*

वृ. उक्तोऽशनविधिः, साम्प्रतं पानविधिमाह-'तहेव'त्ति सूत्रं, तथैव यथाशनमुच्चावचं तथा पानम् 'उच्चं' वर्णाद्युपेतं द्राक्षापानादि 'अवचं' वर्णादिहीनं पूत्यारनालादि अथवा 'वारकधावनं' गुडघटधावनमित्यर्थः, 'संस्वेदजं' पिष्टोदकादि, एतदशनवदुत्सर्गापवादाभ्यां गृह्णीयादिति वाक्यशेषः, 'तन्दुलोदकम्' अचिरकं 'अधुनाधौतम्' अपरिणतं विवर्जयेदिति सूत्रार्थः ॥

मू. ( १५१ ) *जं जाणेज्ज चिराधोयं, मईए दंसणेन वा ।*
*पडिपुच्छिऊण सुच्चा वा, जं च निस्संकिअं भवे ॥*

वृ. अत्रैव विधिमाह-'जं जाणिज्ज'त्ति सूत्रं, यत्तन्दुलोदकं 'जानीयात्' विद्याच्चिरधौतम्, कथं जानीयादित्यत आह-मत्या दर्शनेन वा, 'मत्या' तद्ग्रहणादिकर्मजया 'दर्शनेन वा' वर्णादि-परिणतसूत्रानुसारेण च, वा चशब्दार्थः, तदप्येवंभूतं कियती वेलाऽस्य धौतस्येति पृष्ट्वा गृहस्थं, 'श्रुत्वा वा' महती वेलेति श्रुत्वा च प्रतिवचनं 'यच्चे'ति यदेव निःशङ्कितं भवति निरवय-वप्रशान्ततया तन्दुलोदकं तत्प्रतिगृह्णीयादिति, विशेषः पिण्डनिर्युक्तावुक्त इति सूत्रार्थः ॥

मू. ( १५२ ) *अजीवं परिणयं नच्चा, पडिगाहिज्ज संजए ।*
*अह संकियं भविज्जा, आसाइत्ताण रोअए ॥*

वृ. उष्णोदकादिविधिमाह-'अजीवं'ति सूत्रं, उष्णोदकमजीवं परिणतं 'ज्ञात्वा' त्रिदण्डपरिवर्तनादिरूपं मत्या दर्शनेन वेत्यादि वर्तते, तदित्थंभूतं प्रतिगृह्णीयात्संयतः, चतुर्थ-रसमपूत्यादि देहोपकारकं मत्यादिना ज्ञात्वेत्यर्थः, अथ शङ्कितं भवेत् तत आस्वाद्य 'रोचयेद्' विनिश्चयं कुर्यादिति सूत्रार्थः ॥

मू. ( १५३ ) *थोवमासायणट्ठाए, हत्थगंमि दलाहि मे ।*
*मा मे अच्चंबिलं पूअं, नालं तण्हं विनित्तए ॥*

वृ. तच्चैवं-'थोवं'ति सूत्रं, स्तोकमास्वादनार्थं प्रथमं तावत् हस्ते देहि मे, यदि साधुप्रायोग्यं

ततो ग्रहीष्ये, मा मे अत्यम्लं पूति नालं तृडपनोदाय। ततः किमनेनानुपयोगिनेति सूत्रार्थः ॥

**मू. ( १५४ )** *तं च अच्चंबिलं पूयं, नालं तण्ह विनित्तए।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

**वृ.** 'तं चं'ति सूत्रं, 'तच्च' अत्यम्लादि भवेद् 'अकामेन' उपरोधशीलतया 'वीमनस्केन' अन्यचित्तेन 'प्रतीप्सितं' गृहीतम् तदात्मना कायापकारकमित्यनाभोगधर्म श्रद्धया न पिबेत् नाप्यन्येभ्यो दापयेत्, रत्नाधिकेनापि स्वयं दानस्य प्रतिषेधज्ञापनार्थं दापनग्रहणम्, इह च 'सव्वत्थ संजमं संजमाओ अप्पानमेवे'त्यादि भावनयेति सूत्रार्थः ॥

**मू. ( १५५ )** *तं च होज्ज अकामेण, विमणेणं पडिच्छिअं।*
*तं अप्पणा न पिबे, नोवि अन्नस्स दावए ॥*

**वृ.** अस्यैव विधिमाह- 'एगंतं'ति सूत्रं, एकान्तम् 'अवक्रम्य' गत्वा 'अचित्तं' दग्धदेशादि प्रत्युपेक्ष्य चक्षुषा प्रमृज्य रजोहरणेन स्थण्डिलमिति गम्यते 'यतम्' अत्वरितं प्रतिष्ठापयेद्विधिना त्रिर्वाक्यपूर्वं व्युत्सृजेत्। प्रतिष्ठाप्य [illegible]गतः प्रतिक्रामेदीर्यापथिकाम्, एतच्च बहि-गतनियमकरणसिद्धं प्रतिक्रमणबहिरपि प्रतिष्ठाप्य प्रतिक्रमणनियमज्ञापनार्थम् सूत्रार्थः ॥

**मू. ( १५६ )** *एगंतमवक्कमित्ता, अचित्तं पडिलेहिया।*
*जयं परिट्ठविज्जा, परिट्ठप्प पडिक्कमे ॥*

**मू. ( १५७ )** *सिआ अ गोयरग्गगओ, इच्छिज्जा परिभुत्तुअं( भुंजिउं )।*
*कुट्ठगं भित्तिमूलं वा, पडिलेहित्ताण फासुअं ॥*

**वृ.** एवमन्नापानग्रहणविधिमभिधाय भोजनविधिमाह- 'सिआ अ'त्ति सूत्रं, 'स्यात्' कदाचिद् 'गोचराग्रगतो' ग्रामान्तरं भिक्षां प्रविष्ट इच्छेत्परिभक्तु पानादि पिपासाद्यभिभूतः सन्, तत्र साधुवसत्यभावे 'कोष्ठकं' शून्यचट्टमठादि 'भित्तिमूलं वा' कुड्यैकदेशादि, प्रत्युपेक्ष्य चक्षुषा प्रमृज्य च रजोहरणेन 'प्रासुकं' बीजादिरहितं चेति सूत्रार्थः ॥

**मू. ( १५८ )** *अणुन्नवित्तु मेहावी, पडिच्छन्नंमि संवुडे।*
*हत्थगं संपमज्जित्ता, तत्थ भुंजिज्ज संजए ॥*

**वृ.** तत्र 'अणुन्नवि'त्ति सूत्रं, 'अनुज्ञाप्य' सागारिकपरिहारतो विश्रमणव्याजेन तत्स्वामिन-मवग्रह 'मेधावी' साधुः 'प्रतिच्छन्ने' तत्र कोष्ठकादौ 'संवृत्त' उपयुक्तः साधुरीर्याप्रतिक्रमणं कृत्वा तदनु 'हस्तकं' मुखवस्त्रिकारूपम्, आदायेति वाक्यशेषः, संप्रमृज्य विधिना तेन कायं तत्र भुञ्जीत 'संयतो' रागद्वेषावपाकृत्येति सूत्रार्थः ॥

**मू. ( १५९ )** *तत्थ से भुंजमाणस्स, अट्ठिअं कंटओ सिआ।*
*तणकट्ठसक्करं वावि, अन्नं वावि तहाविहं ॥*

**वृ.** 'तत्थ'त्ति सूत्रं, 'तत्र' कोष्ठकादौ 'से' तस्य साधोर्भुञ्जानस्य अस्थि कण्टको वा स्यात्, कथंचिद्गृहिणां प्रमाददोषात्, कारणगृहीते पुद्गल एवेत्यन्ये, तृणकाष्ठशर्करादि चापि स्यात्, उचितभोजनेऽन्यद्वापि तथाविधं बदरककर्कटकादीति सूत्रार्थः ॥

**मू. ( १६० )** *तं उक्खिवित्तु न निक्खिवे, आसएण न छड्डुए।*
*हत्थेण तं गहेऊण, एगंतमवक्कमे ॥*

वृ. 'तं उक्खिवित्तु' इति सूत्रं, 'तद्' अस्थ्यादि उत्क्षिप्य हस्तेन यत्र क्वचिन्न निक्षिपेत्, तथा 'आस्येन' मुखेन नोज्झेत्, मा भूद्विराधनेति, अपितु हस्तेन गृहीत्वा 'तद्' अस्थ्यादि एकान्तमवक्रामेदिति सूत्रार्थः ॥

मू. (१६१)　*एगंतमवक्कमित्ता, अचित्तं पडिलेहिआ।*
*जयं परिट्ठविज्जा, परिट्ठप्प पडिक्कमे ॥*

वृ. 'एगंत'त्ति सूत्रं, एकान्तमवक्रम्य अचित्तं प्रत्युपेक्ष्य यतं प्रतिष्ठापयेत्, प्रतिष्ठाप्य प्रतिक्रामेदिति, भावार्थः पूर्ववदेवेति सूत्रार्थः ॥

मू. (१६२)　*सिआ य भिक्खू इच्छिज्जा, सिज्जमागम्म भुत्तुअं।*
*सपिंडपायमागम्म, उंडुअं पडिलेहिआ ॥*

वृ.वसतिमधिकृत्य भोजनविधिमाह- 'सिआ य'त्ति सूत्रं, 'स्यात्' कदाचित् तदन्यकारणभावे सति भिक्षुरिच्छेत् 'शय्यां' वसतिमागम्य परिभोक्तुं, तत्रायं विधिः-सह पिण्डपातेन-विशुद्धसमुदानेनागम्य, वसतिमिति गम्यते, तत्र बहिरेवोन्दुकं-स्थानं प्रत्युपेक्ष्य विधिना तत्रस्थः पिण्डपातं विशोधयेदिति सूत्रार्थः ॥

मू. (१६३)　*विनएणं पविसित्ता, सगासे गुरुणो मुनी।*
*इरियावहियमायाव, आगओ अ पडिक्कमे ॥*

वृ. तत ऊर्ध्वं 'विनएण'त्ति सूत्रं, विशोध्य पिण्डं बहिः 'विनयेन' नैषधिकीनमःक्षमा-श्रमणेभ्योऽञ्जलिकरणलक्षणेन प्रविश्य, वसतिमिति गम्यते, सकाशे गुरोः मुनिः, गुरुसमीप इत्यर्थः, 'ईर्यापथिकामादाय' "इच्छामी पडिक्कमिउं इरियावहियाए" इत्यादि पठित्वा सूत्रं, आगतश्च गुरुसमीपं प्रतिक्रामेत्-कायोत्सर्गं कुर्यादिति सूत्रार्थः ॥

मू. (१६४)　*आभोइत्ताण नीसेसं, अईआरं जहक्कमं।*
*गमनागमने चेव, भत्तपाने व संजए।*

वृ.'आभोइत्ताण'त्ति सूत्रं, तत्र कायोत्सर्गे 'आभोगयित्वा' ज्ञात्वा निःशेषमतिचारं 'यथाक्रमं' परिपाट्या, केत्याह- 'गमनागमनयोश्चैव' गमने गच्छत आगमन आगच्छतो योऽतिचारः तथा 'भक्तपानयोश्च' भक्ते पाने च योऽतिचारः तं 'संयतः' साधुः कायोत्सर्गस्थो हृदये स्थाप-येदिति सूत्रार्थः ॥

मू. (१६५)　*उज्जुप्पन्नो अनुव्विग्गो, अव्वक्खित्तेन चेअसा।*
*आलोए गुरुसगासे, जं जहा गहिअं भवे ॥*

वृ. विधिनोत्सारिते चैतस्मिन् 'उज्जुप्पन्न'त्ति सूत्रं, 'ऋजुप्रज्ञः' अकुटिलमतिः सर्वत्र 'अनुद्विग्नः' क्षुदादिजयात्प्रशान्तः अव्याक्षिप्तेन चेतसा, अन्यत्रोपयोगमगच्छतेत्यर्थः, आलोच-येद्गुरुसकाशे, गुरोर्निवेदयदिति भावः, 'यद्' अशनादि 'यथा' येन प्रकारेण हस्तदा(घाव) नादिना गृहीतं भवेदिति सूत्रार्थः ॥

मू. (१६६)　*न सम्ममालोइअं हुज्जा, पुव्विं पच्छा व जं कडं।*
*पुणो पडिक्कमे तस्स, वोसट्ठो चिंतए इमं ॥*

वृ.तदनु च 'न संमं'ति सूत्रं, न सम्यगालोचितं भवेत् सूक्ष्मम् अज्ञानात्- अनाभोगेनानु-

स्मरणाद्वा, पूर्वं पश्चाद्वा यत्कृतं, पुरःकर्म पश्चात्कर्म वेत्यर्थः, 'पुनः' आलोचनोत्तर-कालं प्रतिक्रमेत् 'तस्य' सूक्ष्मातिचारस्य 'इच्छामि पडिक्कमिउं गोअरचरिआए, इत्यादि सूत्रं पठित्वा 'व्युत्सृष्टः' कायोत्सर्गस्थश्चिन्तयेदिदं-वक्ष्यमाणलक्षणमिति सूत्रार्थः ॥

मू. (१६७) *अहो जिनेहिं असावज्जा, वित्ती साहूण देसिआ।*
*मुक्खसाहणहेउस्स, साहुदेहस्स धारणा॥*

वृ. 'अहो जिनेहिं' सूत्रं, 'अहो' विस्मये 'जिनैः' तीर्थकरैः 'असावद्या' अपापा 'वृत्तिः' वर्त्तना साधूनां दर्शिता देशिता वा 'मोक्षसाधनहेतोः' सम्यग्दर्शनज्ञानचारित्रसाधनस्य साधुदेहस्य 'धारणाय' संधारणार्थमिति सूत्रार्थः ॥

मू. (१६८) *नमुक्कारेण पारित्ता, करित्ता जिनसंथवं।*
*सज्झायं पट्ठवित्ता णं, वीसमेज्ज खणं मुनी॥*

वृ. ततश्च-'नमोक्कारेण'त्ति सूत्रं, नमस्कारेण पारयित्वा 'नमो अरिहंताणं' मित्यनेन, कृत्वा जिनसंस्तवं "लोगस्सुज्जोअगरे" इत्यादिरूपं, ततो न यदि पूर्वं प्रस्थापितस्ततः स्वाध्यायं प्रस्थाप्य मण्डल्युपजीवकस्तमेव कुर्यात् यावदन्य आगच्छन्ति, यः पुनस्तदन्यः क्षपकादिः सोऽपि प्रस्थाप्य विश्राम्येत् 'क्षणं' स्तोककालं मुनिरिति सूत्रार्थः ॥

मू. (१६९) *वीसमंतो इमं चिंते, हियमट्ठं लाभमस्सिओ।*
*जइ मे अनुग्गहं कुज्जा, साहू हुज्जामि तारिओ॥*

वृ. 'वीसमंति'त्ति सूत्रं, विश्राम्यन्निदं चिन्तयेत् परिणतेन चेतसा, कल्याणप्रापकमर्थ-वक्ष्यमाणं, किंविशिष्टः सन्? - भावलाभेन-निर्जरादिनाऽर्थीस्येति लाभार्थिकः, यदि 'मे' मम अनुग्रहं कुर्युः साधवः प्रासुकपिण्डग्रहणेन ततः स्यामहं तारितो भवसमुद्रादिति सूत्रार्थः ॥

मू. (१७०) *साहवो तो चिअत्तेणं, निमंतिज्ज जहक्कमं।*
*जइ तत्थ केइ इच्छिज्जा, तेहिं सद्धिं तु भुंजए॥*

वृ. एवं संचिन्त्योचितवेलायामाचार्यमामन्त्रयेद्, यदि गृह्णाति शोभनं, नो चेद्वक्तव्योऽसौ भगवन्! देहि केभ्योऽप्यतो यद्दातव्यं, ततो यदि ददाति सुन्दरम्, अथ भणति त्वमेव प्रयच्छ, अत्रान्तरे-'साहवो'त्ति सूत्रं, साधूंस्ततो गुर्वनुज्ञातः सन् 'चिअत्तेणं'ति मनः-प्रणिधानेन निमन्त्र-येत् 'यथाक्रमं' यथारत्नाधिकतया, ग्रहणौचित्यापेक्षया बालादिक्रमेणेत्यन्ये, यदि तत्र 'केचन' धर्मबान्धवाः 'इच्छेयुः' अभ्युपगच्छेयुस्ततस्तैः सार्धं भुञ्जीत उचितसंविभाग-दानेनेति सूत्रार्थः॥

मू. (१७१) *अह कोइ न इच्छिज्जा, तओ भुंजिज्ज एक्कओ।*
*आलोए भायणे साहू, जयं अप्परिसाडियं॥*

वृ. 'अह कोइ'त्ति सूत्रं, अथ कश्चिन्नेच्छेत् साधुस्ततो भुञ्जीत 'एकको' रागादिरहित इति, कथं भुञ्जीतेत्यत्राह-'आलोके भाजने' मक्षिकाद्यपोहाय प्रकाशप्रधाने भाजन इत्यर्थः 'साधुः' प्रव्रजितः 'यतं' प्रयत्नेन तत्रोपयुक्तः 'अपरिशाटं' हस्तमुखाभ्यामनुज्झन् इति सूत्रार्थः ॥

मू. (१७२) *तित्तगं व कडुअं व कसायं, अंबिलं व महुरं लवणं वा।*
*एअलद्धमन्नत्थ पउत्तं, महुघयं व भुंजिज्ज संजए॥*

वृ. भोज्यमधिकृत्य विशेषमाह-'तित्तगं व'त्ति सूत्रं, तिक्तकं वा एलुकवालुङ्कादि, कटुकं वा आर्द्रकतीमनादि, कषयां वल्लादि, अम्लं तक्रारनालादि, मधुरं क्षीरमध्वादि, लवणं वा प्रकृतिक्षारं तथाविधं शाकादि लवणोत्कटं वाऽन्यत्, एतत्तिक्तादि 'लब्धम्' आगमोक्तेन विधिना प्राप्तम् 'अन्यार्थम्' अक्षोपाङ्गन्यायेन परमार्थतो मोक्षार्थं प्रयुक्तं तत्साधकमितिकृत्वा मधुघृत-मिव च भुञ्जीत संयतः, न वर्णाद्यर्थम्, अथवा मधुघृतमिव 'नो वामाओ हणुआओ दाहिणं हणुअं संचारिज्ज'त्ति सूत्रार्थः ॥

मू. (१७३) *अरसं विरसं वावि, सूइअं वा असूइअं।*
*उल्लं वा जइ वा सुक्कं, मंथुकुम्मासभोअणं ॥*

वृ. किंच-'अरसं'ति सूत्रं, अरसम्-असंप्राप्तरसं हिंग्वादिभिरसंस्कृतमित्यर्थः, 'विरसं वापि' विगतरसमतिपुराणौदनादि 'सूचितं' व्यञ्जनादियुक्तम् 'असूचितं वा' तद्रहितं वा, कथयित्वा अकथयित्वा वा दत्तमित्यन्ये, 'आर्द्रं' प्रचुरव्यञ्जनम्, यदिवा शुष्कं स्तोकव्यञ्जनं वा, किं तदित्याह-'मन्थुकुल्माषभोजनं' मन्थु-बदरचूर्णादि कुल्माषाः-सिद्धमाषाः, यवमाषा इत्यन्ये इति सूत्रार्थः ॥

मू. (१७४) *उप्पन्नं नाइहीलिज्जा, अप्पं वा बहु फासुअं।*
*मुहालद्धं मुहाजीवी, भुंजिज्जा दोसवज्जिअं ॥*

वृ. एतद्भोजनं किमित्याह- 'उप्पन्नं'ति सूत्रं, 'उत्पन्नं' विधिना प्राप्तं 'नातिहीलयेत्' सर्वथा न निन्देत्, अल्पमेतत्र देहपूरकमिति किमनेन ?, बहु वा असारप्रायमिति, वाशब्दस्य व्यवहितः संबन्धः, किंविशिष्टं तदित्याह-'प्रासुकं' प्रगतासु निर्जीवमित्यर्थः, अन्ये तु व्याचक्षते-अल्पं वा, वाशब्दाद्विरसादि वा, बहुप्रासुकं-सर्वथा शुद्धं नातिहीलयेदिति, अपि त्वेवं भावयेत्-यदेवेह लोका ममानुपकारिणः प्रयच्छन्ति तदेव शोभनमिति । एवं 'मुधालब्धं' कोण्टलादिव्यतिरेकेण प्राप्तं 'मुधाजीवी' सर्वथा अनिदानजीवी, जात्याद्यनाजीवक इत्यन्ये, भुञ्जीत 'दोषवर्जितं' संयोजनादिरहितमिति सूत्रार्थः ॥

मू. (१७५) *दुल्लहा उ मुहादाई, मुहाजीवीवि दुल्लहा।*
*मुहादाई मुहाजीवी, दोऽवि गच्छंति सुग्गइं ॥ ति बेमि।*

वृ. एतद्दुरापमिति दर्शयति-'दुल्लह'त्ति, दुर्लभा एव मुधादातारः, तथाविधभागवतवत्, मुधाजीविनोऽपि दुर्लभाः, तथाविधचेल्लकवत् । अमीषां फलमाह-मुधादातारो मुधाजीविनश्च द्वावप्येतौ गच्छतः 'सुगतिं' सिद्धिगतिं कदाचिदनन्तरमेव कदाचिद्देवलोकसुमानुषप्रत्यागमनपरम्परया । ब्रवीमीति पूर्ववत् ।

अत्र भागवतोदाहरणम्-जहा एगो परिव्वायगो सो एगं भागवयं उवट्ठिओ, अहं तव गिहे वरिसारत्तं करेमि, मम उदंतं वहाहि, तेन भणिओ-जइ मम उदंतं न वहसि, एवं हवउ त्ति । सो से भागवओ सेज्जभत्तपानादिणा उदंतं वहति । अन्नया य तस्स घोडओ चोरेहिं हिओ, अतिप्पभायंतिकाऊण जालीए बद्धो, सो अ परिव्वायगो तलाए ण्हायओ गओ, तेन सो घोडओ दिट्ठो, आगंतुं भणइ-मम पाणीयतडे पोत्ती विस्सरिया, गोहो विसज्जिओ, तेन घोडओ दिट्ठो, आगंतुं कहियं, तेन भागवएण नायं, जहा परिव्वायगेण कहियं । तेन परिव्वायगो भण्णत्ति-

जाहि, नाहं तव निव्विट्ठं उदंतं वहामि, णिव्विट्ठं अप्पफलं भवति। एरिसो मुधादाई।

मुधाजीविमी उदाहरणं-एक्को राया धम्मं परिक्खई, को धम्मो ?, जो अनिव्विट्ठं भुंजइ त्ति, तो तं परिक्खामित्ति काऊण मणुस्सा संदिट्ठा, राया मोदए देइ, तत्थ बहवे कप्पडियादयो आगया, पुच्छिअंति-तुम्हे केण भुंजह ?, अन्नो भणइ-अहं मुहेण भुंजामि, अन्नो-अहं पाएहिं, अन्नो-अहं हत्थेहिं, अन्नो-अहं लोगानुग्गहेण, चेल्लगो भणइ-अहं मुहियाए। रन्ना पुच्छिअं-कहं चिअ ?, एगेण कहिअं-अहं कहगो अओ मुहेण, अन्नेन भणिअं-अहं लेहवाहगो अओ पाएहिं, अन्नेन भणिअं-अहं लेहगो अओ हत्थेहिं, भिक्खुणा भणिअं-अहं पव्वओ अओ लोगाणुग्गहेण, चेल्लएण भणिअं-अहं संजायसंसारविरागो अओ मुहियाए, ताहे सो राया एस धम्मोत्तिकाऊण आयरियसमीवं गओ, पडिबुद्धो पव्वइओ य। एसो मुहाजीवित्ति सूत्रार्थः॥

अध्ययनं ५ उद्देशकः-१ समाप्तः

## अध्ययनं-५ उद्देशकः-२

*मू. (१७६) पडिग्गहं संलिहित्ता नं, लेवमायाए संजए।*
*दुगंधं वा सुगंधं वा, सव्वं भुंजे न छड्डुए॥*

**वृ.** पिण्डैषणायाः प्रथमोद्देशके प्रक्रान्तोपयोगि यन्नोक्तं तदाह-'पडिग्गहं'ति सूत्रं, 'प्रतिग्रहं' भाजनं 'संलिख्य' प्रदेशिन्या निरवयवं कृत्वा, कथमित्याह-'लेपमर्यादया' अलेपं संलिह्य 'संयतः' साधुः दुर्गन्धि वा सुगन्धि वा भोजनजातं, गन्धग्रहणं रसाद्युपलक्षणं, 'सर्वं' निरवशेषं 'भुञ्जीत' अश्नीयात् 'नोज्झेत्' नोत्सृजेत् किञ्चिदपि, मा भूत्संयमविराधना। अस्यैवार्थस्य गरीयस्त्वख्यापनाय सूत्रार्थयोर्व्यत्ययोपन्यासः, प्रतिग्रहशब्दो माङ्गलिक इत्युद्देशादौ तदुपन्यासार्थं वा, अन्यथैवं स्यात्-दुर्गन्धि वा सुगन्धि वा, सर्वं भुञ्जीत नोज्झेत्। प्रतिग्रहं संलिह्य लेपमर्यादया संयतः। विचित्रा च सूत्रगतिरिति सूत्रार्थः॥

*मू. (१७७) सेज्जा निसीहियाए, समावन्नो अ गोअरे।*
*अयावयट्ठा भुच्चा नं जइ तेनं न संथरे।*

**वृ.** विधिविशेषमाह-'सेज्ज'त्ति सूत्रं, 'शय्यायां' वसतौ 'नैषेधिक्यां' स्वाध्यायभूमौ, शय्यैव वाऽसमञ्जसनिषेधान्नैषेधिकि तस्यां समापन्नो वा गोचरे, क्षपकादिः छन्नमठादौ आयावदर्थं भुक्त्वा न यावदर्थम्-अपरिसमाप्तमित्यर्थः, नमिति वाक्यालङ्कारे। यदि तेन भुक्तेन 'न संस्तरेत्' न यापयितुं समर्थः, क्षपको विषमवेलापत्तनस्थो ग्लानो वेति सूत्रार्थः॥

*मू. (१७८) तओ कारणमुप्पन्ने, भत्तपानं गवेसए।*
*विहिणा पुव्वउत्तेणं, इमेणं उत्तरेण य॥*

**वृ.** तओ'त्ति सूत्रं ततः कारणे वेदनादावुत्पन्ने पुष्टालम्बनः सन् भक्तपानं 'गवेषयेद्' अन्विष्येत्, अन्यथा सकृद्भुक्तमेव यतीनामिति 'विधिना' पूर्वोक्तेन संप्राप्ते भिक्षाकाल इत्यादिना, अनेन च वक्ष्यमाणलक्षणेनोत्तरेण चेति सूत्रार्थः॥

*मू. (१७९) कालेण निक्खमे भिक्खू, कालेन य पडिक्कमे।*
*अकालं च विवज्जित्ता, काले कालं समायरे॥*

वृ. 'कालेन'त्ति सूत्रं, यो यस्मिन् ग्रामादावुचितो भिक्षाकालस्तेन करणभूतेन 'निष्क्रामेद्' भिक्षुर्वसतेर्भिक्षार्थं, कालेन चोचितेनैव यावता स्वाध्यायादि निष्पद्यते तावता 'प्रतिक्रामेत्' निवर्तेत। भणिअं च-खेत्तं कालो भायणं तिन्निवि पडुप्पहंति हिंडउत्ति अट्ठ भंगा। 'अकालं च वर्जयित्वा' येन स्वाध्यायादि न संभाव्यते स खल्वकालस्तमपास्य काले कालं समाचरेदिति सर्वयोगोपसंग्रहार्थं निगमनं, भिक्षावेलायां भिक्षां समाचरेत्, स्वाध्यायादिवेलायां स्वाध्याया-दीनीति, उक्तं च-'जोगो जोगो जिनसासणंमी'त्यादि, इति सूत्रार्थः ॥

*मू. (१८०) अकाले चरसी भिक्खू, कालं न पडिलेहसि।*
*अप्पाणं च किलामेसि, संनिवेसं च गरिहसि ॥*

वृ. अकालचरणे दोषमाह-'अकाले'त्ति सूत्र, अकालचारी कश्चित् साधुरलब्धभैक्षः केनचित्त साधुना प्राप्ता भिक्षा नवेत्यभिहितः सन्नेवं ब्रूयात्-कुतोऽत्र स्थण्डिलसंनिवेशे भिक्षा ?, स तेनोच्यते-अकाले चरसि भिक्षो ! प्रमादात्स्वाध्यायलोभाद्वा, कालं न प्रत्युपेक्षसे, किमयं भिक्षाकालो नवेति, अकालचरणेनात्मानं च ग्लपयसि दीर्घाटनन्यूनोदरभावेन, संनिवेशं च गर्हसि भगवदाज्ञालोपते दैन्यं प्रतिपद्येति सूत्रार्थः ॥

*मू. (१८१) सइ काले चरे भिक्खू, कुज्जा पुरिसकारिअं।*
*अलाभुत्तिं न सोइज्जा, तवुत्ति अहिआसए ॥*

वृ. यस्मादयं दोषः संभाव्यते तस्मादकालाटनं न कुर्यादिति। 'सति'त्ति सूत्रं, 'सति' विद्यमाने 'काले' भिक्षासमये चरेद्भिक्षुः, अन्ये तु व्याचक्षते-स्मृतिकाल एव भिक्षा-कालोऽभिधीयते, स्मर्यन्ते यत्र भिक्षाकाः स स्मृतिकालस्तस्मिन्, 'चरेद्भिक्षुः' भिक्षार्थं या-यात्, कुर्यात् पुरुषकारं, जङ्घाबले सति वीर्याचारं न लङ्घयेत्। तत्र चालाभेऽपि भिक्षाया अलाभ इति न शोचयेद्, वीर्याचाराराधनस्य निष्पन्नत्वात्, तदर्थं च भिक्षाटनं नाहारार्थमेवातो न शोचेत्, अपितु तप इत्यधिसहेत, अनशनन्यूदोरतालक्षणं तपो भविष्यतीति सम्यग्विचिन्तये-दिति सूत्रार्थः ॥

*मू. (१८२) तहेवुच्चावया पाणा, भत्तट्ठाए समागया।*
*तं उज्जुअं न गच्छिज्जा, जयमेव परक्कमे ॥*

वृ. उक्ता कालयतना, अधुना क्षेत्रयतनामाह-'तहेव'त्ति, तथैव 'उच्चावचाः' शोभना-शोभनभेदेन नानाप्रकाराः प्राणिनो भक्तार्थं समागता बलिप्राभृतिकादिष्वागता भवन्ति, 'तदृजुकं' तेषामभिमुखं न गच्छेत् तत्संत्रासनेनान्तरायाधिकरणादिदोषात्, किंतु यतमेव पराक्रामेत्, तदुद्वेगमनुत्पादयन्निति सूत्रार्थः ॥

*मू. (१८३) गोअरग्गपविट्ठो अ, न निसीइज्ज कत्थई।*
*कहं च न पबंधिज्जा, चिट्ठित्ता न व संजए ॥*

वृ. किं च 'गोअरग्ग'त्ति सूत्रं, गोचराग्रप्रविष्टस्तु भिक्षार्थं प्रविष्ट इत्यर्थः 'न निषीदेत्' नोपविशेत् 'क्वचिद्' गृहदेवकुलादौ, संयमोपघातादिप्रसङ्गात्, 'कथां च' धर्मकथादिरूपां 'न प्रबन्धीयात्' प्रबन्धेन न कुर्यात्, अनेनैकव्याकरणैकज्ञातानुज्ञामाह, अत एवाहस्थित्वा कालपरिग्रहेण संयत इति, अनेषणाद्वेषादिदोषप्रसंगादिति सूत्रार्थः ॥

मू. ( १८४ ) अग्गलं फलिहं दारं, कवाडं वावि संजए ।
अवलंबिआ न चिट्ठिज्जा, गोअरग्गगओ मुनी ॥

वृ. उक्ता क्षेत्रयतना, द्रव्ययतनामाह-'अग्गलं'ति सूत्रं, 'अर्गलं' गोपुरकपाटादिसंबन्धिनं 'परिघं' नगरद्वारादिसंबन्धिनं 'द्वारं' शाखामयं 'कपाटं' द्वारयन्त्रं वाऽपि संयतः अवलम्ब्य न तिष्ठेत्, लाघवविराधनादोषात्, 'गोचराग्रगतो' भिक्षाप्रविष्टः, मुनिः संयत इति पर्यायौ तदुपदेशाधिकाराददुष्टावेवेति सूत्रार्थः ॥

मू. ( १८५ ) समणं माहणं वावि, किविणं वा वणीमगं ।
उवसंकमंतं भत्तट्ठा, पानट्ठाए व संजए ॥

वृ. उक्ता द्रव्ययतना, भावयतनामाह-'समणं'त्ति सूत्रं, 'श्रमणं' निर्ग्रन्थादिरूपं, 'ब्राह्मणं' धिग्वर्णं वापि 'कृपणं वा' पिण्डलोकं 'वनीयकं' पञ्चा(नां वनीपका)नामप्यन्यतमम् 'उपसंक्रामन्तं' सामीप्येन गच्छन्तं गतं वा भक्तार्थं पानार्थं वा 'संयतः' साधुरिति सूत्रार्थः ॥

मू. ( १८६ ) तमइक्कमित्तु न पविसे, नवि चिट्ठे चक्खुगोअरे ।
एगंतमवक्कमित्ता, तत्थ चिट्ठिज्ज संजए ॥

वृ. 'तं'मिति सूत्रं, 'तं' श्रमणादिम् 'अतिक्रम्य' उल्लङ्घ्य न प्रविशेत्, दीयमाने च समुदाने तेभ्यो न तिष्ठेच्चक्षुर्गोचरे । कस्तत्र विधिरित्याह-एकान्तमपक्रम्य तत्र तिष्ठेत् संयत इति ।

मू. ( १८७ ) वणीमगस्स वा तस्स, दायगस्सुभयस्स वा ।
अप्पत्तिअं सिआ हुज्जा, लहुत्तं पवयणस्स वा ॥

वृ. अन्यथैते दोषा इत्याह-'वणीमगस्स'त्ति सूत्रं, 'वनीपकस्य वा तस्ये'त्येतच्छ्रमणाद्युपलक्षणं, दातुर्वा उभयोर्वा अप्रीतिः कदाचित् स्यात्-अहो अलोकज्ञतैतेषामिति, लघुत्वं प्रवचनस्य वाऽन्तरायदोषश्चेति सूत्रार्थः ॥

मू. ( १८८ ) पडिसेहिए व दिन्ने वा, तओ तम्मि नियत्तिए ।
उवसंकमिज्ज भत्तट्ठा, पानट्ठाए व संजए ॥

वृ. तस्मान्नैवं कुर्यात्, किंतु-'पडिसेहिअ'त्ति सूत्रं, प्रतिषिद्धे वा दत्ते वा 'ततः' स्थानात् 'तस्मिन्' वनीपकादौ निवर्तिते सति उपसंक्रामेद्भक्तार्थं वापि संयत इति सूत्रार्थः ॥

मू. ( १८९ ) उप्पलं पउमं वावि, कुमुअं वा मगदंतिअं ।
अन्नं वा पुप्फसच्चित्तं, तं च संलुंचिआ दए ॥

वृ. परपीडाप्रतिषेधाधिकारादिदमाह-'उप्पलं'ति सूत्रं, 'उत्पलं' नीलोत्पलादि 'पद्मम्' अरविन्दं वापि 'कुमुदं वा' गर्दभकं वा 'मगदन्तिकां' मेत्तिकां, मल्लिकामित्यन्ये, तथाऽन्यद्वा पुष्पं सचित्तं-शाल्मलीपुष्पादि, तच्च 'संलुञ्च्य' अपनीय छित्त्वा दद्यादिति सूत्रार्थः ॥

मू. ( १९० ) तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।
दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥

वृ. 'तारिसं'त्ति सूत्रं, तादृशं भक्तपानं तु संयतानामकल्पिकं, यतश्चैवमतो ददतीं प्रत्याचक्षीत न मम कल्पते तादृशमिति सूत्रार्थः ॥

मू. ( १९१ ) उप्पलं पउमं वावि, कुमुअं वा मगदंतिअं ।

*अन्नं वा पुप्फसच्चित्तं, तं च संमद्दिआ दए ॥*

मू. ( ११२ ) *तं भवे भत्तपानं तु, संजयाण अकप्पिअं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. एवं तच्च संमृद्य दद्यात्, संमर्दनं नाम पूर्वच्छिन्नानामेवापरिणतानां मर्दनं, शेषं सूत्रद्वयेऽपि तुल्यम् । आह-एतत्पूर्वमप्युक्तमेव- 'संमद्दमाणी पाणाणि हरिआणि अ' इत्यत्र, उच्यते, उक्तं सामान्येन विशेषाभिधानाददोषः ॥

मू. ( ११३ ) *सालुअं वा विरालिअं, कुमुअं उप्पलनालिअं ।*
*मुणालिअं सासवनालिअं, उच्छुखंडं अनिव्वुडं ॥*

वृ. तथा 'सालुअं'ति सूत्रं, 'शालूकं वा' उत्पलकन्दं 'विरालिकां' पलाशकन्दरूपां, पर्ववल्लिप्रतिपर्ववल्लिप्रतिपर्वकन्दमित्यन्ये, कुमुदोत्पलनालौ प्रतीतौ, तथा 'मृणालिकां' पद्मिनीकन्दोत्थां, 'सर्षपनालिकां' सिद्धार्थकमञ्जरी तथा इक्षुखण्डम् 'अनिर्वृतं' सचित्तम् ।
एतच्चानिर्वृतग्रहणं सर्वत्राभिसंबध्यत इति सूत्रार्थः ॥

मू. ( ११४ ) *तरुणगं वा पवालं, रुक्खस्स तणगस्स वा ।*
*अन्नस्स वावि हरिअस्स, आमगं परिवज्जए ।*

वृ. किंच- 'तरुणयं'ति सूत्रं, तरुणं वा 'प्रवालं' पल्लवं 'वृक्षस्य' चिञ्चिणिकादेः 'तृणस्य वा' मधुरतृणादेः अन्यस्य वापि हरितस्य आर्यकादेः 'आमम्' अपरिणतं परिवर्जयेदिति।

मू. ( ११५ ) *तरुणिअं वा छिवाडिं, आमिअं भज्जिअं सइं ।*
*दिंतिअं पडिआइक्खे, न मे कप्पइ तारिसं ॥*

वृ. तथा- 'तरुणिअं'ति सूत्रं, 'तरुणां वा' असंजातां 'छिवाडि'मिति मुद्गादिफलिम् 'आमाम्' असिद्धां सचेतनां, तथा भर्जितां 'सकृद्' एकवारं, ददतीं प्रत्याचक्षीत न मम कल्पते तादृशं भोजनमिति सूत्रार्थः ॥

मू. ( ११६ ) *तहा कोलमणुस्सिन्नं, वेलुअं कासवनालिअं ।*
*तिलपप्पडगं नीमं, आमगं परिवज्जए ॥*

वृ. 'तहा कोलं'ति सूत्रं, तथा 'कोलं' बदरम् 'अस्विन्नं' वह्न्युदकयोगेनानापादितविकारान्तरं, 'वेणुकं' वंशकरिल्लं 'कासवनालिअं' श्रीपर्णीफलम्, अस्विन्नमिति सर्वत्र योज्यं, तथा 'तिलपर्पटं' पिष्टतिलमयम् 'नीमं' नीमफलमामं परिवर्जयेदिति सूत्रार्थः ॥

मू. ( ११७ ) *तहेव चाउलं पिट्ठं, विअडं वा तत्तऽनिव्वुडं ।*
*तिलपिट्ठपूइपिन्नागं, आमगं परिवज्जए ।*

वृ. 'तहेव'त्ति सूत्रं, तथैव तान्दुल पिष्टं, लोट्टमित्यर्थः, विकटं वा- शुद्धोदकं तथा तप्तनिर्वृतं कथितं सत् शीतीभूतम्, तप्तानिर्वृतं वा- अप्रवृत्तत्रिदण्डं, तिलपिष्टं-तिललोट्टं, 'पूतिपिण्याकं' सर्षपस्वलमामं परिवर्जयेदिति सूत्रार्थः ॥

मू. ( ११८ ) *कविट्ठं माउलिंगं च, मूलगं मूलगत्तिअं ।*
*आमं असत्थपरिणयं, मणसावि न पत्थए ।*

वृ. 'कविट्ठं'ति सूत्रं, 'कपित्थं' कपित्थफलं, 'मातुलिङ्गं च' बीजपूरकं, 'मूलकं'

सपत्रजालकं 'मूलवर्त्तिकां' मूलकन्दचक्कलिम् 'आमाम्' अपक्कामशस्त्रपरिणतां स्वकायशस्त्रा-दिनाऽविध्वस्ताम्, अनन्तकायत्वादुरुत्वख्यापनार्थमुभयं, मनसापि न प्रार्थयेदिति सूत्रार्थः ॥

*मू. ( १९९ ) तहेव फलमंथूणि, बीअमंथूणि जाणिआ।*
*बिहेलगं पियालं च, आमगं परिवज्जए ॥*

वृ. 'तहेव'त्ति सुत्रं, तथैव 'फलमन्थून्' बदरचूर्णान्, बीजमन्थून्' यवादिचूर्णान् ज्ञात्वा प्रवचनतो 'बीभीतकं' बिभीतकफलं 'प्रियालं वा' प्रियालफलं च 'आमम्' अपरिणतं परिवर्जयेदिति सूत्रार्थः ॥

*मू. ( २०० ) समुआणं चरे भिक्खू, कुलमुच्चावयं सया।*
*नीयं कुलमइक्कम, ऊसढं नाभिधारए ॥*

वृ. विधिमाह- 'समुआणं'ति सूत्रं, समुदानं भावभैक्ष्यमाश्रित्य चरेद्भिक्षुः, केत्याह-कुलमुच्चावचं सदा, अगर्हितत्वे सति विभवाक्षया प्रधानमप्रधानं च, यथापरिपाट्यैव चरेत् 'सदा' सर्वकालं, नीचं कुलमतिक्रम्य विभवापेक्षया प्रभूततरलाभार्थम् 'उत्सृतम्' ऋद्धिमत्कुलं 'नाभिधारयेद्' [illegible]रात्, [illegible]लाघवादिप्रसङ्गादिति सूत्रार्थः ॥

*मू. ( २०१ ) अदीनो वित्तिमेसिज्जा, न विसीइज्ज पंडिए।*
*अमुच्छिओ भोअणंमि, मायण्णे एसनारए ॥*

वृ. किञ्च-'अदीन'त्ति सूत्रं, 'अदीनो' द्रव्यदैन्यमङ्गीकृत्याम्लानवदनः 'वृत्तिं' वर्तनम् 'एषयेद्' गवेषयेत्, 'न विषीदेद्' अलाभे सति विषादं न कुर्यात् 'पण्डितः' साधुः 'अमूर्च्छितः' अगृद्धो भोजने, लाभे सति मात्राज्ञ आहारमात्रां प्रति 'एषणारतः' उद्गमोत्पादनैषणापक्षपाती।

*मू. ( २०२ ) बहुं परघरे अत्थि, विविहं खाइमसाइमं।*
*न तत्थ पंडिओ कुप्पे, इच्छा दिज्ज परो न वा ॥*

वृ. एवं च भावयेत् -'बहुं'ति सूत्रं, 'बहु' प्रमाणतः प्रभूतं 'परगृहे' असंयतादिगृहेऽस्ति 'विविधम्' अनेकप्रकारं खाद्यं स्वाद्यम्, एतच्चाशनाद्युपलक्षणं, 'न तत्र पण्डितः कुप्येत्' सदपि न ददातीति न रोषं कुर्यात्, किंतु-'इच्छया दद्यात् परो न वे'ति इच्छा परस्य, न तत्रान्यत् किञ्चिदपि चिन्तयेद्, सामायिकबाधनादिति सूत्रार्थः ॥

*मू. ( २०३ ) सयनासनवत्थं वा, भत्तं पानं व संजए।*
*अदितस्स न कुप्पिज्जा, पच्चक्खेवि अ दीसओ ॥*

वृ. एतदेव विशेषेणाह-'सयण'त्ति सूत्रं, शयनासनवस्त्रं चेत्येकवद्भावः भक्तं पानं वा संयतोऽददतो न कुप्येत् तत्स्वामिनः, प्रत्यक्षेऽपि च दृश्यमाने शयनासनादाविति सूत्रार्थः ॥

*मू. ( २०४ ) इत्थिअं पुरिसं वावि, डहरं वा महल्लगं।*
*वंदमाणं न जाइज्जाआ, नो अ नं फरुसं वए ॥*

वृ. 'इत्थिअं'ति सूत्रं, स्त्रियं वा पुरुषं वापि, अपिशब्दात्तथाविधं नपुंसकं वा, 'डहरं' तरुणं 'महल्लकं वा' वृद्धं वा, वाशब्दान्मध्यमं वा, वन्दमानं सन्तं भद्रकोऽयमिति न याचेत, विपरिणामदोषात्, अत्राद्यभावेन याचितादाने न चैनं परुषं ब्रूयात्-वृथा ते वन्दनमित्यादि पाठान्तरं वा-वन्दमानो न याचेत ललितव्याकरणेन। शेषं पूर्ववदिति सूत्रार्थः ॥

मू. ( २०५ ) *जे न वंदे न से कुप्पे, वंदिओ न समुक्कसे ।*
*एवमन्नेसमाणस्स, सामन्नमनुचिट्ठइ ॥*

वृ. तथा 'जे न वंदि' त्ति सूत्रं, यो न वन्दते कश्चिद्गृहस्थादिः न तस्मै कुप्यैत् तथा वन्दितः केनचिन्नृपादिना न समुत्कर्षेत् । 'एवम्' उक्तेन प्रकारेण 'अन्वेषमाणस्य' भगवदाज्ञामनुपालयतः श्रामण्यमनुतिष्ठत्यखण्डमिति सूत्रार्थः ॥

मू. ( २०६ ) *सिआ एगइओ लद्धुं, लोभेन विनिगूहइ ।*
*मामेयं दाइयं संतं, दट्ठूण सयमायए ॥*

वृ. स्वपक्षस्तेयप्रतिषेधमाह- 'सिअ' त्ति सूत्रं, 'स्यात्' कदाचिद् 'एकः' कश्चिदत्यन्तजघन्यो लब्ध्वोत्कृष्टमाहारं, 'लोभेन' अभिष्वङ्गेण 'विनिगूहते' अहमेव भोक्ष्य इत्यन्तप्रान्तादिनाऽऽच्छादयति-किमित्यत आह-मा मम 'इदं' भोजनजातं दर्शितं सद्दृष्ट्वाऽऽचार्यादिः "स्वयमादद्याद्' आत्मनैव गृह्णीयादिति सूत्रार्थः ॥

मू. ( २०७ ) *अत्तट्ठा गुरुओ लुद्धो, बहुं पावं पकुव्वइ ।*
*दुत्तोसओ अ सो होइ, निव्वाणं च न गच्छइ ।*

वृ. अस्य दोषमाह-'अत्तट्ठ' त्ति सूत्रं, आत्मार्थ एव जघन्यो-गुरुः पापप्रधानो यस्य स आत्मार्थगुरुर्लुब्धः सन् क्षुद्रभोजने 'बहु' प्रभूतं पापं करोति, मायया दारिद्रं कर्मेत्यर्थः, अयं परलोकदोषः, इहलोकदोषमाह- 'दुस्तोषश्च भवति' येन केनचिदाहारेणास्य क्षुद्रसत्त्वस्य तुष्टिः कर्तुं न शक्यते, अत एव 'निर्वाणं च न गच्छति' इहलोक एव धृतिं न लभते, अनन्तसंसारिकत्वाद्वा मोक्षं न गच्छतीति सूत्रार्थः ॥

मू. ( २०८ ) *सिआ एगइओ लद्धुं, विविहं पानभोअणं ।*
*भद्दगं भद्दगं भुच्चा, विवन्नं विरसमाहरे ॥*

वृ. एवं यः प्रत्यक्षमपहरति स उक्तः, अधुना यः परोक्षमपहरति स उच्यते-'सिअ' त्ति सूत्रं, स्यादेको लब्ध्वेति पूर्ववत्, 'विविधम्' अनेकप्रकारं पानभोजनं भिक्षाचर्यागत एव 'भद्रकं भद्रकं' घृतपूर्णादि भुक्त्वा 'विवर्णं' विगतवर्णमाम्लखलादि 'विरसं' विगतरसं-शीतौदनादि 'आहरेद्' आनयेदिति सूत्रार्थः ॥

मू. ( २०९ ) *जाणंतु ता इमे समणा, आययट्ठी अयं मुनी ।*
*संतुट्ठो सेवए पंतं, लूहवित्ती सुतोसओ ॥*

वृ. स किमर्थमेवं कुर्यादित्यत आह-'जाणंतु' त्ति सूत्रं, जानन्तु तावन्मां शेषसाधवो यथा 'आयतार्थी' मोक्षार्थी अयं 'मुनिः' साधुः 'संतुष्टो' लाभालाभयोः समः सेवते 'प्रान्तम्' असारं 'रूक्षवृत्तिः' संयमवृत्तिः' 'संतोष्यः' येन केनचित्तोषं नीयत इति सूत्रार्थः ॥

मू. ( २१० ) *पूअणट्ठा जसोकामी, मानसम्मानकामए ।*
*बहुं पसवई पावं, मायासल्लं च कुव्वइ ॥*

वृ. एतदपि किमर्थमेवं कुर्यात्तत्राह- 'पूअणट्ठ' त्ति सूत्रं, 'पूजार्थम्' एवं कुर्वतः स्वपक्षपरपक्षाभ्यां सामान्येन पूजा भविष्यतीति 'यशस्कामी' अहो अयमिति प्रवादार्थं वा, तथा मानसन्मानकाम एवं कुर्यात्, तत्र वन्दनाभ्युत्थानलाभनिमित्तो मानः-वस्त्रपात्रादिलाभनिमित्तः

सन्मानः, स चैवंभूतः 'बहु' अतिप्रचुरं प्रधानसंक्लेशयोगात् 'प्रसूते' निर्वर्तयति पापं तद्गुरुत्वादेव सम्यगनालोचयन् 'मायाशल्यं च' भावशल्यं च करोतीति सूत्रार्थः ॥

मू. ( २११ ) *सुरं वा मेरगं वावि, अन्नं वा मज्जगं रसं।*
*ससक्खं न पिबे भिक्खू, जसं सारक्खमप्पणो ॥*

वृ. प्रतिषेधान्तरमाह-'सुरं व'त्ति सूत्रं-'सुरां वा' पिष्टादिनिष्पन्नां, 'मेरकं वापि' प्रसन्नाख्यां, सुराप्रायोग्यद्रव्यनिष्पन्नमन्यं वा 'माद्यं रसं' सीध्वादिरूपं 'ससाक्षिकं' सदापरित्याग-साक्षिकेवलिप्रतिषिद्धं न पिबेद्भिक्षुः, अनेनात्यन्तिक एव तत्प्रतिषेधः, सदासाक्षिभावात्। किमिति न पिबेदित्याह-यशः संरक्षन्नात्मनः, यशःशब्देन संयमोऽभिधीयते, अन्ये तु ग्लाना-पवादविषयमेतत्सूत्रं अल्पसागारिकविधानेन व्याचक्षत इति सूत्रार्थः ॥

मू. ( २१२ ) *पियए एगओ तेनो, न मे कोइ विआणइ।*
*तस्स पस्सइ दोसाइं, निअडिं च सुणेह मे ॥*

वृ. अत्रैव दोषमाह-'पियए'त्ति सूत्रं, पिबति 'एको' धर्मसहायविप्रमुक्तोऽल्पसागारिक-स्थितो वा 'स्तेनः' चौरोऽसौ भगवददत्तग्रहणात् अन्यापदेशयाचनाद्वा न मां कश्चिज्जानातीति भावयन्, तस्येत्थंभूतस्य पश्यत दोषानैहिकान् पारलौकिकांश्च 'निकृतिं च' मायारूपां शृणुत ममेति सूत्रार्थः ॥

मू. ( २१३ ) *वड्ढई सुंडिआ तस्स, मायामोसं च भिक्खुणो।*
*अयसो अ अनिव्वाणं, सययं च असाहुआ ॥*

वृ. 'वड्ढइ'त्ति सूत्रं, वर्धते 'शौण्डिका' तदत्यन्ताभिष्वङ्गरूपा तस्य माया मृषावादं चेत्येकवद्भावः प्रत्युपलब्ध्यापलापेन वर्धते तस्य भिक्षोः, इदं च भवपरम्पराहेतुः, अनुबन्ध-दोषात्, तथा अयशश्च स्वपक्षपरपक्षयोः, तथा अनिर्वाणं तदलाभे सततं चासाधुता लोके व्यव-हारतः चरणपरिणामबाधनेन परमार्थत इति सूत्रार्थः ॥

मू. ( २१४ ) *निच्चुव्विग्गो जहा तेनो, अत्तकम्मेहिं दुम्मई।*
*तारिसो मरणंतेवि, न आराहेइ संवरं ॥*

वृ. किंच-'निच्चुव्विग्गो'त्ति सूत्रं, स इत्थंभूतो 'नित्योद्विग्नः' सदाऽप्रशान्तो यथा 'स्तेनः' चौरः 'आत्मकर्मभिः' स्वदुश्चरितैः दुर्मतिः-दुष्टबुद्धिः 'तादृशः' क्लिष्टसत्त्वो 'मरणान्तेऽपि' चरमकालेऽपि नाराधयति 'संवरं' चारित्रं, सदैवाकुशलबुद्ध्या तद्बीजाभावादिति सूत्रार्थः ॥

मू. ( २१५ ) *आयरिए नाराहेइ, समणे आवि तारिसे।*
*गिहत्थावि न गरिहंति, जेन जाणंति तारिसं।*

वृ. तथा-'आयरिए'त्ति सूत्रं, आचार्यान्नाराधयति, अशुद्धभावत्वात्-श्रमणांश्चापि तादृशान्नाराधयत्यशुभभावत्वादेव, गृहस्था अप्येनं दुष्टशीलं 'गर्हन्ते' कुत्सन्ति, किमिति ?-येन जानन्ति 'तादृशं' दुष्टशीलमिति सूत्रार्थः ॥

मू. ( २१६ ) *एवं तु अगुणप्पेही, गुणाणं च विवज्जए।*
*तारिसो मरणंतेऽवि, न आराहेइ संवरं ॥*

वृ. 'एवं तु'त्ति सूत्रं, 'एवं तु' उक्तेन प्रकारेण 'अगुणप्रेक्षी' अगुणान्-प्रमादादीन् प्रेक्षते

तच्छीलश्च य इत्यर्थः, तथा 'गुणानां च' अप्रमादादीनां स्वगतानामनासेवनेन परगतानां च प्रद्वेषेण 'विवर्जकः' त्यागी 'तादृशः' क्लिष्टचित्तो मरणान्तेऽपि नाराधयति 'संवरं' चारित्रमिति।

*मू. (२१७) तवं कुव्वइ मेहावी, पणीअं वज्जए रसं।*
*मज्जप्पमायविरओ, तवस्सी अइउक्कसो ॥*

वृ. यतश्चैवमत एतद्दोषपरिहारेण 'तवं'ति सूत्रं, तपः करोति 'मेधावी' मर्यादावर्ती 'प्रणीतं' स्निग्धं वर्जयति 'रसं' घृतादिकं, न केवलमेतत्करोति, अपितु मद्यप्रमादविरतो, नास्ति क्लिष्ट-सत्त्वानामकृत्यमित्येवं प्रतिषेधः, 'तपस्वी' साधुः 'अत्युत्कर्षः' अहं तपस्वीत्युत्कर्षरहित इति सूत्रार्थः ॥

*मू. (२१८) तस्स पस्सह कल्लाणं, अनेगसाहुपूइअं।*
*विउलं अत्थसंजुत्तं, कित्तइस्सं सुणेह मे ॥*

वृ. 'तस्स'त्ति सूत्रं, 'तस्य' इत्थंभूतस्य पश्यत 'कल्याणं' गुणसंपद्रूपं संयमं, किंविशिष्ट-मित्याह- अनेकसाधुपूजितं, पूजितमिति-सेवितमाचरितं, 'विपुलं' विस्तीर्णं विपुलमोक्षावह-त्वात्, 'अर्थसंयुक्तं' तुच्छतादिपरिहारेण निरुपमसुखरूपमोक्षसाधनत्वात् कीर्तयिष्येऽहं शृणुत 'मे' ममेति सूत्रार्थः ॥

*मू. (२१९) एवं तु सगुणप्पेही, अगुणाणं च विवज्जए।*
*तारिसो मरणंतेऽवि, आराहेइ संवरं ॥*

वृ. 'एवं तु' उक्तेन प्रकारेण 'स' साधुः 'गुणप्रेक्षी' गुणान्अप्रमादादीन् प्रेक्षते तच्छीलश्च य इत्यर्थः, तथा 'अगुणानां च' प्रमादादीनां स्वगतानामनासेवनेन परगतानां चाननुमत्या 'विवर्जकः' त्यागी 'तादृशः' शुद्धवृत्तो 'मरणान्तेऽपि' चरमकालेऽप्याराधयति 'संवरं' चारित्रं, सदैव कुशलबुद्धया तद्बीजपोषणादिति सूत्रार्थः ॥

*मू. (२२०) आयरिए आराहेइ, समणे आवि तारिसे।*
*गिहत्थावि नं पूयंति, जेण जाणंति तारिसं ॥*

वृ. तथा 'आयरिए'त्ति सूत्रं, आचार्यानाराधयति, शुद्धभावत्वात्, श्रमणांश्चपि तादृश आराधयति, शुद्धभावत्वादेव, गृहस्था अपि शुद्धवृत्तमेनं पूजयन्ति, किमिति ?, येन जानन्ति 'तादृशं' शुद्धवृत्तमिति सूत्रार्थः ॥

*मू. (२२१) तवतेने वयतेने, रूवतेने अ जे नरे।*
*आयारभावतेने अ, कुव्वई देवकिव्बिसं ॥*

वृ. स्तेनाधीकार एवेदमाह- 'तव'त्ति सूत्रं, तपस्तेनो वाक्स्तेनो रूपस्तेनस्तु यो नरः कश्चित् आचारभावस्तेनश्च, पालयन्नपि क्रियां तथाभावदोषाद्देवकिल्विषं करोति- किल्बिषिकं कर्म निर्वर्त्तयतीत्यर्थः, तपस्तेनो नाम क्षपकरूपकल्पः कश्चित् केनचित् पृष्टस्त्वमसौ क्षपक इति, स पूजाद्यर्थमाह-अहम्, अथवा वक्ति-साधव एव क्षपकाः तूष्णीं वाऽऽस्ते, एवं वाक्स्तेनो धर्मकथकादितुल्यरूपः कश्चित्केनचित् पृष्ट इति, एवं रूपस्तेनो राजपुत्रादितुल्य-रूपः एवमाचारस्तेनो विशिष्टाचारवत्तुल्यरूप इति, भावस्तेनस्तु परोत्प्रेक्षितं कथञ्चित् किञ्चित् श्रुत्वा स्वयमनुत्प्रेक्षितमपि मयैतत्प्रपञ्चेन चर्चितमित्याहेति सूत्रार्थः ॥

मू. (२२२) लद्धूणवि देवत्तं, उववन्नो देवकिव्विसे।
तत्थावि से न याणाइ, किं मे किच्चा इमं फलं ?॥

वृ. अयं चेत्थंभूतः 'लद्धूण'त्ति सूत्रं, लब्ध्वापि देवत्वं तथाविधक्रियापालनवशेन उपपन्नो 'देवकिल्बिषे' देवकिल्बिषिका ये, तत्राप्यसौ न जानात्यविशुद्धावधिना, किं मम कृत्वा 'इदं फलं' किल्बिषिकदेवत्वमिति सूत्रार्थः॥

मू. (२२३) तत्तोवि से चइत्ताणं लब्भिही एलमूअयं।
नरगं तिरिक्खजोणिं वा, बोही जत्थ सुदुल्लहा॥

वृ. अत्रैव दोषान्तरमाह-'तत्तोवि'त्ति सूत्रं, 'ततोऽपि' देवलोकादसौ च्युत्वा लप्स्यते 'एलमूकताम्' अजाभाषानुकारित्वं मानुषत्वे, तथा नरकं तिर्यग्योनिं वा पारम्पर्येण लप्स्यते, 'बोधिर्यत्र सुदुर्लभः' सकलसंपन्निबन्धना यत्र जिनधर्मप्राप्तिर्दुरापा। इह च प्राप्नोत्येलमूकता-मिति वाच्ये असकृद्भावप्राप्तिख्यापनाय लप्स्यत इति भविष्यत्कालनिर्देश इति सूत्रार्थः॥

मू. (२२४) एअं च दोसं दट्ठूणं, नायपुत्तेण भासिअं।
अनुमायंपि मेहावी, मायामोसं विवज्जए॥

वृ. प्रकृतमुपसंहरति-'एअं च' त्ति सूत्रं, एनं च दोषम्- अनन्तरोदितं सत्यपि श्रामण्ये किल्बिषिकत्वादिरूपं दृष्ट्वा आलोच्य 'ज्ञातपुत्रेण' भगवता वर्द्धमानेन 'भाषितम्' उक्तम् 'अनुमात्रमपि' स्तोकमात्रमपि किमुत प्रभूतं ? 'मेधावी' मर्यादावर्ती 'मायामृषावादम्' अनन्तरोदितं 'वर्जयेत्' परित्यजेदिति सूत्रार्थः॥

अध्ययनं -५, उद्देशकः -२ समाप्तः

मू. (२२५) सिक्खिऊण भिक्खेसणसोहिं, संजयाण बुद्धाण सगासे।
तत्थ भिक्खु सुप्पणिहिइंदिए, तिव्वलज्जगुणवं विहरिज्जासि॥ त्तिबेमि

वृ. अध्ययनार्थमुपसंहरन्नाह-'सिक्खिऊण'त्ति सूत्रं, 'शिक्षित्वा' अधीत्य 'भिक्षैषणाशुद्धिम्' पिण्डमार्गणाशुद्धिमुद्गमादिरूपां, केभ्यः सकाशादित्याह- 'संयतेभ्यः' साधुभ्यो 'बुद्धेभ्यः' अवगततत्त्वेभ्यः गीतार्थेभ्यो न द्रव्यसाधुभ्यः सकाशात्, ततः किमित्याह-'तत्र' भिक्षैषणायां 'भिक्षुः' साधु 'सुप्रणिहितेन्द्रियः' श्रोत्रादिभिर्गाढं तदुपयुक्तः 'तीव्रलज्ज' उत्कृष्टसंयमः सन्, अनेन प्रकारेण गुणवान् विहरेत् सामाचारीपालनं कुर्याद् इति ब्रवीमीति पूर्ववदिति सूत्रार्थः॥ उक्तोऽनुगमः। साम्प्रतं नयाः ते च पूर्ववदेव। व्याख्यातं पिण्डैषणाध्ययनम्॥

अध्ययनं - ५ समाप्तम्।

**मुनिदीपरत्नसागरेण संशोधिता सम्पादित्ता दशवैकालिकसूत्रे पंचम अध्ययनस्य भद्रबाहुस्वामीविरचिता निर्युक्तिः एवं हरिभद्रसूरि विरचिता टीका परिसमाप्ता।**

## अध्ययनं-६ महाचारकथा

वृ. अधुना महाचारकथाख्यमारभ्यते, अस्य चायमभिसंबन्धः-इहानन्तराध्ययने साधोर्भिक्षा-विशोधिरुक्ता, इह तु गोचरप्रविष्टेन सता स्वाचारं पृष्टेन तद्विदाऽपि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्य इति, अपि त्वालये गुरवो वा कथयन्तीति वक्तव्यमित्येतदुच्यते, उक्तं

च-''गोअरग्गपविट्ठो उ, न निसीएज्ज चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नामनिष्पन्नो निक्षेपः, तत्र च महाचारकथेति नाम, एतच्च तत्त्वतः प्रागिनरूपितमेवेत्यतिदिशन्नाह-

नि. [२४६] जो पुव्विं उद्दिट्ठो आयारो सो अहीणमइरित्तो।
सच्चेव य होइ कहा आयारकहाए महईए॥

वृ. यः 'पूर्वं' क्षुल्लकाचारकथायां 'निर्दिष्ट' उक्तः 'आचारो' ज्ञानाचारादिः असावहीनातिरिक्तो वक्तव्यः, सैव च भवति 'कथा' आक्षेपण्यादिलक्षणा वक्तव्या, चशब्दात्तदेव क्षुल्लकप्रतिपक्षोक्तं महद्वक्तव्यम्, आचारकथायां महत्यां प्रस्तुतयामिति गाथार्थः॥ उक्तो नामनिष्पन्नो निक्षेप इत्यादिचर्चः पूर्ववत्तावद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्-

*मू. (२२६) नाणदंसणसंपन्नं, संजमे अ तवे रयं।*
*गणिमागमसंपन्नं, उज्जाणम्मि समोसढं॥*

वृ. 'ज्ञानदर्शनसंपन्नं' ज्ञानं-श्रुतज्ञानादि दर्शनं-क्षायोपशमिकादि ताभ्यां संपन्नं-युक्तं 'संयमे' पञ्चाश्रवविरमणादौ 'तपसि च' अनशनादौ 'रतम्' आसक्तं, गणोऽस्यास्तीति गणी तं गणिनम्-आचार्यम् 'आगमसंपन्नं' विशिष्टश्रुतधरं, बह्वागमत्वेन प्राधान्यख्यापनार्थमेतत्, 'उद्याने' कचित्साधुप्रायोग्ये 'समवसृतं' स्थितं धर्मदेशनार्थं वा प्रवृत्तमिति सूत्रार्थः॥

*मू. (२२७) रायाणो रायमच्चा य, माहणा अदुव खत्तिआ।*
*पुच्छंति निहुअप्पाणो, कहं भे आयारगोयरो?॥*

वृ. तत्किमित्याह-'रायाणो'त्ति सूत्रं, 'राजानो' नरपतयः 'राजामात्याश्च' मन्त्रिणः 'ब्राह्मणाः' प्रतीताः 'अदुव'त्ति तथा 'क्षत्रियाः' श्रेष्ठ्यादयः पृच्छन्ति 'निभृतात्मानः' असम्भ्रान्ता रचिताञ्जलयः कथं 'भे' भवताम् 'आचारगोचरः' क्रियाकलापः स्थित इति सूत्रार्थः॥

*मू. (२२८) तेसिं सो निहुओ दंतो, सव्वभूअसुहावहो।*
*सिक्खाए सुसमाउत्तो, आयक्खइ विअक्खणो॥*

वृ. 'तेसिं'ति सूत्रं, 'तेभ्यो' राजादिभ्यः 'असौ' गणी 'निभृतः' असंभ्रान्त उचितधर्मकायस्थित्या, दान्त इन्द्रियनोइन्द्रियाभ्यां, 'सर्वभूतसुखावहः' सर्वप्राणिहित इत्यर्थः, 'शिक्षया' ग्रहणासेवनरूपया 'सुसमायुक्तः' सुष्ठु-एकीभावेन युक्तः 'आख्याति' कथयति 'विचक्षणः' पण्डित इति सूत्रार्थः॥

*मू. (२२९) हंदि धम्मत्थकामाणं, निग्गंथाणं सुणेह मे।*
*आयारगोअरं भीमं, सयलं दुरहिट्ठिअं॥*

वृ. 'हंदि'त्ति सूत्रं, हन्दीत्युपप्रदर्शने, तमेनं 'धर्मार्थकामाना'मिति धर्मः-चारित्रधर्मादिस्तस्यार्थः-प्रयोजनं मोक्षस्तं कामयन्ति-इच्छन्तीति विशुद्धविहितानुष्ठानकरणेनेति धर्मार्थकामा मुमुक्षवस्तेषां 'निर्ग्रन्थानां' बाह्याभ्यन्तरग्रन्थरहितानां शृणुत मम समीपाद् 'आचारगोचरं' क्रियाकलापं 'भीमं' कर्मशत्र्वपेक्षया रौद्रं 'सकलं' संपूर्णं 'दुरधिष्ठं' क्षुद्रसत्त्वैर्दुराश्रयमिति सूत्रार्थः। धर्मार्थकामानामित्युक्तं, तदेतत्सूत्रस्पर्शनिर्युक्त्या निरूपयति-तत्र धर्म-निक्षेपो यथा प्रथमाध्ययने, नवरं लोकोत्तरमाह-

नि. [२४७] धम्मो बावीसविहो अगारधम्मोऽनगारधम्मो अ।

पढमो अ बारसविहो दसहा पुन बीयओ होइ ॥

वृ. धर्मो 'द्वाविंशतिविधः' सामान्येन द्वाविंशतिप्रकारः 'अगारधर्मो' गृहस्थधर्मः 'अनगारधर्मश्च' साधुधर्मः, 'प्रथमश्च' अगारधर्मो द्वादशविधः, दशधा पुनः 'द्वितीयः' अनगारधर्मोभवति इतिगाथासमासार्थः ॥ व्यासार्थं त्वाह-

नि. [२४८] पंच य अणुव्वयाइं गुणव्वयाइं च होंति तिन्नेव ।
सिक्खावयाइं चउरो गिहिधम्मो बारसविहो अ ॥

वृ. पञ्चचाणुव्रतानि - स्थूलप्राणातिपातनिवृत्यादीनि, गुणव्रतानि च भवन्ति त्रीण्येव-दिग्व्रतादीनि शिक्षापदानि चत्वारि-सामायिकादीनि, गृहिधर्मो द्वादशविधस्तु एष एवाणुव्रतादि। अणुव्रतादिस्वरूपं चावश्यके चर्चितत्वान्नोक्तमिति गाथार्थः ॥ साधुधर्ममाह-

नि. [२४९] खंती अ मद्दवऽज्जव मुत्ती तवसंजमे अ बोद्धव्वे ।
सच्चं सोचं आकिंचणं च बंभं च जइधम्मो ॥

वृ.क्षान्तिश्च मार्दवम्, आर्जवं मुक्तिः तपःसंयमौ च बोद्धव्यौ सत्यं शौचमाकिञ्चन्यं ब्रह्मचर्यं च यतिधर्म इति गाथाक्षरार्थः । भावार्थः पुनर्यथा प्रथमाध्ययने ॥

नि. [२५०] धम्मो एसुवइट्ठो अत्थस्स चउव्विहो उ निक्खेवो ।
ओहेण छव्विहऽथो चउसट्ठिविहो विभागेणं ॥

वृ. धर्म एष 'उपदिष्टो' व्याख्यातः, अधुना त्वर्थावसरः, तत्रेदमाह-अर्थस्य चतुर्विधस्तु निक्षेपो-नामादिभेदात्, तत्र 'ओघेन' सामान्यतः षड्विधोऽर्थ आगमनोआगम-व्यतिरिक्तो द्रव्यार्थः, चतुःषष्टिविधो 'विभागेन' विशेषेणेति गाथासमुदायार्थः ॥ अवयवार्थं त्वाह-

नि. [२५१] धन्नाणि रयण थवार दुपयचउप्पय तहेव कुविअं च ।
ओहेण छव्विहत्थो एसो धीरेहिं पन्नत्तो ॥

वृ.'धान्यानि' यवादीनि, रत्नं-सुवर्णं स्थावरं-भूमिगृहादि द्विपदं-गन्त्यादि चतुष्पदं-गवादि तथैव कुप्यं च-ताम्रकलशाद्यनेकविधम्। ओघेन षड्विधोऽथ 'एषः' अनन्तरो-दितः 'धीरैः' तीर्थकरगणधरैः 'प्रज्ञप्तः' प्ररूपित इति गाथार्थः ॥ एनमेव विभागतोऽभिधित्सुराह-

नि. [२५२] चउवीसा चउवीसा तिगदुगदसहा अणेगविह एव ।
सव्वेसिंपि इमेसिं विभागमहयं पवक्खामि ॥

वृ.चतुर्विंशतिः चतुर्विंशतीति चतुर्विंशतिविधो धान्यार्थो रत्नार्थश्च,'त्रिद्विदशधे'ति त्रिविधः स्थावरार्थः द्विविधो द्विपदार्थः दशविधश्चतुष्पदार्थ, 'अनेकविध एवे'त्यनेकविधः कुप्यार्थः सर्वेषामप्यमीषा चतुर्विंशत्यादिसंख्याभिहितानां धान्यादीनां 'विभागं' विशेषम् 'अथ' अनन्तरं संप्रवक्ष्यामीत्यर्थः ॥

नि. [२५३]धन्नाइं चउव्वीसं जव १ गोहुम २ सालि ३ वीहि ४ सट्ठीआ ५ ।
कोद्दव ६ अणुया ७ कंगू ८ रालग ९ तिल १० मुग्ग ११ मासा १२ य ॥

नि. [२५४] अयसि १३ हरिमन्थ १४ तिउडग १५ निप्फाव १६ सिलिंद १७ रायमासा अ ।
इक्खू १९ मसूर २० तुवरी २१ कुलत्थर २२ तहर २३ धन्नगकलाया २४ ॥

वृ.धान्यानि चतुर्विंशतिः, यवगोधूमशालिव्रीहिषष्टिकाः कोद्रवाणुकाः कङ्गुरालगति-

लमुद्गमाषाश्च अतसीहरिमन्थत्रिपुटकनिष्पावसिलिन्दराजमाषाश्च इक्षुमसूरतुवर्यः कुलत्था धान्यककलायाश्चेति, एतानि प्रायो लौकिकसिद्धान्येव, नवरं षष्टिकाः-शालिभेदाः कङ्गुः-उदकङ्गः तद्भेदो रालकः हरिमन्थाः-कृष्णचणकाः निष्पावा-वल्लाः राजमाषाः-चवलकाः शिलिन्दा-मकुष्ठाः धान्यकं कुस्तुम्भरी कलायका-वृत्तचणका इति गाथाद्वयार्थः ॥

उक्तो धान्यविभागः, अधुना रत्नविभागमाह-

नि. [२५५] रयणाणि चउव्वीसं सुवण्णतउतंबरययलोहाइं।
सीसगहरिण्णपासाणवइरमणिमोत्तिअपवालं ॥

नि. [२५६] संखो तिनिसागुरुचंदणाणि वत्थामिलाणि कट्ठाणि।
तह चम्मदंतवाला गंधा दव्वोसहाइं च ॥

वृ. रत्नानि चतुर्विंशतिः, सुवर्णत्रपुताम्ररजतलोहानि सीसकहिरण्यपाषाणवज्रमणिमौक्तिकप्रवालानि। शङ्खतिनिशागरुचन्दनानि वस्त्रामिलानि काष्ठानि तथा चर्मदन्तवाला गन्धा द्रव्यौपधानि च। एतान्यपि प्रायो लौकिकसिद्धान्येव नवरं रजतं-रूप्यम् हिरण्यं-रूपकादि पाषाणा-विजातीयरत्नानि मणयोजात्यानि। तिनिशो-वृक्षविशेषः अमिलानि-ऊर्णावस्त्राणि काष्ठानि-श्रीपर्ण्यादिफलकादीनि चर्माणि सिंहादीनां दन्ता गजादीनां वालाः चमर्यादीनां द्रव्यौषधानि-पिप्पल्यादीनीति गाथाद्वयार्थः ॥ उक्तो रत्नविभागः, स्थावरादिविभागमाह-

नि. [२५७] भूमी घरा य तरुगण तिविहं पुण थावरं मुणेअव्वं।
चक्कारबद्धमानुस दुविहं पुण होइ दुपयं तु ॥

वृ. भूमिर्गृहाणि तरुगणाश्च, चशब्दस्य व्यवहित उपन्यासः, त्रिविधं पुनरोघतः स्थावरं मन्तव्यं, पुनःशब्दो विशेषणार्थः, किं विशिनष्टि ?, स्वगतान्, भेदान्, तद्यथा-भूमिःक्षेत्रं, तच्च त्रिधा-सेतु केतु सेतु केतु च गृहाणि प्रासादाः, तेऽपि त्रिविधाः-खातोच्छ्रितोभयरूपाः, तरुगणा नालिकेर्यादिारामा इति, 'चक्कारबद्धमानुष'मिति चक्कारबद्धं-गन्त्यादि मानुषं-दासादि, एवं द्विपदं पुनर्भवति द्विविधमिति गाथार्थः ॥ उक्तं स्थावरादि, चतुष्पदमाह-

नि. [२५८] गावी महिसी उट्टा अयएलगआसआसतरगा अ।
घोडग गद्दह हत्थी चउप्पयं होइ दसहा उ ॥

वृ. गौर्महिषी उष्ट्री अजा एडका अश्वा अश्वतराश्च घोटका गर्दभा हस्तिनश्चतुष्पदं भवति दशधा तु, एते गवादयः प्रतीता एव, नवरमश्वा-वाल्हीकादिदेशोत्पन्ना जात्याः अश्वतरावेगसराः अजात्या घोटका इति गाथार्थः ॥ उक्तं चतुष्पदं कुप्यमाह-

नि. [२५९] नाणाविहोवगरणं णेगविहं कुप्पलक्खणं होइ।
एसो अत्थो भणिओ छव्विह चउसट्ठिभेओ उ ॥

वृ. 'नानाविधोपकरणं' ताम्रकलशकडिल्लादि जातितः अनेकविधं व्यक्तितः कुप्यलक्षणं भवति। 'एषः' अनन्तरोदितोऽर्थो 'भणित' उक्तः षड्विधः, चतुःषष्टिभेदस्तु ओघविभागाभ्यां प्रकृतोपयोगो द्रव्यार्थ इति गाथार्थः ॥ उक्तोऽर्थः, साम्प्रतं काममाह-

नि. [२६०] कामो चउवीसविहो संपत्तो खलु तहा असंपत्तो।
संपत्तो चउदसहा दसहा पुण होअसंपत्तो ॥

**वृ.** कामश्चतुर्विंशतिविधः ओघतः, संप्राप्तः खलु तथा असंप्राप्तो वक्ष्यमाणस्वरूपः संप्राप्तः 'चतुर्दशधा'- चतुर्दशप्रकारः, दशधा पुनरसंप्राप्त इति गाथासमासार्थः ॥ व्यासार्थं त्वाह, तत्राप्यल्पतरवक्तव्यत्वादसंप्राप्तमाह-

**नि. [२६१]** तत्थ असंपत्तो अत्थो १ चिंता २ तह सद्ध ३ संसरणमेव ४ ।
विक्कवय ५ लज्जनासो ६ पमाय ७ उम्माय ८ तब्भावो ९ ॥

**वृ.** तत्रासंप्राप्तोऽयं कामः, 'अर्थे'ति अर्थनमर्थः अदृष्टेऽपि विलयादौ, श्रुत्वा तदभिप्रायमात्रमित्यर्थः, तत्रैवाहो रूपादिगुणा इत्यभिनिवेशेन चिन्तनं चिन्ता, तथा श्रद्धातत्संगमाभिलाषः, संस्मरणमेव-संकल्पिकतद्रूपस्यालेख्यादिदर्शनं, वियोगतः पुनः पुनरतिविक्लवता-तच्छोकातिरेकेणाहारादिष्वपि निरपेक्षता, लज्जानाशो-गुर्वादिसमक्षमपि तद्गुणोत्कीर्तनं, प्रमादः-तदर्थमेव सर्वारम्भेष्वपि प्रवर्तनम्, उन्मादो-नष्टचित्ततया आलजालभाषणं, तद्भावनास्तम्भादीनामपि तद्बुद्ध्याऽऽलिङ्गनादिचेष्टेति गाथार्थः ॥

**नि. [२६२]** मरणं १० च होइ दसमो संपत्तंपिअ समासओ वोच्छं ।
दिट्ठीए संपाओ १ दिट्ठीसेवा य संभासो ३ ॥

**वृ.** मरणं च-शोकाद्यतिरेकेण क्रमेण भवति दशमः असंप्राप्तकामभेदः । संप्राप्तमपि च कामं समासतो वक्ष्य इति, तत्र दृष्टेः पुनः संपातः स्त्रीणां कुचाद्यवलोकनं दृष्टिसेवा चभावसारं तद्दृष्टेर्दृष्टिमेलनं, संभाषणम्-उचितकाले स्मरकथाभिर्जल्प इति गाथार्थः ॥

**नि. [२६३]** हसिअ ४ ललिअ ४ उवगूहिअ ५ दंत ६ नहनिवाय ७ चुंबनं ८ होइ ।
आलिंगण ९ मायाणं १० कर ११ सेवण १२ संग १३ किड्डा १४ अ ॥

**वृ.** हसितं-वक्रोक्तिगर्भं प्रतीतं ललितं-पाशकादिक्रीडा उपगूहितं-परिष्वक्तं दन्तनिपातो-दशनच्छेद्यविधिः नखनिपातो-नखरदनजातिः चुम्बनं चैवेति-चुम्बनविकल्पः आलिङ्गनम्-ईषत्स्पर्शनम् आदानं-कुचादिग्रहणं 'करसेवणं'ति प्राकृतशैल्या करणासेवने, तत्र करणं नाम-नागरकादिप्रारम्भयन्त्रम् आसेवनं-मैथुनक्रिया अनङ्गक्रीडा च-अस्यादावर्थक्रियेति गाथार्थः ॥ उक्तः कामः, साम्प्रतं धर्मादीनामेव सपत्नतासपत्नते अभिधित्सुराह-

**नि. [२६४]** धम्मो अत्थो कामो भिन्नो ते पिंडिया पडिसवत्ता ।
जिनवयणं उत्तिन्ना असवत्ता होंति नायव्वा ॥

**वृ.** धर्मोऽर्थः कामः त्रय एते पिण्डिता युगपत्संपातेन 'प्रतिसपत्नाः' परस्परविरोधिनः लोके कुप्रवचनेषु च, यथोक्तम्-

"अर्थस्य मूलं निकृतिः क्षमा च, कामस्य वित्तं च वपुर्वयश्च ।
धर्मस्य दानं च दया दमश्च, मोक्षस्य सर्वोपरमः क्रियाश्च ॥१॥ इत्यादि"

एते च परस्परविरोधिनोऽपि सन्तो जिनवचनमवतीर्णाः ततः कुशलाशययोगतो व्यवहारेण धर्मादितत्त्वस्वरूपतो वा निश्चयेन 'असपत्नाः' परस्पराविरोधिनो भवन्ति ज्ञातव्या इति गाथार्थः ॥ तत्र व्यवहारेणाविरोधमाह-

**नि. [२६५]** जिनवयणंमि परिणए अवत्थविहिआणुठाणओ धम्मो ।
सच्छासयप्पयोगा अत्थो वीसंभओ कामो ॥

वृ. जिनवचने यथावत्परिणते सति अवस्थोचितविहितानुष्ठानात्-स्वयोग्यतामपेक्ष्य दर्शनादिश्रावकप्रतिमाङ्गीकरणे निरतिचारपालनाद्‌भवति धर्मः, स्वच्छाशयप्रयोगाद्विशिष्टलोकतः पुण्यबलाच्चार्थः, विश्रम्भत उचितकलत्राङ्गीकरणतापेक्षो विश्रम्भेण काम इति गाथार्थः ॥

अधुना निश्चयेनाविरोधमाह-

नि. [२६६] धम्मसस फलं मोक्खो सासयमउलं सिवं अणाबाहं।
तमभिप्पेया साहू तम्हा धम्मत्थकाम त्ति ॥

वृ. धर्मस्य निरतिचारस्य फलं 'मोक्षो' निर्वाणं, किंविशिष्टमित्याह- 'शाश्वतं' नित्यम् 'अतुलम्' अनन्यतुलं 'शिवं' पवित्रम् 'अनाबाधं' बाधावर्जितमेतदेवार्थः 'तं' धर्मार्थं मोक्षमभिप्रेताः-कायन्तः साधवो यस्मात्तस्माद्धर्मार्थकामा इति गाथार्थः ॥ एतदेव दृढयन्नाह-

नि. [२६७] परलोगु मुत्तिमग्गो नत्थि हु मोक्खो त्ति बिंति अविहिन्नू।
सो अत्थि अवितहो जिनमयंमि पवरो न अन्नत्थ ॥

वृ. 'परलोको' जन्मान्तरलक्षणो 'मुक्तिमार्गो' ज्ञानदर्शनचारित्राणि नास्त्येव 'मोक्षः' सर्वकर्मक्षय लक्षणः 'इति' एवं ब्रुवते 'अविधिज्ञा' न्यायमार्गाप्रवेदिनः, अत्रोत्तरं-'स' परलोकादिः अस्त्येव 'अवितथः' सत्यो 'जिनमते' वीतरागवचने, प्रवरः पूर्वापराविरोधेन, नान्यत्रैकान्तनित्यादौ, हिंसादिविरोधादिति गाथार्थः ॥

*मू. (२३०) नन्नत्थ एरिसं वुत्तं, जं लोए परमदुच्चरं।*
*विउलट्ठाणभाइस्स, न भूअं न भविस्सइ ॥*

वृ. काचित्सूत्रस्पर्शनिर्युक्तिः, अधुना सूत्रान्तरावसरः, अस्य चायमभिसंबन्धः-इहानन्तरसूत्रे निर्ग्रन्थानामाचारगोचरकथनोपन्यासः कृतः, साम्प्रतमस्यैवार्थतो गुरुतामाह-'नन्नत्थ' त्ति सूत्रं न 'अन्यत्र' कपिलादिमते 'ईदृशम्' उक्तमाचारगोचरं वस्तु यत् 'लोके' प्राणिलोके 'परमदुश्चरम्' अत्यन्तादुतच्छीलक्ष यस्तस्य, न भूतं न भविष्यति अन्यत्र जिनमतादिति सूत्रार्थः ॥

*मू. (२३१) सखुड्डगविअत्ताणं, वाहिआणं च जे गुणा।*
*अखंडफुडिआ कायव्वा, तं सुणेह जहा तहा ॥*

वृ. एतदेव संभावयन्नाह- 'सखुड्ड' त्ति सूत्रं, सह क्षुल्लकैः-द्रव्यभावबालैर्ये वर्त्तन्ते ते व्यक्ता-द्रव्यभाववृद्धास्तेषां सुक्षुल्लकव्यक्तानां, सबालवृद्धानामित्यर्थः, व्याधिमतां चशब्दा-दव्याधिमतां च, सरुजानां नीरुजानां चेति भावः, ये 'गुणा' वक्ष्यमाणलक्षणास्तेऽखण्डास्फुटिताः कर्तव्याः, अखण्डा देशविराधनापरित्यागेन अस्फुटिताः सर्वविराधनापरित्यागेन, तत् शृणेत यथा कर्तव्यास्तथेति सूत्रार्थः ॥

*मू. (२३२) दस अट्ठ य ठाणाइं, जाइं बालोऽवरज्झइ।*
*तत्थ अन्नयरे ठाणे, निग्गंथत्ताउ भस्सइ ॥*

वृ. ते चारगुणपरिहारेणाखण्डास्फुटिता भवन्तीति अगुणास्तावदुच्यन्ते-'दस' त्ति सूत्रं, दशाष्टौ च 'स्थानानि' असंयमस्थानानि वक्ष्यमाणलक्षणानि 'यानि' आश्रित्य 'बालः' अज्ञः 'अपराध्यति' तत्सेवनयाऽपराधमाप्नोति, कथमपराध्यतीत्याह-तत्रान्यतरे स्थाने वर्तमानः प्रमादेन 'निर्ग्रन्थत्वात्' निर्ग्रन्थभावाद् 'भ्रश्यति' निश्चयनयेनापैति बाल इति सूत्रार्थः ॥

अमुमेवार्थं सूत्रस्पर्शनिर्युक्त्या स्पष्टयति -

नि. [२६७] अट्ठारस ठाणाइं आयारकहाए जाइं भणियाइं ।
तेसिं अन्नतरागं सेवंतु न होइ सो समणो ॥

वृ. अष्टादशस्थानान्याचारकथायां प्रस्तुतायां यानि भणितानि तीर्थकरैः तेषामन्यतरस्थानक सेवमानो न भवत्यसौ श्रमण आसेवक इति गाथार्थः ॥ कानि पुनस्तानि स्थानानीत्याह -

नि. [२६८] वयछक्कं कायछक्कं, अकप्पो गिहिभायणं ।
पलियंकनिसेज्जा य, सिणाणं सोहवज्जणं ॥

वृ. 'व्रतषट्कं' प्राणातिपातनिवृत्त्यादीनि रात्रिभोजनविरतिषष्ठानि षड् व्रतानि कायषट्कं-पृथिव्यादयः षड्जीवनिकायाः 'अकल्पः' शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः 'गृहिभाजनं' गृहस्थसंबन्धि कांस्यभाजनादि प्रतीतं 'पर्यङ्कः' शयनविशेषः प्रतीतः । 'निषद्या च' गृहे एकानेकरूपा 'स्नानं' देशसर्वभेदभिन्नं 'शोभावर्जनं' विभूषापरित्यागः, वर्जनमिति च प्रत्येक-भिसंबध्यते, शोभावर्जनं स्नानवर्जनमित्यादीति गाथार्थः ॥

मू. ( २३३ ) *तत्थिमं पढमं ठाणं, महावीरेण देसिअं ।*
*अहिंसा निउणा दिट्ठा, सव्वभूएसु संजमो ॥*

वृ. व्याख्याता सूत्रस्पर्शनिर्युक्तिः, अधुना सूत्रान्तरं [illegible], अस्य चायमभिसंबन्धः-गुणा अष्टादशसु स्थानेषु अखण्डास्फुटिताः कर्तव्याः, तत्र विधिमाह-'तत्थिमं'ति सूत्रं । 'तत्र' अष्टादशविधे स्थानगणे व्रतषट्के वा अनासेवनाद्वारेण 'इदं' वक्ष्यमाणलक्षणं प्रथमं स्थानं 'महावीरेण' भगवता अपश्चिमतीर्थकरेण 'देशितं' कथितं यदुताहिंसेति । इयं च सामान्यतः प्रभूतैर्देशितेत्यत आह-'निपुणा' आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा, न आगमद्वारेण देशिता अपितु 'दृष्टा' साक्षाद्धर्मसाधकत्वेनोपलब्धा, किमितीयमेव निपुणेत्यत आह-यतोऽस्यामेव महावीरदेशितायां 'सर्वभूतेषु' सर्वभूतविषयः संयमो, नान्यत्र, उद्दिश्यकृतादिभोगविधानादिति सूत्रार्थः ॥

मू. ( २३४ ) *जावंति लोए पाणा, तसा अदुव थावरा ।*
*ते जाणमजाणं वा, न हणे नोवि घायए ॥*

वृ. एतदेव स्पष्टयन्नाह-'जावंति' सूत्रं, यतो हि भागवत्याज्ञा यावन्तः केचन लोके प्राणिनस्त्रसा-द्वीन्द्रियादयः अथवा स्थावराः-पृथिव्यादयः तान् जानन् रागाद्यभिभूतो व्यापादनबुद्धया अजानन्वा प्रमादपारतन्त्र्येण न हन्यात् स्वयं नापि घातयेदन्यैः, 'एकग्रहणे तज्जातीयग्रहणाद्' घ्नतोऽप्यन्यान्न समनुजानीयाद्, अतो निपुणा दृष्टेति सूत्रार्थः ॥

मू. ( २३५ ) *सव्वे जीवावि इच्छंति, जीविउं न मरिज्जिउं ।*
*तम्हा पाणवहं घोरं, निग्गंथा वज्जयंति णं ॥*

वृ. अहिंसैव कथं साध्वीत्येतदेवाह-'सव्वे'त्ति सूत्रं, सर्वे जीवा अपि दुःखितादिभेदभिन्ना इच्छन्ति जीवितुं न मर्तुं प्राणवल्लभत्वात्, यस्मादेवं तस्मात्प्राणवधं 'घोरं' रौद्रं दुःखहेतुत्वाद् 'निर्ग्रन्थाः' साधवो वर्जयन्ति भावतः । णमिति वाक्यालङ्कार इति सूत्रार्थः ॥

मू. ( २३६ ) अप्पणट्ठा परट्ठा वा, कोहा वा जइ वा भया।
हिंसगं न मुसं बूआ, नोवि अन्नं वयावए ॥

वृ. उक्तः प्रथमस्थानविधिः, अधुना द्वितीयस्थानविधिमाह- 'अप्पणट्ठ' त्ति सूत्रं, 'आत्मर्थम्' आत्मनिर्मित्तमग्लान एव ग्लानोऽहं ममानेन कार्यमित्यादि 'परार्थं वा' परनिमित्तं वा एवमेव, तथा क्रोधाद्वा त्वं दास इत्यादि, 'एकग्रहणे तज्जातीयग्रहण' मिति मानाद्वा अबहुश्रुत एवाहं बहुश्रुत इत्यादि मायातो भिक्षाटनपरिजिहीर्षया पादपीडा ममेत्यादि लोभाच्छोभनतरान्नलाभे सति प्रान्तस्यैषणीयत्वेऽप्यनेषणीयमिदमित्यादि, यदिवा 'भयात्' किञ्चिद्वितथं कृत्वा प्रायश्चित्तभयान्न कृतमित्यादि, एवं हास्यादिष्वपि वाच्यम्, अत एवाह-'हिंसक' परपीडाकारि सर्वमेव न मृषा ब्रूयात् स्वयं नाप्यन्यं वादयेत्, 'एकग्रहणे तज्जातीयग्रहणात्' ब्रुवतोऽप्य-न्यान्न समनुजानीयादिति सूत्रार्थः ॥

मू. ( २३७ ) मुसावाओ उ लोगम्मि, सव्वसाहूहिं गरिहिओ।
अविस्सासो अ भूआणं, तम्हा मोसं विवज्जए ॥

वृ. किमित्येतदेवमित्याह- 'मुसाविउ' त्ति सूत्रं, मृषावादो हि लोके सर्वस्मिन्नेव सर्वसाधुभिः 'गर्हितो' निन्दितः, सर्वव्रतापकारित्वात् प्रतिज्ञातापालनात्, 'अविश्वासश्च' अविश्वसनीयश्च भूतानां मृषावादी भवति, यस्मादेवं तस्मान्मृषावादं विवर्जयेदिति सूत्रार्थः ॥

मू. ( २३८ ) चित्तमंतमचित्तं वा, अप्पं वा जइवा बहुं।
दंतसोहणमित्तंपि, उग्गहंसि अजाइया ॥

वृ. उक्तो द्वितीयस्थानविधिः, साम्प्रतं तृतीयस्थानविधिमाह- 'चित्तमंत' त्ति सूत्रं, 'चित्तवद्' द्विपदादि वा 'अचित्तवद्वा' हिरण्यादि, अल्पं वा मूल्यतः प्रमाणतश्च, यदिवा बहु मूल्यप्रमाणाभ्यामेव, किं बहुना ? -'दन्तशोधनमात्रमपि' तथाविधं तृणादि अवग्रहे यस्य तत्त-मयाचित्वा न गृह्णन्ति साधवः कदाचनेति सूत्रार्थः ॥

मू. ( २३९ ) तं अप्पणा न गिण्हंति नोऽवि गिण्हावए परं।
अन्नं वा गिण्हमाणंपि, नानुजाणंति संजया ॥

वृ. एतदेवाह- 'तं' त्ति सूत्रं, 'तत्' चित्तवदादि आत्मना न गृह्णन्ति विरतत्वात्, नापि ग्राहयन्ति परं विरतत्वादेव, तथाऽन्यं वा गृह्णन्तमपि स्वयमेव 'नानुजानन्ति' नानुमन्यन्ते संयता इति सूत्रार्थः ॥

मू. ( २४० ) अबंभचरिअं घोरं, पमायं दुरहिट्ठिअं।
नायरंति मुनी लोए, भेआययणवज्जिओ ॥

वृ. उक्तस्तृतीयस्थानविधिः, चतुर्थस्थानविधिमाह- 'अबंभ' त्ति सूत्रं, 'अब्रह्मचर्यं' प्रतीतं 'घोरं' रौद्रं रौद्रानुष्ठानहेतुत्वात्, 'प्रमादं' प्रमादवत् सर्वप्रमादमूलत्वात् 'दुराश्रयं' दुस्सेवं विदितजिनवचनेनानन्तसंसारहेतुत्वात्, यतश्चैवमतो 'नाचरन्ति' नासेवन्ते मुनयो 'लोके' मनुष्यलोके, किंविशिष्टा इत्याह- 'भेदायतनवर्जिनो' भेदः- चारित्रभेदस्तदायतनं-तत्स्थान-मिदमेवोक्तन्यायात्तद्वर्जिनः- चारित्रातिचारभीरव इति सूत्रार्थः ॥

मू. ( २४१ ) मूलमेयमहम्मस्स, महादोससमुस्सयं।

*तम्हा मेहुणसंसग्गं, निग्गंथा वज्जयंति णं ॥*

**वृ.** एतदेव निगमयति- 'मूलं'ति सूत्रं, 'मूलं' बीजमेतद् 'अधर्मस्य' पापस्येति पारलौकिकोऽपायः 'महादोषसमुच्छ्रयं' महतां दोषाणां-चौर्यप्रवृत्त्यादीनां समुच्छ्रयं-संघातवदित्यैहिकोऽपायः, यस्मादेवं तस्मात् 'मैथुनसंसर्गं' मैथुनसंबन्धं योषिदालापाद्यपि निर्ग्रन्था वर्जयन्ति, नमिति वाक्यालङ्कार इति सूत्रार्थः ॥

मू. ( २४२ ) *बिडमुब्भेइमं लोणं, तिल्लं सप्पिं च फाणिअं ।*
*न ते संनिहिमिच्छंति, नायपुत्तवओरया ॥*

**वृ.** प्रतिपादितश्चतुर्थस्थानविधिः, इदानीं पञ्चमस्थानविधिमाह-'बिड'त्ति सूत्रं, 'बिडं' गोमूत्रादिपक्वं 'उद्भेद्यं' सामुद्रादि यद्वा 'बिडं' प्रासुकम् 'उद्भेद्यम्' अप्रासुकमपि, एवं द्विप्रकारं लवणं, तथा तैलं सर्पिश्च फाणितम्, तत्र तैलं प्रतीतं, सर्पिर्घृतं, फाणितं द्रवगडः, एतल्लवणाद्येवंप्रकारमन्यच्च न ते साधवः 'संनिधिं कुर्वन्ति' पर्युषितं स्थापयन्ति, 'ज्ञातपुत्रवचोरताः' भगवद्वर्धमानवचसि निःसङ्गताप्रतिपादनपरे सक्ता इति सूत्रार्थः ॥

मू. ( २४३ ) *लोहस्सेस अनुप्फासे, मन्ने अन्नयरामवि ।*
*जे सिआ सन्निहिं कामे, गिही पव्वइए न से ॥*

**वृ.** संनिधिदोषमाह-'लोभस्स'त्ति सूत्रं, 'लोभस्य' चारित्रविघ्नकारिणश्चतुर्थकषायस्य 'एसोऽनुप्फासे'त्ति एषोऽनुस्पर्शः-एषोऽनुभावो यदेतत्संनिधिकरणमिति, यतश्चैवमतो 'मन्ये' मन्यन्ते, प्राकृतशैल्या एकवचनम्, एवमाहुस्तीर्थकरगणधराः 'अन्यतरामपि' स्तोकामपि 'यः स्यात्' यः कदाचित्संनिधिं 'कामयते' सेवते 'गृही' गृहस्थोऽसौ भावतः प्रव्रजितो नेति, दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः, संनिधीयते नरकादिष्वात्माऽनयेति संनिधिरिति शब्दार्थात् प्रव्रजितस्य च दुर्गतिगमनाभावादिति सूत्रार्थः ॥

मू. ( २४४ ) *जंपि वत्थं व पायं वा, कंबलं पायपुंछणं ।*
*तंपि संजमलज्जट्ठा, धारंति परिहरंति अ ॥*

**वृ.** आह-यद्येवं वस्त्रादिधारयतां साधूनां कथमसंनिधिरित्यत आह 'जंपि'त्ति सूत्रं, यदप्यागमोक्तं 'वस्त्रं वा' चोलपट्टकादि 'पात्रं वा' अलाबुकादि 'कम्बलं' वर्षाकल्पादि, 'पादपुंछनं' रजोहरणं, तदपि 'संयमलज्जार्थ'मिति संयमार्थं पात्रादि, तद्व्यतिरेकेण पुरुषमात्रेण गृहस्थभाजने सति संयमपालनाभावात्, लज्जार्थं वस्त्रं, तद्व्यतिरेकेणाङ्गनादौ विशिष्टश्रुतपरिणत्यादिरहितस्य निर्लज्जतोपपत्तेः, अथवा संयम एव लज्जा तदर्थं सर्वमेतद्वस्त्रादि धारयन्ति, पुष्टालम्बनविधानेन 'परिहरन्ति च परिभुञ्जते च' मूर्च्छारहिता इति सूत्रार्थः ॥

मू. ( २४५ ) *न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा ।*
*मुच्छा परिग्गहो वुत्तो, इअ वुत्तं महेसिणा ॥*

**वृ.** यतश्चैवमतः-'न सो'त्ति सूत्रं, नासौ निरभिष्वङ्गस्य वस्त्रधारणादिलक्षणः परिग्रह उक्तो, बन्धहेतुत्वाभावात्, केन ?, 'ज्ञातपुत्रेण' ज्ञात-उदारक्षत्रियः सिद्धार्थः तत्पुत्रेण वर्धमानेन 'त्रात्रा' स्वपरपरित्राणसमर्थेन, अपि तु 'मूर्च्छा' असत्स्वपि वस्त्रादिष्वभिष्वङ्गः परिग्रह उक्तो, बन्धहेतुत्वाद्, अर्थतस्तीर्थकरेण, ततोऽवधार्य 'इति' एवमुक्तो 'महर्षिणा' गणधरेण, सूत्रे

सेज्जंभव आहेति सूत्रार्थः ॥

*मू. ( २४६ ) सव्वत्थुवहिणा बुद्धा, संरक्खणपरिग्गहे।*
*अवि अप्पणोऽवि देहंमि, नायरंति ममाइयं ॥*

वृ. आह -वस्त्राद्यभावभाविन्यपि मूर्च्छा कथं वस्त्रादिभावे साधूनां न भविष्यति ?, उच्यते, सम्यग्बोधेन तद्बीजभूतावबोधोपघाताद्, आह च-'सव्वत्थ'त्ति सूत्रं, 'सर्वत्र' उचिते क्षेत्रे काले च 'उपधिना' आगमोक्तेन वस्त्रादिना सहापि 'बुद्धा' यथावद्विदितवस्तुतत्त्वाः साधवः 'संरक्षण-परिग्रहे' इति संरक्षणाय षण्णां जीवनिकायानां वस्त्रादिपरिग्रहे सत्यपि नाचरन्ति ममत्वमिति योगः, किं चानेन ?, ते हिं भगवन्तः 'अप्यात्मनोऽपि देहे' इत्यात्मनो धर्मकायेऽपि विशिष्ट-प्रतिबन्धसंगतिं न कुर्वन्ति 'ममत्वम्' आत्मीयाभिधानं, वस्तुतत्त्वावबोधात्, तिष्ठतु तावदन्यत्, ततश्च देहवदपरिग्रह एव तदिति सूत्रार्थः ॥

*मू. ( २४७ ) अहो निच्चं तवो कम्मं, सव्वबुद्धेहिँ वण्णिअं।*
*जाव लज्जासमा वित्ती, एगभत्तं च भोअणं ॥*

वृ. उक्तः पञ्चमस्थानविधिः, अधुना षष्ठमधिकृत्याह-'अहो'त्ति सूत्रं, 'अहो नित्यं तपःकर्मे'ति अहो-विस्मये नित्यं नामापायाभावेन तदन्यगुणवृद्धिसंभवादप्रतिपात्येव तपःकर्म-तपोऽनुष्ठानं 'सर्वबुद्धैः' सर्वतीर्थकरैः 'वर्णितं' देशितं, किंविशिष्टमित्याह-'याव-ल्लज्जासमा वृत्तिः' लज्जा-संयमस्तेन समा-सदृशी तुल्या संयमाविरोधिनीत्यर्थः वर्तनं वृत्तिः-देहपालना 'एकभक्तं च भोजनम्' एकं भक्तं द्रव्यतो भावतश्च यस्मिन् भोजने तत्तथा, द्रव्यत एकम्-एकसंख्यानुगतं, भावत एकं-कर्मबन्धाभावादद्वितीयं, तद्दिवस एव रागादिरहितस्य अन्यथा भावत एकत्वाभावादिति सूत्रार्थः ॥

*मू. ( २४८ ) संतिमे सुहुमा पाणा, तसा अदुव थावरा।*
*जाइं राओ अपासंतो, कहमेसणिअं चरे ? ॥*

वृ. रात्रिभोजने प्राणातिपातसंभवेन कर्मबन्धसद्वितीयतां दर्शयति-'संतिमे'त्ति सूत्रं, सन्त्येते-प्रत्यक्षोपलभ्यमानस्वरूपाः सूक्ष्माः 'प्राणिनो' जीवाः त्रसा-द्वीन्द्रियादयः अथवा स्थावराः-पृथिव्यादयः यान् प्राणिनो रात्रावपश्यन् चक्षुषा कथम् 'एषणीयं' सत्त्वानुपरोधेन चरिष्यति भोक्ष्यते च ?, असंभव एव रात्रावेषणीयचरणस्येति सूत्रार्थः ॥

*मू. ( २४९ ) उदउल्लं बीअसंसत्तं, पाणा निवडिया महिं।*
*दिआ ताइं विवज्जिजा, राओ तत्थ कहं चरे ? ॥*

वृ. एवं रात्रौ भोजने दोषमभिधायाधुना ग्रहणगतमाह-'उदउल्लं'ति सूत्रं, उदकार्द्रं पूर्व-वद्रेकग्रहणे तज्जातिग्रहणात्सस्निग्धादिपरिग्रहः, तथा 'बीजसंसक्तं' बीजैः संसक्तं-मिश्रम्, ओदनादीति गम्यते, अथवा बीजानि पृथग्भूतान्येव, संसक्तं चारनालाद्यपरेणेति, तथा 'प्राणिनः' संपातिमप्रभृतयो निपतिता 'मह्यां' पृथिव्यां संभवन्ति, ननु दिवाप्येतत्संभवत्येव ?, सत्यं, किंतु परलोकभीरुश्चक्षुषा पश्यन् दिवा तान्युदकार्द्रादीनि विवर्जयेत्, रात्रौ तु तत्र कथं चरति संयमानुपरोधेन ?, असंभव एव शुद्धचरणस्येति सूत्रार्थः ॥

*मू. ( २५० ) एअं च दोसं दट्ठूणं, नायपुत्तेण भासिअं।*

*सव्वाहारं न भुंजंति, निग्गंथा राइभोअणं ॥*

वृ. उपसंहरन्नाह-'एअं च'त्ति सूत्रं, 'एतं च' अनन्तरोदितं प्राणिहिंसारूपमन्यं चात्म-विराधनादिलक्षणं दोषं दृष्ट्वा मतिचक्षुषा 'ज्ञातपुत्रेण' भगवता 'भाषितम्' उक्तं 'सर्वाहारं' चतुर्विधमप्यशनादिलक्षणमाश्रित्य न भुञ्जते 'निर्ग्रन्थाः' साधवो रात्रिभोजनमिति सूत्रार्थः ॥

मू. (२५१) *पुढविकायं न हिंसंति, मनसा वयसा कायसा ।*
*तिविहेणं करणजोएणं, संजया सुसमाहिआ ॥*

वृ. उक्तं व्रतषट्कम्, अधुना कायषट्कमुच्यते, तत्र पृथिवीकायमधिकृत्याह-'पुढवि'त्ति सूत्रं, पृथ्वीकायं न हिंसन्त्यालेखनादिना प्रकारेण मनसा वाचा कायेन, उपलक्षणमेतदत एवाह-'त्रिविधेन करणयोगेन' मनःप्रभृतिभिः करणादिरूपेण, के न हिंसन्तीत्याह-'संयताः' साधवः 'सुसमाहिता' उद्युक्ता इति सूत्रार्थः ॥

मू. (२५२) *पुढविकायं विहिंसंतो, हिंसई उ तयस्सिए ।*
*तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥*

वृ. अत्रैव व्यापादयत्येव, 'तदाश्रितान्' पृथिवीश्रितान् 'त्रसांश्च विविधान् प्राणिनो' द्वीन्द्रियादीन् चशब्दात्स्थावरांश्चप्कायादीन् 'चाक्षुषांश्चाचाक्षुषांश्च' चक्षुरिन्द्रियग्राह्यानग्राह्यांश्चेति सूत्रार्थः ॥

मू. (२५३) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।*
*पुढविकायसमारंभं, जावजीवाइ वज्जए ॥*

वृ. यस्मादेवं 'तम्ह'त्ति सूत्रं, तस्मादेवं विज्ञाय दोषं तत्तदाश्रितजीवहिंसालक्षणं 'दुर्गति-वर्धनं' संसारवर्धनं पृथिवीकायसमारंभमालेखनादि 'यावज्जीवं' यावज्जीवमेव वर्जयेदिति ।

मू. (२५४) *आउकायं न हिंसंति, मनसा वयसा कायसा ॥*
*तिविहेण करणजोएण, संजया सुसमाहिआ ॥*

मू. (२५५) *आउकायं विहिंसंतो, हिंसई उ तयस्सिए ।*
*तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥*

मू. (२५६) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।*
*आउकायसमारंभं जावजीवाइ वज्जए ॥*

वृ. उक्तः सप्तमस्थानविधिः, अधुनाऽष्टमस्थानविधिमधिकृत्योच्यते-
'आउ-कायं'ति सूत्रं, सूत्रत्रयमप्कायाभिलापेन नेयं, ततश्चायमप्युक्त एव ॥

मू. (२५७) *जायतेअं न इच्छंति, पावगं जलइत्तए ।*
*तिक्खमन्नयरं सत्थं, सव्वओऽवि दुरासयं ॥*

वृ. साम्प्रतं नवमस्थानविधिमाह-'जायतेअं'ति सूत्रं, जाततेजा-अग्निः तं जाततेजसं नेच्छन्ति मनःप्रभृतिभिरपि 'पापकं' पाप एव पापकस्तं, प्रभूतसत्त्वापकारित्वेनाशुभमित्यर्थः, किं नेच्छन्तीत्याह-'सर्वशस्त्रम्, एकधारादिशस्त्रव्यवच्छेदेन सर्वतोधारशस्त्रकल्पमिति भावः, अत एव 'सर्वतोऽपि दुराश्रयं' सर्वतोधारत्वेनानाश्रयणीयमिति सूत्रार्थः ॥

मू. (२५८) *पाईणं पडिणं वावि, उड्ढं अणुदिसामवि ।*

*अहे दाहिणओ वावि, दहे उत्तरओवि अ ।*

वृ.एतदेव स्पष्टयन्नाह- 'पाईणं'ति सूत्रं, 'प्राच्यां प्रतीच्यां वापि' पूर्वायां पश्चिमायां चेत्यर्थः, ऊद्ध्वंमनुदिक्ष्वपि, 'सुपां सुपो भवन्ती'ति सप्तम्यर्थे षष्ठी, विदिक्ष्वपीत्यर्थः, अधो दक्षिणतश्चापि 'दहति' दाह्यं भस्मीकरोत्युत्तरतो ऽपि च, सर्वासु दिक्षु विदिक्षु च दहतीति सूत्रार्थः ॥

मू.( २५९ ) *भूआणमेसमाघाओ, हव्ववाहो न संसओ ।*
*तं पईवपयावट्ठा, संजया किंचि नारभे ॥*

वृ. यतश्चैवमतो 'भूआण'त्ति सूत्रं, 'भूतानां' स्थावरादीनामेष 'आघात' आघातहेतुत्वादाघातः 'हव्यवाहः' अग्निः 'नसंशय' इत्येवमेवैतद् आघात एवेति भावः, येनैवं तेन 'तं' हव्यवाहं 'प्रदीपप्रतापनार्थम्' आलोकशीतापनोदार्थं 'संयताः' साधवः 'किञ्चित्' संघट्टनादिनाऽपि नारभन्ते, संयतत्वापगमनप्रसङ्गादिति सूत्रार्थः ॥

मू.( २६० ) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।*
*तेउकायसमारंभं, जावजीवाइ वज्जए ॥*

वृ.यस्मादेवं 'तम्ह'त्ति सूत्रं, व्याख्या पूर्ववत् ॥

मू.( २६१ ) *अनिलस्स समारंभं, बुद्धा मन्नंति तारिसं ।*
*सावज्जबहुलं चेअं, नेअं ताईहि सेविअं ॥*

वृ. उक्तो नवमस्थानविधिः, साम्प्रतं दशमस्थानविधिमधिकृत्याह-'अनि-लस्स'त्ति, 'अनिलस्य' वायोः 'समारम्भं' तालवृन्तादिभिः करणं 'बुद्धाः' तीर्थकरा 'मन्यन्ते' जानन्ति 'तादृशं' जाततेजःसमारम्भसदृशं । 'सावद्यबहुलं' पापभूयिष्ठं चैतमितिकृत्वा सर्वकालमेव नैनं 'त्रातृभिः' सुसाधुभिः 'सेवितम्' आचरितं मन्यन्ते बुद्धा एवेति सूत्रार्थः ॥

मू.( २६२ ) *तालिअंटेण पत्तेण, साहाविहुअनेन वा ।*
*न ते वीइउमिच्छंति, वेआवेऊण वा परं ॥*

वृ.एतदेव स्पष्टयति-'तालियंटेण'त्ति सूत्रं, तालवृन्तेन पत्रेण शाखाविधूननेन वेत्यमीषां स्वरूपं यथा षड्जीवनिकायिकायां, न 'ते' साधवो वीजितुमिच्छन्त्यात्मानामात्मना, नापि वीजयन्ति परैरात्मानं तालवृन्तादिभिरेव, नापि वीजयन्तं परमनुमन्यन्त इति सूत्रार्थः ॥

मू.( २६३ ) *जंपि वत्थं व पायं वा, कंबलं पायपुंछणं ।*
*न ते वायमुईरंति, जयं परिहरंति अ ।*

वृ. उपकारणात्तद्विराधनेत्येतदपि परिहरन्नाह-'जंपि'त्ति सूत्रं, यदपि वस्त्रं वा पात्रं वा कम्बलं वा पादपुञ्छनम्, अमीषां पूर्वोक्तं धर्मोपकरणं तेनापि न ते वातमुदीरयन्ति अयतप्रत्युपेक्षणादिक्रियया, किंतु यतं परिहरन्ति, परिभोगपरिहारेण धारणापरिहारेण चेति सूत्रार्थः ॥

मू.( २६४ ) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।*
*वाउकायसमारंभं, जावजीवाइ वज्जए ॥*

वृ.यत एवं सुसाधुवर्जितोऽनिलसमारम्भः, 'तम्ह'त्ति सूत्रं, व्याख्या पूर्ववत् ॥
उक्तो दशमस्थानविधिः, इदानीमेकादशमाश्रित्य उच्यते इति

मू.( २६५ ) *वणस्सइं न हिंसंति, मणसा वयस कायसा ।*

*तिविहेण करणजोएणं, संजया सुसमाहिआ ॥*

मू. ( २६६ ) *वणस्सइं विहिंसंतो, हिंसई अ तयस्सिए ।*
*तसे अ विविहे पाणे चक्खुसे अ अचक्खुसे ॥*

मू. ( २६७ ) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।*
*वणस्सइसमारंभं, जावजीवाइ वज्जए ॥*

**वृ.** 'वणस्सइ' इत्यादि सूत्रत्रयं वनस्पतेरभिलापेन ज्ञेयं, ततश्चैकादशस्थानविधिरप्युक्त एव ॥

मू. ( २६८ ) *तसकायं न हिंसंति, मनसा वयस कायसा ।*
*तिविहेण करणजोएणं, संजया सुसमाहिआ ॥*

**वृ.** साम्प्रतं द्वादशस्थानविधिरुच्यते- 'तसकायं'त्ति सूत्रं, 'त्रसकायं' द्वीन्द्रियादिरूपं न हिंसन्त्यारम्भप्रवृत्त्या मनसा वाचा कायेन-तदहितचिन्तनादिना 'त्रिविधेन करणयोगेन' मनः-प्रभृतिभिः करणादिना प्रकारेण 'संयताः' साधवः 'सुसमाहिताः' उद्युक्ता इति सूत्रार्थः ॥

मू. ( २६९ ) *तसकायं विहिंसंतो, हिंसई उ तयस्सिए ।*
*तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥*

**वृ.** तत्रैव हिंसादोषमाह- 'तसकायं'ति सूत्रं, त्रसकायं विहिंसन् आरम्भप्रवृत्त्यादिना प्रकारेण हिनस्त्येव तुरवधारणार्थे व्यापादयत्येव 'तदाश्रितान्' त्रसान् विविधांश्च प्राणिनः तदन्यद्वीन्द्रियादीन्, चशब्दात्स्थावरांश्च पृथिव्यादीन्, 'चाक्षुषानचाक्षुषांश्च' चक्षुरिन्द्रियग्राह्यानग्राह्यांश्चेति सूत्रार्थः ॥

मू. ( २७० ) *तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।*
*तसकायसमारंभं, जावजीवाइ वज्जए ॥*

**वृ.** यस्मादेवं 'तम्ह'त्ति सूत्रं, तस्मादेतं विज्ञाय दोषं तदाश्रितजीवहिंसालक्षणं दुर्गतिवर्धनं संसारवर्धनं त्रयकायसमारम्भं तेन तेन विधिना 'यावज्जीवया' यावज्जीवमेव वर्जयेदिति।

मू. ( २७१ ) *जाइं चत्तारि भुज्जाइं, इसिणाऽऽहारमाइणि ।*
*ताइं तु विवज्जंतो, संजमं अनुपालए ॥*

**वृ.** उक्तो द्वादशस्थानविधिः, प्रतिपादितं कायषट्कम्, एतत्प्रतिपादनादुक्ता मूलगुणाः, अधुनैतद्वृत्तिभूतोत्तरगुणावसरः, ते चाकल्पादयः षडुत्तरगुणाः यथोक्तम्- 'अकप्पो गिहिभायण'मित्यादि, तत्राकल्पो द्विविधः-शिक्षकस्थापनाकल्पः अकल्पस्थापनाकल्पश्च, तत्र शिक्षकस्थापनाकल्पः अनधीतपिण्डनिर्युक्तादिनाऽऽनीतमाहारादि न कल्पत इति, उक्तं च-

"अनहीआ खलु जेणं पिंडेसणसेज्जवत्थपाएसा ।
तेनानियाणि जतिणो कप्पंति न पिंडमाईणि ॥१॥
उउबद्धंमि न अनला वासावासे उ दोऽवि नो सेहा ।
दिक्खिज्जंती पायं ठवणाकप्पो इमो होइ ॥२॥"

अकल्पस्थापनाकल्पमाह- 'जाइं'त्ति सूत्रं, यानि चत्वारि 'अभोज्यानि संयमापकारित्वेनाकल्पनीयानि 'ऋषीणां' साधूनाम् 'आहारादीनि' आहारशय्यावस्त्रपात्राणिअ तानि

तु विधना वर्जयन् 'संयमं' सप्तदशप्रकारमनुपालयेत्, तदत्यागे संयमाभावादिति सूत्रार्थः ॥

मू. (२७२) *पिंडं सिज्जं च वत्थं च, चउत्थं पायमेव य।*
*अकप्पिअं न इच्छिज्जा, पडिगाहिज्ज कप्पिअं ॥*

वृ. एतदेव स्पष्टयति- 'पिंड'न्ति सूत्रं, पिण्डं शय्यां च वस्त्रं च चतुर्थं पात्रमेव च, एतत्स्वरूपं प्रकटार्थम्, अकल्पिकं नेच्छेत्, प्रतिगृह्णीयात्, 'कल्पिकं' यथोचितमिति सूत्रार्थः ॥

मू. (२७३) *जे निआगं ममायंति, कीअमुद्देसिआहडं।*
*वहं ते समनुजाणंति, इअ उत्तं महेसिणा ॥*

वृ. अकल्पिके दोषमाह- 'जे'त्ति सूत्रं, ये केचन द्रव्यसाध्वादयो द्रव्यलिङ्गधारिणो 'नियागं'ति नित्यमामन्त्रितं पिण्डं 'ममायन्ती'ति परिगृह्णन्ति, तथा 'क्रीतमौद्देशिकाहृतम्' एतानि यथा क्षुल्लिकाचारकथायां 'वधं' त्रसस्थावरादिघातं 'ते' द्रव्यसाध्वादयः 'अनुजानन्ति' दातृ-प्रवृत्त्यनुमोदनेन इत्युक्तं च 'महर्षिणा' वर्धमानेनेति सूत्रार्थः ॥

मू. (२७४) *तम्हा असणपाणाइं, कीअमुद्देसिआहडं।*
*वज्जयंति ठिअप्पाणो, निग्गंथा धम्मजीविणो ॥*

वृ. यस्मादेवं 'तम्ह'त्तिअ सूत्रं, तस्मानदशनपानादि चतुर्विधमपि यथोदितं क्रीतमौद्देशिक-माहृतं वर्जयन्ति 'स्थितात्मानो' महासत्त्वा 'निर्ग्रन्थाः' साधवो 'धर्मजीविनः' संयमैकजीविन इति सूत्रार्थः ॥

मू. (२७५) *कंसेसु कंसपाएसु, कुंडमोएसु वा पुणो।*
*भुंजंतो असनपानाइं, आयारा परिभस्सइ ॥*

वृ. उक्तोऽकिल्पस्तदभिधानात्त्रयोदशस्थानविधिः, इदानीं चतुर्दशस्थानविधिमाह- 'कंसेसु'त्ति सूत्रं, 'कंसेषु' करोटकादिषु 'कंसपात्रेषु' तिलकादिषु 'कुण्डमोदेषु' हस्तिपादा-कारेषु मृन्मयादिषु भुञ्जानोऽशनपानादि तदन्यदोषरहितमपि 'आचारात्' श्रमणसंबन्धिनः 'परिभ्रश्यति' अपैतीति सूत्रार्थः ॥

मू. (२७६) *सीओदगसमारम्भे, मत्तधोअणछुणे।*
*जाइं छंनंति (छिप्पंति) भूआइं, दिट्ठो तत्थ असंजमो ॥*

वृ. कथमित्याह-'सीओदगं'ति सूत्रं, अनन्तरोद्दिष्टभाजनेषु श्रमणा भोक्ष्यन्ते मुक्तं वैभिरिति शीतोदकेन धावनं कुर्वन्ति, तदा 'शीतोदकसमारम्भे' सचेतनोदकेन भाजनधावनारम्भे तथा 'मात्रकधावनोज्झने' कुण्डमोदादिषु क्षालनजलत्यागे यानि 'क्षिप्यन्ते' हिंस्यन्ते 'भूतानि' अप्कायादीनि सोऽत्र-गृहिभाजनभोजने 'दृष्ट' उपलब्धः केवलज्ञानभास्वता असंयमः तस्य भोक्तुरिति सूत्रार्थः ॥

मू. (२७७) *पच्छाकम्मं पुरेकम्मं, सिआ तत्थ न कप्पइ।*
*एअमट्ठं न भुंजंति, निग्गंथा गिहिभायणे ॥*

वृ. किंच -'पच्छाकम्मं'ति सूत्रं, पश्चात्कर्म पुरः-कर्म स्यात्-तत्र कदाचिद्भवेद्गृहि-भाजनभोजने, पश्चात्पुरःकर्मभावस्तूक्तवदित्येके, अन्ये तु भुञ्जन्तु तावत्साधवो वयं पश्चाद्भोक्ष्याम इति पश्चात्कर्म व्यत्ययेन तु पुरःकर्म व्याचक्षते, एतच्च न कल्पते धर्मचारिणां, यतश्चैवमतः

'एतदर्थं' पश्चात्कर्मादिपरिहारार्थं न भुञ्जते निर्ग्रन्थाः, केत्याह-'गृहिभाजने' अनन्त-रोदित इति सूत्रार्थः ॥

मू. (२७८) *आसंदीपलिअंकेसु, मंचमासालएसु वा।*
*अणायरिअमज्जाणं, आसइतु सइतु वा ॥*

वृ. उक्तो गृहिभाजनदोषः, तदभिधानाच्चतुर्दशस्थानविधिः, साम्प्रतं पञ्चदशस्थान-विधिमाह-'आसंदि'त्ति सूत्रं, आसन्दीपर्यङ्कौ प्रतीतौ, तयोरासन्दीपर्यङ्कयोः प्रतीतयोः, मञ्चाशालकयोश्च, मञ्चः-प्रतीतः आशालकस्तु-अवष्टम्भसमन्वित आसनविशेषः एतयोः 'अनाचरितम्' अनासेवितम् 'आर्याणां' साधूनाम् 'आसितुम्' उपवेष्टुं 'स्वप्तुं वा' निद्रातिवाहनं वा कर्तुं, शुषिरदोषादिति सूत्रार्थः ॥

मू. (२७९) *नासंदीपलिअंकेसु, न निसिज्जा न पीढए।*
*निग्गंथाऽपडिलेहाए, बुद्धवुत्तमहिट्ठगा ॥*

वृ. अत्रैवापवादमाह-'नासंदि'त्ति सूत्रं, न 'आसन्दीपर्यङ्कयोः' प्रतीतयोः न निषद्यायाम्-एकादिकल्परूपायां न पीठके-वेत्रमयादौ 'निर्ग्रन्थाः' साधवः 'अप्रत्युपेक्ष्य' चक्षुरादिना, निषीदनादि न कुर्वन्तीति वाक्यशेषः, नञ् सर्वत्राभिसम्बध्यते, न कुर्वन्तीति। किंविशिष्टा निर्ग्रन्थाः ?, इत्याह-'बुद्धोक्ताधिष्ठातारः' तीर्थकरोक्तानुष्ठानपरा इत्यर्थः, इह चाप्रत्युपेक्षिता-सन्द्यादौ निषीदनादिनिषेधात् धर्मकथादौ राजकुलादिषु प्रत्युपेक्षितेषु निषीदनादिविधिमाह, विशेषणान्यथानुपपत्तेरिति सूत्रार्थः ॥

मू. (२८०) *गंभीरविजया एए, पाणा दुप्पडिलेहगा।*
*आसंदी पलिअंको अ, एअमट्ठं विवज्जिआ ॥*

वृ. तत्रैव दोषमाह-'गंभीर'त्ति सूत्रं, गम्भीरम्-अप्रकाशं विजय-आश्रयः अप्रकाशाश्रय 'एते' प्राणिनामासन्द्यादयः, एवं च प्राणिनो दुष्प्रत्युपेक्षणीया एतेषु भवन्ति, पीड्यन्ते चैतदुप-वेशनादिना, आसन्दः पर्यङ्कश्च चशब्दान्मञ्चादयश्च एतदर्थं विवर्जिताः साधुभिरिति सूत्रार्थः ॥

मू. (२८१) *गोअरग्गपविट्ठस्स, निसिज्जा जस्स कप्पइ।*
*इमेरिसमणायारं, आवज्जइ अबोहिअं ॥*

वृ. उक्तः पर्यङ्कस्थानविधिः, तदभिधानात्पञ्चदशस्थानम्, इदानीं षोडशस्थानमधिकृत्याह-'गोअरग्ग'त्ति सूत्रं, गोचराग्रप्रविष्टस्य भिक्षाप्रविष्टस्येत्यर्थः, निषद्या यस्य कल्पते, गृह एव निषीदनं समाचरति यः साधुरिति भावः, स खलु 'एवम्' ईदृशं वक्ष्यमाणलक्षणमनाचारम् 'आपद्यते' प्राप्नोति 'अबोधिकं' मिथ्यात्वफलमिति सूत्रार्थः ॥

मू. (२८२) *विवत्ती बंभचेरस्स, पाणाणं च वहे वहो।*
*वणीमगपडिग्घाओ, पडिकोहो अगारिणं ॥*

वृ. अनाचारमाह-'विवत्ति'त्ति सूत्रं, विपत्तिर्ब्रह्मचर्यस्य-आज्ञाखण्डनादोषतः साधुसमाचार-णस्य प्राणिनां च वधे वधो भवति, तथा सम्बन्धादाधाकर्मादिकरणेन, वनीपकप्रतीघातः, तदाक्षेपणाअदित्साभिधानादिना, प्रतिक्रोधश्चागारिणां तत्स्वजनानां च स्यात् तदाक्षेपदर्शनेनेति सूत्रार्थः ॥

मू. ( २८३ ) *अगुत्ती बंभचेरस्स, इत्थीओ आवि संकणं।*
*कुसीलवड्ढणं ठाणं, दूरओ परिवज्जए॥*

वृ. तथा 'अगुत्ति'त्ति सूत्रं, अगुप्तिर्ब्रह्मचर्यस्य तदिन्द्रियाद्यवलोकनेन, स्त्रीतश्चापि शङ्का भवति तदुत्फुल्ललोचनदर्शनादिना अनुभूतगुणायाः, कुशीलवर्धनं स्थानम्-उक्तेन प्रकारेणासंयमवृद्धिकारकं, दूरतः 'परिवर्जयेत्' परित्यजेदिति सूत्रार्थः ॥

मू. ( २८४ ) *तिण्हमन्नयरागस्स, निसिज्जा जस्स कप्पई।*
*जराए अभिभूअस्स, वाहिअस्स तवस्सिणो॥*

वृ. सूत्रेणैवापवादमाह 'तिण्ह'त्ति सूत्रं, 'त्रयाणां' वक्ष्यमाणलक्षणानाम् 'अन्यतरस्य' एकस्य निषद्या गोचरप्रविष्टस्य यस्य कल्पते औचित्येन, तस्य तदासेवने न दोष इति वाक्यशेषः, कस्य पुनः कल्पत इत्याह-'जरयाऽभिभूतस्य' अत्यन्तवृद्धस्य 'व्याधिमतः' अत्यन्तम-शक्तस्य 'तपस्विनो' विकृष्टक्षपकस्य। एते च भिक्षाटनं न कार्यन्त एव, आत्मलब्धिकाद्य-पेक्षया तु सूत्रविषयः, न चैतेषां प्राय उक्तदोषाः संभवन्ति, परिहरन्ति च वनीपकप्रतिघातादीति सूत्रार्थः ॥

मू. ( २८५ ) *वाहिओ वा अरोगी वा, सिणाणं जो उ पत्थए।*
*वुक्कंतो होइ आयारो, जढो हवइ संजमो॥*

वृ.-उक्तो निषद्यास्थानविधिः तदभिधानोत्षोडशस्थानं, साम्प्रतं सप्तदशस्थानमाह-'वाहिओ व'त्ति सूत्रं, 'व्याधिमान् वा' व्याधिग्रस्तः 'अरोगी वा' रोगविप्रमुक्तो वा 'स्नानम्' अङ्गप्रक्षालनं यस्तु 'प्रार्थयते' सेवत इत्यर्थः, तेनेत्थंभूतेन व्युत्क्रान्तो भवति 'आचारो' बाह्यतपोरूपः, अस्नान-परीषहानतिसहनात्, 'जढः' परित्यक्तो भवति 'संयमः' प्राणिरक्षणादिकः, अप्कायादि-विराधनादिति सूत्रार्थः ॥

मू. ( २८६ ) *संतिमे सुहुमा पाणा, घसासु भिलुगासु अ।*
*जे अ भिक्खू सिणायंतो, विअडेणुप्पलावए॥*

वृ.प्रासुकस्नानेन कथं संयमपरित्याग इत्याह-'संतिमे'त्ति सूत्रं, सन्ति 'एते' प्रत्यक्षोपल-भ्यमानस्वरूपाः 'सूक्ष्माः'श्लक्ष्णाः 'प्राणिनो' द्वीन्द्रियादयः 'घसासु' शुषिरभूमिषु 'भिलुगासु च' तथाविधभूमिराजीषु च, यांस्तु भिक्षुः स्नानजलोज्झनक्रियया 'विकृतेन' प्रासुकोदके-नोत्प्लावयति, तथा च तद्विराधनातः संयमपरित्याग इति सूत्रार्थः ॥

मू. ( २८७ ) *तम्हा ते न सिणायंति, सीएण उसिणेण वा।*
*जावज्जीवं वयं घोरं, असिणाणमहिट्ठगा।*

वृ. निगमयन्नाह-'तम्ह'त्ति सूत्रं, यस्मादेवमुक्तदोषप्रसंगस्तस्मात् 'ते' साधवो न स्नान्ति शीतेन चोष्णोनोदकेन, प्रासुकेनाप्रासुकेन चेत्यर्थः, किंविशिष्टास्त इत्याह-'यावज्जीवम्' आजन्म व्रतं 'घोरं' दुरनुचरमस्नानमाश्रित्य 'अधिष्ठातारः' अस्यैव कर्तार इति सूत्रार्थः ॥

मू. ( २८८ ) *सिणाणं अदुवा कक्कं, लुद्धं पउमगाणि अ।*
*गायस्सुव्वट्टणट्ठाए, नायरंति कयाइवि॥*

वृ.किंच 'सिणाणं'ति सूत्रं, 'स्नानं' पूर्वोक्तम्, अथवा 'कल्कं' चन्दनकल्कादि 'लोध्रं

गन्धद्रव्यं' 'पद्मकानि च' कुङ्कुमकेसराणि, चशब्दादध्यच्चैर्वविधं गात्रस्य 'उद्वर्त्तनार्थम्' उद्वर्त्तननिमित्तं नाचरन्ति कदाचिदपि, यावज्जीवमेव भावसाधव इति सूत्रार्थः ॥

*मू. ( २८९ ) नगिणस्स वावि मुंडस्स, दीहरोमनहंसिणो।*
*मेहुणा उवसंतस्स, किं विभूसाई कारिअं ? ॥*

वृ.उक्तोऽस्नानविधिः, तदभिधानात्सप्तदशस्थानं, साम्प्रतमष्टादशं शोभावर्जनास्थानमुच्यते- शोभायां नास्ति दोषः 'अलङ्कृतश्चापि चरेद्धर्म'मित्यादिवचनाद् (इति) पराभिप्रायमाशङ्क्याह- 'नगिणस्स'त्ति सूत्रं, 'नग्नस्य वापि' कुचेलवतोऽप्युपचारनग्नस्य' निरुपचरितस्य नग्नस्य वा जिनकल्पिकस्येति सामान्यमेव सूत्रं मुण्डस्य द्रव्यभावाभ्यां 'दीर्घरोमनखवतः' दीर्घरोमवतः कक्षादिषु दीर्घनखवतो हस्तादौ जिनकल्पिकस्य, इतरस्य तु प्रमाणयुक्ता एव नखा भवन्ति यथाऽन्यसाधूनां शरीरेषु तमस्यापि न लगन्ति ॥ मैथुनाद् 'उपशान्तस्य' उपरतस्य, किं 'विभूषया' रादया कार्यं ?, न किञ्चिदिति सूत्रार्थः ॥

*मू. ( २९० ) विभूसावत्तिअं भिक्खू, कम्मं बंधइ चिक्कणं।*
*संसारसायरे घोरे, जेणं पडइ दुरुत्तरे ॥*

वृ.इत्थं प्रयोजनाभावमभिधायापायमाह- 'विभूस'त्ति सूत्रं, 'विभूषाप्रत्ययं' विभूषानिमित्तं 'भिक्षुः' साधुः कर्म बन्धाति 'चिक्कणं' दारुणं, संसारसागरे 'घोरे' रौद्रे येन कर्मणा पतति 'दुरुत्तारे' अकुशलानुबन्धतोऽत्यन्तदीर्घ इति सूत्रार्थः ॥

*मू. ( २९१ ) विभूसावत्तिअं चेअं, बुद्धा मन्नंति तारिसं।*
*सावज्जबहुलं चेअं, नेयं ताईहिं सेविअं ॥*

वृ.एवं बाह्यविभूषापायमभिधाय संकल्पविभूषापायमाह- 'विभूस'त्ति सूत्रं, 'विभूषाप्रत्ययं' विभूषानिमित्तं चेत एवं चैवं च यदि मम विभूषा संपद्यत इति, तत्प्रवृत्त्यङ्ग चित्तमित्यर्थः, 'बुद्धाः' तीर्थकरा 'मन्यन्ते' जानन्ति 'तादृशं' रौद्रकर्मबन्धहेतुभूतं विभूषाक्रिया-सदृशं 'सावद्य-बहुलं चैतद्' आर्तध्यानानुगतं चेतः, नैतदित्थंभूतं 'त्रातृभिः' आत्मारामैः साधुभिः 'सेवितम्' आचरितं, कुशलचित्तत्वात्तेषामिति सूत्रार्थः ॥

*मू. ( २९२ ) खवंति अप्पाणममोहदंसिणो, तवे रया संजमअज्जवे गुणे।*
*धुणंति पावाइं पुरेकडाइं, नवाइं पावाइं न ते करंति ॥*

वृ. उक्तः शोभावर्जनस्थानविधिः, तदभिधानादष्टादशं पदं, तदभिधानाच्चोत्तरगुणाः, साम्प्रतमुक्तफलप्रदर्शनेनोपसंहरन्नाह- 'खवंति'त्ति सूत्रं, क्षपयन्त्यात्मानं तेन तेन चित्तयोगेनानु-पशान्तं शमयोजनेन जीवं, किंविशिष्टा इत्याह- 'अमोहदर्शिनः' अमोहं ये पश्यन्ति, यथावत्प-श्यन्तीत्यर्थः, त एव विशेष्यन्ते-तपसिअनशनादिलक्षणे रताः-सक्ताः, किंविशिष्टे तपसीत्याह- 'संयमार्जवगुणे' संयमार्जवे गुणौ यस्य तपसस्तस्मिन्, संयमऋजुभावप्रधाने, शुद्ध इत्यर्थः, त एवंभूता 'धुन्वन्ति' कम्पन्त्यपनयन्ति पापानि 'पुराकृतानि' जन्मान्तरोपात्तानि 'नवानि' प्रत्यग्राणि पापानि न 'ते' साधवः कुर्वन्ति, तथाऽप्रमत्तत्वादिति सूत्रार्थः ॥

*मू. ( २९३ ) सओवसंता अममा अकिंचणा, सविज्जविज्जानुगया जसंसिणो।*
*उउप्पसन्ने विमलेव चंदिमा, सिद्धिं विमाणाइं उवेंति ताइणो ॥ त्तिबेमि ॥*

वृ. किं च - 'सदोवसंत'त्ति सूत्रं, 'सदोपशान्ताः' सर्वकालमेव क्रोधारहिताः, सर्वत्राममा-ममत्वशून्याः 'अकिञ्चना' हिरण्यादिमिथ्यादिद्रव्यभावकिञ्चनविनिर्मुक्ताः, स्वाआत्मीया विद्या स्वविद्या-परलोकोपकारिणी केवलश्रुतरूपा तया स्वविद्या विद्ययानुगतायुक्ताः, न पुनः परविद्यया इहलोकोपकारिण्येति, त एव विशेषयन्ते-'यशस्विनः' शुद्धपारलौकिकयशोवन्तः, त एवंभूता ऋतौ 'प्रसन्ने' परिणते शरत्कालादौ विमल इव चन्द्रमाः चन्द्रमा इव विमलाः, इत्येवंकल्पास्ते भावमलरहिताः 'सिद्धिं' निर्वृत्तिं तथा सावशेषकर्माणो 'विमानानि' सौधर्मा-वतंसकादीनि 'उपयान्ति' सामीप्येन गच्छन्ति 'त्रातारः' स्वपरापेक्षया साधवः, इति ब्रवीमीति पूर्ववत्। उक्तोऽनुगमः, साम्प्रतं नयाः, ते च पूर्ववत् ॥

अध्ययनं ६ समाप्तम्

**मुनि दीपरत्नसागरेण संशोधितं सम्पादितं दशवैकालिक सूत्रे**
**षष्ठमअध्ययनं सनिर्युक्तिः सटीकं समाप्तम्**

## अध्ययनं - ७-वाक्यशुद्धिः

वृ. साम्प्रतं वाक्यशुद्ध्याख्यमध्ययनं प्रारभ्यते, अस्य चायमभिसंबन्धः-इहानन्तराध्ययने गोचरप्रविष्टेन सता स्वाचारं पृष्टेन तद्विदाऽपि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्य-(आचार) इति, अपि स्वालये गुरोः [illegible] तेनापि तेन गुरुणा वा वचनदोषगुणाभिज्ञेन निरवद्यवचसा कथयितव्य इत्येतदुच्यते, उक्तं च -

"सावज्जणवज्जाणं वयणाणं जो न याणइ विसेसं।
वोत्तुंपि तस्स न खमं किमंग पुण देसणं काउं ? ॥"

इत्यनेनाभिसंबन्धेनायातमिदमध्ययनम्, अस्य चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नाम-निष्पन्नो निक्षेपः, तत्र वाक्यशुद्धिरिति द्विपदं नाम, तत्र वाक्यनिक्षेपाभिधानायाह-

नि. [२७०] निक्खेवो अ(उ) चउक्को वक्के दव्वं तु भासदव्वाइं।
भावे भासासद्दो तस्स य एगट्ठिआ इणमो ॥

वृ. व्याख्या-निक्षेपस्तु 'चतुष्को' नामस्थापनाद्रव्यभावलक्षणो 'वाक्ये' वाक्यविषयः, तत्र नामस्थापने क्षुण्णे, 'द्रव्यं तु' द्रव्यवाक्यं पुनर्ज्ञशरीरभव्यशरीरव्यतिरिक्तं 'भाषाद्रव्याणि' भाषकेण गृहीतान्यनुच्चार्यमाणानि, 'भाव' इति भाववाक्यं 'भाषाशब्दः' भाषाद्रव्याणि शब्दत्वेन परिणतान्युच्चार्यमाणानीत्यर्थः।

तस्य तु वाक्यस्य एकार्थिकानि 'अमूनि' वक्ष्यमाणलक्षणानीति गाथार्थः ॥

नि. [२७१] वक्कं वयणं च गिरा सरस्सई भारही अ गो वाणी।
भासा पन्नवणी देसणी अ वयजोग जोगे अ ॥

वृ. व्याख्या-वाक्य वचनं च गीः सरस्वती भारती च गौर्वाक् भाषा प्रज्ञापनी देशनी च वाग्योगो योगश्च, एतानि निगदसिद्धान्येवेति गाथार्थः ॥ पूर्वोद्दिष्टं द्रव्यादिभाषामाह-

नि. [२७२] दव्वे तिविहा गहणे अ निसिरणे तह भवे पराधाए।
भावे दव्वे अ सुए चरित्तमाराहणी चेव ॥

वृ. 'द्रव्यं' इति द्वारपरामर्शः, द्रव्यभाषा त्रिविधा -ग्रहणे च निसर्गे तथा भवेत्पराघाते। तत्र ग्रहणं भाषाद्रव्याणां काययोगेन यत् सा ग्रहणद्रव्यभाषा, निसर्गस्तेषामेव भाषाद्रव्याणां वाग्योगेनोत्सर्गक्रिया, पराघातस्तु निसृष्टभाषाद्रव्यैस्तदन्येषां [illegible]प्रेरणम्, एषा त्रिप्रकाराऽपि क्रिया द्रव्ययोगस्य प्राधान्येन विवक्षितत्वात् द्रव्यभाषेति।

'भाव' इति द्वारपरामर्शः, भावभाषा त्रिविधैव, द्रव्ये च श्रुते चारित्र इति, द्रव्यभावभाषा श्रुतभावभाषा चारित्रभावभाषा च, तत्र द्रव्यं प्रतीत्योपयुक्तैर्या भाष्यते सा द्रव्यभावभाषा, एवं श्रुतादिष्वपि वाच्यम्, इयं त्रिप्रकारापि वक्त्रभिप्रायात्तद्द्रव्यभावप्राधान्यापेक्षया भावभाषा, इयं चौघत एवाराधनी चैवेति, द्रव्याद्याराधनात्, चशब्दाद्विराधना चोभयं चानुभयं च भवति, द्रव्याद्याराधनादिभ्य इति। आह- इह द्रव्यभाववाक्यस्वरूपमभिधातव्यं, तस्य प्रस्तुतत्वात्, तत्किमनया भाषयेति, उच्यते वाक्यपर्यायत्वाद्भाषाया न दोषः, तत्त्वतस्तस्यैवाभिधानादिति गाथासमुदायार्थः, अवयवार्थं तु वक्ष्यति। तत्र द्रव्यभावभाषामधिकृत्याराधन्यादिभेदयोजनामाह-

नि. [२७३] आराधनी उ दव्वे सच्चा मोसा विराधनी होइ।
सच्चामोसा मीसा असच्चमोसा य पडिसेहा॥

वृ. आराध्यते-परलोकापीडया यथावदभिधीयते वस्त्वनयेत्याराधनी तु 'द्रव्य' इति द्रव्यविषया भावभाषा सत्या, तुशब्दात् द्रव्यतो विराधन्यपि काचित्सत्या, परपीडासंरक्षणफलभावाराधनादिति, मृषाविराधनी भवति, तद्द्रव्यान्यथाभिधानेन तद्विराधनादिति भावः, सत्यामृषा मिश्रा, मिश्रेत्याराधनी विराधनी च, असत्यामृषा च 'प्रतिषेध' इति नाराधनी नापि विराधनी, तद्वाच्यद्रव्ये तथोभयाभावादिति, आसां च स्वरूपमुदाहरणैः स्पष्टीभविष्यतीति गाथार्थः॥

नि. [२७४] जनवयसम्मयठवणा नामे रूवे पडुच्च सच्चे अ।
ववहारभावजोगे दसमे ओवम्मसच्चे अ॥

वृ. सत्यं तावद्वाक्यं दशप्रकारं भवति, जनपदसत्यादिभेदात्, तत्र जनपदसत्यं नाम नानादेशभाषारूपमप्यविप्रतिपत्त्या यदेकार्थप्रत्यायनव्यवहारसमर्थमिति, यथोदकार्थे कोङ्कणकादिषु पयः पिच्चमुदकं नीरमित्याद्यदुष्टविवक्षाहेतुत्वान्नानाजनपदेष्विष्टार्थप्रतिपत्तिजनकत्वाद्व्यवहारप्रवृत्तेः सत्यमेतदिति, एवं शेषेष्वपि भावना कार्या। संमतसत्यं नाम-कुमुदकुवलयोत्पलतामरसानां समाने पङ्कसंभवे गोपादीनामपि संमतमरविन्दमेव पङ्कजमिति। स्थापनासत्यं नाम अक्षरमुद्राविन्यासादिषु यथा माषकोऽयं कार्षापणोऽयं शतमिदं सहस्रमिदमिति। नामसत्यं नाम कुलमवर्धयन्नपि कुलवर्द्धन इत्युच्यते धनमवर्धयन्नपि धनवर्द्धन इत्युच्यते अयक्षश्च यक्ष इति। रूपसत्यं नाम अतद्गुणस्य तथारूपधारणं रूपसत्यं, यथा प्रपञ्चयतेः प्रव्रजितरूपधारणमिति। प्रतीत्यसत्यं नाम यथा अनामिकाया दीर्घत्वं ह्रस्वत्वं चेति, तथाहि-अस्यानन्तपरिणामस्य द्रव्यस्य तत्तत्सहकारिकारणसंनिधानेन तत्तद्रूपमभिव्यज्यत इति सत्यता। व्यवहारसत्यं नाम दह्यते गिरिर्गलति भाजनमनुदरा कन्या अलोमा एडकेति गिरिगततृणादिदाहे व्यवहारः प्रवर्तते तथोदके च गलति सति तथा संभोगजबीजप्रभवोदराभावे च सति तथा लवनयोग्यलोमाभावे सति। भावसत्यं नाम शुक्ला बलाका, सत्यपि पञ्चवर्णसंभवे शुक्लवर्णोत्कटत्वाच्छुक्लेति। योगसत्यं नाम छत्रयोगाच्छत्री दण्डयोगाद्दण्डीत्येवमादि। दशममौपम्यसत्यं च, तत्रौपम्यसत्यं नाम

समुद्रवत्तडाग इति गाथार्थः ॥ उक्ता सत्या, अधुना मृषामाह-

नि. [२७५] कोहे माने माया लोभे पेज्जे तहेव दोसे अ।
हासभए अक्खाइय उवघाए निस्सिआ दसमा ॥

वृ. क्रोधे इति क्रोधनिसृता, यथा क्रोधाभिभूतः पिता पुत्रमाह-न त्वं मम पुत्रः, यद्वा क्रोधाभिभूतो वक्ति तदाशयविपत्तितः सर्वमेवासत्यमिति, एवं माननिसृता मानाध्मातः क्वचित्केनचिदल्पधनोऽपि पृष्ट आह-महाधनोऽहमिति, मायानिसृता मायाकारप्रभृतय आहुः-नष्टो गोलक इति, लोभनिसृता वणिक्प्रभृतीनामन्यथाक्रीतमेवेत्थमिदं क्रीतमित्यादि, प्रेमनिसृता अतिरक्तानां दासोऽहं तवेत्यादि, द्वेषनिसृता मत्सरिणां गुणवत्यपि निर्गुणोऽयमित्यादि, हास्यनिसृता कान्दर्पिकानां किंचित्कस्यचित्संबन्धि गृहीत्वा पृष्टानां न दृष्टमित्यादि, भयनिसृता तस्करादिगृहीतानां तथा तथा असमञ्जसाभिधानम्, आख्यायिकानिसृता तत्प्रतिबद्धोऽसत्प्रलापः, उपघातनिसृता अचौरे चौर इत्यभ्याख्यानवचनमिति गाथार्थः ॥ उक्ता मृषा।

नि. [२७६] उप्पन्नविगयमीसग जीवमजीवे अ जीवअज्जीवे।
तहऽनंतमीसगा खलु परित्त अद्धा अ अद्धद्धा ॥

वृ. 'उत्पन्नविगतमिश्रके'ति उत्पन्नविषया सत्यामृषा यथैकं नगरमधिकृत्यास्मिन्नद्य दश दारका उत्पन्ना इत्यभिदधतस्तन्न्यूनाधिकभावे, व्यवहारतोऽस्याः सत्यामृषात्वात्, श्वस्ते शतं दास्यामि इत्यभिधाय पञ्चाशत्स्वपि दत्तेषु लोके मृषात्वादर्शनात्, अनुत्पन्नेष्वेवादत्तेष्व(च)-मृषात्वसिद्धेः सर्वथा क्रियाभावेन सर्वथा व्यत्ययादित्येवं विगतादिष्वपि भावनीयमिति, तथाच विगतविषया सत्यामृषा यथैकं ग्राममधिकृत्यास्मिन्नद्य दश वृद्धा विगता इत्यभिदधतस्तन्न्यूनाधिकभावे, एवं मिश्रका सत्यामृषा उत्पन्नविगतोभयसत्यामृषा, यथैकं पत्तनमधिकृत्याद्यास्मिन्नद्य दश दारका जाता दश च वृद्धा विगता इत्यभिदधतस्तन्न्यूनाधिकभावे, जीवमिश्रा-जीवविषया सत्यामृषा यथा जीवन्मृतकृमिराशौ जीवराशिरिति, अजीवमिश्रा च-अजीवविषया सत्यामृषा यथा तस्मिन्नेव प्रभूतमृतकृमिराशावजीवराशिरिति, जीवाजीवमिश्रेति-जीवाजीवविषया सत्यामृषा यथा तस्मिन्नेव जीवन्मृतकृमिराशौ प्रमाणनियमेनैतावन्तो जीवन्त्येतावन्तश्च मृता इत्यभिदधतस्तन्न्यूनाधिकभावे। 'तथानन्तमिश्रा खल्वि'ति अनन्तविषया सत्यामृषा यथा मूलकन्दादौ परीतपत्रादिमत्यनन्तकायोऽयमित्यभिदधतः। अद्धामिश्रा-कालविषया सत्यामृषा यथा कश्चित् कस्मिंश्चित् प्रयोजने सहायांस्त्वरयन् परिणतप्राये वासर एव रजनी वर्तते इति ब्रवीति, अद्धद्धामिश्र च दिवसरजन्येकदेशः अद्धद्धोच्यते, तद्विषया सत्यामृषा यथा कस्मिंश्चित् प्रयोजने त्वरयन् प्रहरमात्र एव मध्याह्न इत्याह। एवं मिश्रशब्दः प्रत्येकमभिसंबध्यत इति गाथार्थः। उक्ता सत्यामृषा, साम्प्रतमसत्यामृषामाह-

नि. [२७७] आमंतणि आणवणी जायणि तह पुच्छणी अ पन्नवणी।
पच्चक्खाणी भासा भासा इच्छानुलोमा अ ॥

वृ. आमन्त्रणी यथा हे देवदत्त इत्यादि, एषा किलाप्रवर्तकत्वात्सत्यादिभाषात्रयलक्षण-वियोगतस्तथाविधदलोत्पत्तेरसत्यामृषेति, एवमाज्ञापनी यथेदं कुरु, इयमपि तस्य करणाकरण-भावतः परमार्थेनैकत्राप्यनियमात्तथाप्रतीतेः अदुष्टविवक्षाप्रसूतत्वादसत्यामृषेति, एवं स्वबुद्ध-

चाऽन्यत्रापि भावना कार्येति। याचनी यथा भिक्षां प्रयच्छेति तथा प्रच्छनी यथा कथमेतदिति, प्रज्ञापनी यथा हिंसाप्रवृत्तो दुःखितादिर्भवति, प्रत्याख्यानी भाषा यथाऽदित्सेति भाषा, इच्छानुलोमा च यथा केनचित्कश्चिदुक्तः साधुसकाशं गच्छाम इति, स आह-शोभनमिदमिति।

नि. [२७८] अनभिग्गहिआ भासा भासा अ अभिग्गहंमि बोद्धव्वा।
संसयकरणी भासा वायड अव्वायडा चेव ॥

वृ.-अनिभगृहीता भाषा अर्थमनभिगृह्य योच्यते डित्थादिवत्, भाषा चाभिग्रहे बोद्धव्या अर्थमभिगृह्य योच्यते घटादिवत्, तथा संशयकरणी च भाषा-अनेकार्थसाधारणा योच्यते सैन्धवमित्यादिवत्, व्याकृता-स्पष्टा प्रकटार्था देवदत्तस्यैष भ्रातेत्यादिवत्, अव्याकृता चैव अस्पष्टाऽप्रकटार्था बालकादीनां थपनिकेत्यादिवदिति गाथार्थः ॥ उक्ता असत्यामृषा -

नि. [२७९] सव्वावि अ सा दुविहा पज्जत्ता खलु तहा अपज्जत्ता।
पढमा दो पज्जत्ता उवरिल्ला दो अपज्जत्ता ॥

वृ.-सर्वाऽपि च 'सा' सत्यादिभेदभिन्ना भाषा द्विविधा-पर्याप्ता खलु तथाऽपर्याप्ता, पर्याप्ता या एकपक्षे निक्षिप्यते सत्या वा मृषा वेति तद्व्यवहारसाधनी, तद्विपरीता पुनरपर्याप्ता, अत एवाह-प्रथमे द्वे भाषे सत्यामृषे पर्याप्ते, तथास्वविषयव्यवहारसाधनात्, तथा उपरितने द्वे सत्यामृषाऽसत्यामृषाभाषे अपर्याप्ते, तथास्वविषयव्यवहारासाधनादिति गाथार्थः ॥ उक्ता द्रव्यभावभाषा, साम्प्रतं श्रुतभावभाषामाह-

नि. [२८०] सुअधम्मे पुन तिविहा सच्चा मोसा असच्चमोसा अ।
सम्मद्दिट्ठी उ सुओवउत्तु सो भासई सच्चं ॥

वृ.-'श्रुतधर्म' इति श्रुतधर्मविषया पुनस्त्रिविधा भवति भावभाषा, तद्यथा-सत्या मृषा असत्यामृषा चेति, तत्र 'सम्यग्दृष्टिस्तु' सम्यग्दृष्टिरेव 'श्रुतोपयुक्त' इत्यागमे यथावदुपयुक्तो यः स भाषते 'सत्यम्' आगमानुसारेण वक्तीति गाथार्थः ॥

नि. [२८१] सम्मद्दिट्ठी उ सुअंमि अनुवउत्तो अहेउगं चेव।
जं भासइ सा मोसा मिच्छादिट्ठीवि अ तहेव ॥

वृ.-'सम्मद्दिट्ठी' सम्यग्दृष्टिरेव सामान्येन 'श्रुते' आगमे अनुपयुक्तः प्रमादा-द्यत्किंचिद् 'अहेतुकं चैव' युक्तिविकलं चैव यद्भाषते तन्तुभ्यः पट एव भवतीत्येवमादि सा मृषा, विज्ञाना-दरेपि तत एव भावादिति। मिथ्यादृष्टिरपि 'तथैवे'त्युपयुक्तोऽनुपयुक्तो वा यद्भाषते सा मृषैव, घुणाक्षरन्यायातसंवादेऽपि सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवदिति।

नि. [२८२] हवइ उ असच्चमोसा सुअंमि उवरिल्लए तिनाणंमि।
जं उवउत्तो भासइ एत्तो वोच्छं चरित्तंमि ॥

वृ.-भवति तु असत्यामृषा 'श्रुते' आगम एव परावर्तनादि कुर्वतस्तस्यामन्त्रण्यादिभाषारूपत्वात्तथा 'उपरितने' अविधमनःपर्यायकेवललक्षणे 'त्रिज्ञान' इति ज्ञानत्रये यदुपयुक्तो भाषते सा असत्यामृषा, आमन्त्रण्यादिवत् तथाविधाध्यवसायप्रवृत्तेः, इत्युक्ता श्रुतभावभाषा। अत ऊर्ध्वं वक्ष्ये 'चारित्र' इति चारित्रविषयां भावभाषामिति गाथार्थः ॥

नि. [२८३] पढमबिइआ चरित्ते भासा दो चेव होंति नायव्वा।

सचरित्तस्स उ भासा सच्चा मोसा उ इअरस्स ॥

वृ. 'प्रथमाद्वितीये' सत्यामृषे 'चारित्र' इति चारित्रविषये भाषे द्वे एव भवतो ज्ञातव्ये, स्वरूपमाह- 'सचरित्रस्य' चारित्रपरिणामवतः, तुशब्दात्तद्वृद्धिनिबन्धनभूता च भाषा द्रव्यतस्तथाऽन्यथाभावेऽपि सत्या, सतां, हितत्वादिति। मृषा तु 'इतरस्य' अचारित्रस्य तद्वृद्धिनिबन्धनभूता चेति गाथार्थः ॥ उक्तं वाक्यमधुना शुद्धिमाह-

नि. [२८४] नामठवणासुद्धी दव्वसुद्धी अ भावसुद्धी अ।
एएसिं पत्तेअं परूवणा होइ कायव्वा ॥

वृ. नामशुद्धिः स्थापनाशुद्धिर्द्रव्यशुद्धिश्च भावशुद्धिश्च, 'एतेषां' नामशुद्ध्यादीनां प्रत्येकं प्ररूपणा भवति कर्तव्येति गाथार्थः ॥

तत्र नामस्थापने क्षुण्णत्वादनङ्गीकृत्य द्रव्य-शुद्धिमाह-

नि. [२८५] तिविहा उ दव्वसुद्धी तद्दव्वादेसओ पहाणे अ।
तद्दव्वगमाएसो अनन्नमीसा हवइ सुद्धी ॥

वृ. त्रिविधा तु द्रव्यशुद्धिर्भवति 'तदव्यत' इति तद्रव्यशुद्धिः 'आदेशत' इति आदेशद्रव्यशुद्धिः 'प्राधान्यतश्चे'ति प्राधान्यद्रव्यशुद्धिश्च। तत्र तद्रव्यशुद्धिः 'अनन्ये'त्यन्यद्रव्यशुद्धिः, यद्रव्यमन्येन द्रव्येण सहासंयुक्तं सच्छुद्धं भवति क्षीरं दधि वा असौ तद्रव्यशुद्धिः, आदेशे मिश्रा भवति शुद्धिरन्यानन्यविषया, एतदुक्तं भवति- आदेशतो द्रव्यशुद्धिर्द्विविधाअन्यत्वेनानन्यत्वेन च, अन्यत्वे यथा शुद्धवासा देवदत्तः, अनन्यत्वे शुद्धदन्त इति गाथार्थः ॥ प्राधान्यद्रव्यशुद्धिमाह-

नि. [२८६] वण्णरसगंधफासे समणुण्णा सा पहाणओ सुद्धी।
तत्थ उ सुक्किल महुरा उ संमया चेव उक्कोसा ॥

वृ. वर्णरसगन्धस्पर्शेषु या मनोज्ञता- सामान्येन कमनीयता अथवा मनोज्ञता- यथाभिप्रायमनुकूलता सा प्राधान्यतः शुद्धिरुच्यते, 'तत्र' चैवंभूतचिन्ताव्यतिकरे शुक्लमधुरौ वर्णरसौ तुशब्दात्सुरभिमृद् गन्धस्पर्शौ च संमतौ, यथाभिप्रायमपि प्रायो मनोज्ञौ, बहूनामित्थंप्रवृत्तिसिद्धेः, 'उत्कृष्टौ च' कमनीयौ च। चशब्दस्य व्यवहित उपन्यास इति गाथार्थः ॥ उक्ता द्रव्यशुद्धिः,

नि. [२८७] एमेव भावसुद्धी तब्भावएसओ पहाणे अ।
तब्भावगमाएसो अनन्नमीसा हवइ सुद्धी ॥

वृ. 'एवमेवे'ति यथा द्रव्यशुद्धिस्तथा भावशुद्धिरपि, त्रिविधेत्यर्थः, 'तद्भाव' इति तद्भावशुद्धिः 'आदेशत' इति आदेशभावशुद्धिः 'प्राधान्यतश्चे'ति प्राधान्यभावशुद्धिश्च, तत्र तद्भावशुद्धिः 'अनन्ये' त्यनन्यभावशुद्धिस्तद्भावशुद्धिः, यो भावोऽन्येन भावेन सहासंयुक्तः सन् शुद्धो भवति बुभुक्षितादेरन्नाद्यभिलाषवदसौ तद्भावशुद्धिः, आदेशे मिश्रा भवति शुद्धिस्तदन्यानन्यविषयेत्यर्थः, एतदुक्तं भवति- आदेशभावशुद्धिर्द्विविधा- अन्यत्वेऽनन्यत्वे च, अन्यत्वे यथा शुद्धभावस्य साधोर्गुरुः अनन्यत्वे शुद्धभाव इति गाथार्थः ॥ प्रधानभावशुद्धिमाह-

नि. [२८८] दंसणनाणचरित्ते तवोविसुद्धी पहाणमाएसो।
जम्हा उ विसुद्धमलो तेन विसुद्धो हवइ सुद्धो ॥

वृ. 'दर्शनज्ञानचारित्रेषु' दर्शनज्ञानचारित्रविषया तथा तपोविशुद्धिः 'प्राधान्यादेश' इति

-यद्दर्शनादीनामादिश्यमानानां प्रधानं सा प्रधानभावशुद्धिः, यथा दर्शनादिषु क्षायिकाणि ज्ञान-दर्शनचारित्राणि, तपःप्रधानभावशुद्धिः - आन्तरतपोऽनुष्ठानाराधनमिति। कथं पुनरियं प्रधान-भावशुद्धिरिति ?, उच्यते, एभिर्दर्शनादिभिः शुद्धैर्यस्माद्विशुद्धमलो भवति साधुः, कर्ममलरहित इत्यर्थः, तेन च मले न 'विशुद्धो' मुक्तो भवति सिद्ध इत्यतः प्रधानभावशुद्धिय-थोक्तान्येव दर्शनादीनीति गाथार्थः ॥ उक्ता शुद्धिः इह च भावशुद्धिः, सा च वाक्य-शुद्धेर्भवतीत्याह-

नि. [२८९] जं वक्कं वयमाणस्स संजमो सुज्झई न पुण हिंसा।
न य अत्तकलुसभावो तेन इहं वक्कसुद्धित्ति ॥

वृ. 'यद्' यस्माद्वाक्यं शुद्धं वदतः सतः संयमः शुध्यति, शुद्धो भवति निर्मल उपजायते, न पुनर्हिसा भवति कौशिकादेरिव, न चात्मनः कलुषभावः कालुष्यं-दुष्टाभिसंधिरूपं संजायते, तेन कारणेन 'इह' प्रवचने वाक्यशुद्धिर्भावशुद्धेर्निमित्तमित्यतोऽत्र प्रयतितव्यमिति गाथार्थः ॥

नि. [२९०] वयणविभत्तीकुसलस्स संजमंमी समुज्जुयमइस्स।
दुब्भासिएण हुज्जा हु विराधना तत्थ जइअव्वं ॥

वृ.अ'वचनविभक्ति कुशलस्य' वाच्येतरवचनप्रकाराभिज्ञस्य न केवलमित्थंभूतस्यापितु 'संयमे उ(समु)द्यतमतेः' अहिंसायां प्रवृत्तचित्तस्येत्यर्थः तस्याप्येवंभूतस्य कथंचिद्दुर्भाषितेन कृतेन भवेत् विराधना-परलोकपीडा अतः 'तत्र' दुर्भाषितवाक्यपरिज्ञाने 'यतितव्यं' प्रयत्नः कार्य इति गाथार्थः ॥

आह -यद्येवमलमनेनैव प्रयासेन, मौनं श्रेय इति, न, अज्ञस्य तत्रापि दोषाद्, आह च-

नि. [२९१] वयणविभत्तिअकुसलो वओगयं बहुविहं अयाणंतो।
जइवि न भासइ किंची न चेव वयगुत्तयं पत्तो ॥

वृ. 'वचनविभक्त्यकुशलो' वाच्येतरप्रकारानभिज्ञः 'वाग्गतं बहुविधम्' उत्सर्गादिभेद-भिन्नमजानानः यद्यपि न भाषते किञ्चित् मौनेनैवास्ते, न चैव वाग्गुप्ततां प्राप्तः, तथाप्यसौ अवाग्गुप्त एवेति गाथार्थः ॥ व्यतिरेकमाह-

नि. [२९२] वयणविभत्तीकुसलो वओगयं बहुविहं वियाणंतो।
दिवसंपि भासमाणो तहावि वयगुत्तयं पत्तो ॥

वृ. 'वचनविभक्तिकुशलो' वाच्येतरप्रकाराभिज्ञः 'वाग्गतम्' बहुविधमुत्सर्गादिभेदभिन्नं विजानन् दिवसमपि भाषमाणः सिद्धान्तविधिना तथापि वाग्गुप्ततां प्राप्तः, वाग्गुप्त एवासाविति गाथार्थः ॥ साम्प्रतं वचनविभक्तिकुशलस्यौघतो वचनविधिमाह-

नि. [२९३] पुव्वं बुद्धीइ पेहित्ता, पच्छा वयमुयाहरे।
अचक्खुओ व नेतारं, बुद्धिमन्नेउ अ ते गिरा ॥

वृ-व्याख्या-'पूर्वं' प्रथममेव वचनोच्चारणकाले 'बुद्ध्या प्रेक्ष्य' वाच्यं दृष्ट्वा पश्चाद्वाक्य-मुदाहरेत्, अर्थापत्त्या कस्यचिदपीडाकरमित्यर्थः, दृष्टान्तमाह-'अचुक्षुष्मानिव' अन्ध इव 'नेता-रम्' आकर्षकं 'बुद्धिमन्वेतु ते गीः' बुद्ध्यनुसारेण वाक्यप्रवर्तनामिनि श्लोकार्थः ॥

उक्तो नामनिष्पन्नो निक्षेपः, साम्प्रतं सूत्रालापकनिष्पन्नस्यावसर इत्यादिचर्चः

पूर्ववत्तावद्यावत्सूत्रा-नुगमेऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयं, तच्चेदम्-

*मू. ( २१४ ) चउण्हं खलु भासाणं, परिसंखया पन्नवं ।*
*दुण्हं तु विनयं सिक्खे, दो न भासिज्ज सव्वसो ॥*

**वृ.** चतसृणां खलु भाषाणां, खलुशब्दोऽवधारणे, चतसृणामेव, नातोऽन्या भाषा विद्यत इति, 'भाषाणां' सत्यादीनां 'परिसंख्याय' सर्वैः प्रकारैर्ज्ञात्वा, स्वरूपमिति वाक्यशेषः, 'प्रज्ञावान्' प्राज्ञो बुद्धिमान्, साधुः, किमित्याह-'द्वाभ्यां' सत्यासत्यामृषाभ्यो तुरवधारणेद्वाभ्यामेवाभ्यां 'विनयं' शुद्धप्रयोगं विनीयतेऽनेन कर्मेतिकृत्वा 'शिक्षेत' जानीयात्, 'द्वे' असत्यासत्यामृषे न भाषेत 'सर्वशः' सर्वैः प्रकारैरिति सूत्रार्थः ॥

*मू. ( २१५ ) जा अ सच्चा अवत्तव्वा सच्चामोसा अ जा मुसा ।*
*जा अ बुद्धेहिं नाइन्ना, न तं भासिज्ज पन्नवं ।*

**वृ.** विनयमेवाह-'जा अ सच्च'त्ति सूत्रं, या च सत्या पदार्थतत्त्वमङ्गीकृत्य 'अवक्तव्या' अनुच्चारणीया सावद्यत्वेन, अमुत्र स्थिता पल्लीत कौशिकभाषावत्, सत्यामृषा वा यथा दश दारका जाता इत्यादिलक्षणा, मृषा च संपूर्णैव, चशब्दस्य व्यवहितः संबन्धः, या च 'बुद्धैः' तीर्थकरगणधरैरनाचित असत्यामृषा आमन्त्रण्याज्ञापन्यादिलक्षणा अविधिपूर्वकं स्वरादिना प्रकारेण, 'नैनां भाषेत' नेत्थंभूतां वाचं समुदाहरेत् 'प्रज्ञावान्' बुद्धिमान् साधुरिति सूत्रार्थः ॥

*मू. ( २१६ ) असच्चामोसं सच्चं च, अनवज्जमकक्कसं ।*
*समुप्पेहमसंदिद्धं, गिरं भासिज्ज पन्नवं ॥*

**वृ.** यथाभूताऽवाच्या भाषा तथाभूतोक्ता, साम्प्रतं यथाभूता वाच्या तथाभूतामाह-'असच्च-मोसं'ति सूत्रम्, 'असत्यामृषाम्' उक्तलक्षणां 'सत्यां च' उक्तलक्षणामेव, इयं च सावद्यापि कर्कशापि भवत्यत आह-'असावद्याम्' अपापाम् 'अकर्कशाम्' अतिशयोक्त्या ह्यमत्सरपूर्वां 'संप्रेक्ष्य' स्वरपोपकारिणीति बुद्धयाऽऽलोच्य 'असंदिग्धां' स्पष्टमक्षेपेण प्रति-पत्तिहेतुं 'गिरं' वाचं 'भाषेत' ब्रूयात् 'प्रज्ञावान्' बुद्धिमान् साधुरिति सूत्रार्थः ॥

*मू. ( २१७ ) एअं च अट्ठमन्नं वा, जं तु नामेइ सासयं ।*
*स भासं सच्चमोसंपि, तंपि धीरो विवज्जए ॥*

**वृ.** साम्प्रतं सत्यासत्यमृषाप्रतिषेधार्थमाह-'एअं च'त्ति सूत्रम्, 'एतं चार्थम्' अनन्तरप्रति-पिद्धं सावद्यकर्कशविषयम् 'अन्यं वा' एवंजातीयं, प्राकृतशैल्या 'यस्तु नामयति शाश्वतं' य एव कश्चिदर्थो नामयति-अननुगुणं करोति शाश्वतं-मोक्षं तमाश्रित्य 'स' साधुः पूर्वोक्तभाषा-भापकत्वेनाधिकृतो भाषां 'सत्यामृषामपि' पूर्वोक्ताम्, अपिशब्दात्सत्यापि या तथाभूता तामपि 'धीरो' बुद्धिमान् 'विवर्जयेत्' न ब्रूयादिति भावः । आह-सत्यामृषाभाषया ओघत एव प्रतिषेधा-त्तथाविधसत्यायाश्च सावद्यत्वेन गतार्थं सूत्रमिति, उच्यते, मोक्षपीडाकरं सूक्ष्ममप्यर्थमङ्गीकृत्यान्तर भाषा भाषणमपि न कर्तव्यमित्यतिशयप्रदर्शनपरमेतददुष्टमेवेति सूत्रार्थः ॥

*मू. ( २१८ ) वितहंपि तहामुत्तिं, जं गिरं भासए नरो ।*
*तम्हा सो पुट्ठो पावेणं, किं पुणं जो मुसं वए ? ॥*

**वृ.** साम्प्रतं मृषाभाषासंरक्षणार्थमाह- 'वितहंपि'त्ति सूत्रं, 'वितथम्' अतथ्यं 'तथामूर्त्यपि'

कथंचित्तत्स्वरूपमपि वस्तु, अपिशब्दस्य व्यवहितः संबन्धः, एतदुक्तं भवतिपुरुषनेपथ्यस्थितस्त्रीनिताद्यप्यङ्गीकृत्य यान्गिरं भाषते नरः, इयं स्त्री आगच्छति गायति वेत्यादिरूपां, 'तस्माद्' भाषणादेवंभूतात्पूर्वमेवासौ वक्ता भाषणाभिसंधिकाले 'स्पृष्टः पापेन' बद्धः कर्मणा, किं पुनर्यो मृषा वक्ति भूतोपघातिनीं वाचं ?, स सुतरां बद्धयत इति सूत्रार्थः ॥

मू. (२९९) *तम्हा गच्छामो वक्खामो, अमुगं वा ने भविस्सइ ।*

*अहं वा नं करिस्सामि, एसो वा नं करिस्सइ ॥*

वृ. 'तम्ह'त्ति सूत्रं, यस्माद्वितथं तथामूर्त्यपि वस्त्वङ्गीकृत्य भाषमाणो बुद्धयेत तस्माद्गमिष्याम एव श्व इतोऽन्यत्र, वक्ष्याम एव श्वस्तत्दौषधनिमित्तमिति, अमुकं वा नः कार्यं वसत्यादि भविष्यत्येव, अहं चेदं लोचादि करिष्यामि नियमेन, एष वा साधुरस्माकं विश्रामणादि करिष्यत्येवेति सूत्रार्थः ॥

मू. (३००) *एवमाइ उ जा भासा, एसकालंमि संकिआ ।*

*संपयाइअमट्ठे वा, तंपि धीरो विवज्जए ॥*

वृ. 'एवमाइ'त्ति सूत्रम्, एवमाद्या तु या भाषा, आदिशब्दात् पुस्तकं ते दास्याम्येवेत्येवमादिपरिग्रहः, 'पुष्यत्काले' भविष्यत्कालविषया, बहुविघ्नत्वात् मुहूर्तादीनां 'शङ्किता' किमिदमित्थमेव भविष्यत्युतान्यथेत्यनिश्चितगोचरा, तथा साम्प्रतातीतार्थयोरपि या शङ्किता, साम्प्रतार्थे स्त्रीपुरुषाविनिश्चये एष पुरुष इति, अतीतार्थेऽप्येवमेव बलीवर्दतत्स्त्र्याद्यनिश्चये तदाऽत्र गौरस्माभिर्दृष्ट इति । याप्येवंभूता भाषा शङ्किता तामपि धीरो विवर्जयेत्, तत्तथाभावनिश्चयाभावेन व्यभिचारतो मृषात्वोपपत्तेः, विघ्नतोऽगमनादौ गृहस्थमध्ये लाघवादिप्रसङ्गात्, सर्वमेव सावसरं वक्तव्यमिति सूत्रार्थः ॥

मू. (३०१) *अईअंमि अ कालंमि, पच्चुप्पन्नमनागए ।*

*जमट्ठं तु न जाणिज्जा, एवमेअंति नो वए ।*

वृ. 'अईयंमि'त्ति सूत्रं, अतीते च काले तथा 'प्रत्युत्पन्ने' वर्तमानेऽनागते च यमर्थं तु न जानीयात् सम्यगेवमयमिति, तमङ्गीकृत्य एवमेतदिति न ब्रूयादिति सूत्रार्थः ।

मू. (३०२) *अईअंमि अ कालंमि, पच्चुप्पन्नमनागए ।*

*जत्थ संका भवे तं तु, एवमेअं ति नो वए ।*

वृ. तथा - 'अईयंम्मि'त्ति सूत्रं, अतीते च काले प्रत्युत्पन्नेऽनागते यत्रार्थे शङ्का भवेदिति तमप्यर्थमाश्रित्यैवमेतदिति न ब्रूयादिति सूत्रार्थः, अयमपि विशेषतः शङ्कितभाषणप्रतिषेधः ॥

मू. (३०३) *अईयंमि अ कालंमि, पच्चुप्पन्नमनागए ।*

*निस्संकिअं भवे जं तु, एवमेअं तु निद्दिसे ॥*

वृ. तथा- 'अईयंमि'त्ति सूत्रं, अतीते च काले प्रत्युत्पन्नेऽनागते निःशङ्कितं भवेत्, यदर्थजातं तुशब्दादनवद्यं, तदेवमेतदिति निर्दिशेत्, अन्ये पठन्ति- 'स्तोकस्तोक'मिति, तत्र परिमितया वाचा निर्दिशेदिति सूत्रार्थः ॥

मू. (३०४) *तहेव फरुसा भासा, गुरुभूओवघाइणी ।*

*सच्चावि सा न वत्तव्वा, जओ पावस्स आगमो ॥*

वृ. 'तहेव'त्ति सूत्रं, तथैव 'परुषा भाषा' निष्ठुरा भावस्नेहरहिता 'गुरुभूतोपघातिनी' महाभूतोपघातवती, यथा कश्चित्कस्यचित् कुलपुत्रत्वेन प्रतीतस्तदा तं दासमित्यभिदधतः, सर्वथा सत्यापि सा बाह्यार्थातथाभावमङ्गीकृत्य न वक्तव्या, 'यतो' यस्या भाषायाः सकाशात् 'पापस्यागमः' अकुशलबन्धो भवतीति सूत्रार्थः ॥

मू. ( ३०५ ) *तहेव काणं काणे त्ति, पंडगं पंडगे त्ति वा ।*
*वाहिअं वा वि रोगित्ति, तेणं चोरे त्ति नो वा ।*

वृ. 'तहेव'त्ति सूत्रं, तथैवेति पूर्ववत्, 'काणं'ति भिन्नाक्षं काण इति, तथा 'पण्डकं' नपुंसकं पण्डक इति वा, व्याधिमन्तं वापि रोगीति, स्तेनं चौर इति नो वदेत्, अप्रीतिलज्जानाशस्थिररोगबुद्धिविराधनादिदोषप्रसङ्गादिति गाथार्थः ॥

मू. ( ३०६ ) *एएणऽन्नेण अट्ठेणं, परो जेणुवहम्मइ ।*
*आयारभावदोसन्नू, न तं भासिज्ज पन्नवं ॥*

वृ. 'एएण'त्ति सूत्रं, एतेनान्येन वाऽर्थेनोक्तेन सता परो येनोपहन्यते, येन केनचित्प्रकारेण । आचारभावदोषज्ञो यतिर्न तं भाषेत प्रज्ञावांस्तमर्थमिति सूत्रार्थः ॥

मू. ( ३०७ ) *तहेव होले गोलित्ति, साणे वा वसुलित्ति अ ।*
*दमए दुहुए वावि, नेवं भासिज्ज पन्नवं ॥*

वृ. 'तहेव'त्ति सूत्रं, तथैवेति पूर्ववत्, होलो गोल इति श्वा वा वसुल इति वा द्रमको वा दुर्भगश्चापि नैवं भाषेत प्रज्ञावान् । इह होलादिशब्दास्तत्तद्देशप्रसिद्धितो नैष्ठुर्यादिवाचकाः अतस्तत्प्रतिषेध इति सूत्रार्थः ॥

मू. ( ३०८ ) *अज्जिए पज्जिए वावि, अम्मो माउसिअत्ति अ ।*
*पिउस्सिए भायणिज्जत्ति, धूए नत्तुनिअत्ति अ ॥*

वृ. एवं स्त्रीपुरुषयोः सामान्येन भाषणप्रतिषेधं कृत्वाऽधुना स्त्रियमधिकृत्याह-'अज्जिए'त्ति सूत्रं, आर्जिके प्रार्जिके वापि अम्बमातृष्वस इति च पितृष्वसः भागिनेयीति दुहितः नप्त्रीति च । एतान्यामन्त्रणवचनानि वर्तन्ते, तत्र मातुः पितुर्वा माताऽऽर्यिका, तस्या अपि याऽन्या माता सा प्रार्यिका, शेषाभिधानानि प्रकटार्थान्येवेति सूत्रार्थः ॥

मू. ( ३०९ ) *हले हलित्ति अन्नित्ति, भट्टे सामिणि गोमिणि ।*
*होले गोले वसुलित्ति, इत्थिअं नेवमालवे ॥*

वृ. किं च -'हले हले'त्ति सूत्रं, हले हले इत्येवमन्ने इत्येवं तथा भट्ट स्वामिनि गोमिनि । तथा होले गोले वसुले इति, एतान्यपि नानादेशापेक्षया आमन्त्रणवचनानि गौरव-कुत्सादिगर्भाणि वर्तन्ते, यतश्चैवमतः स्त्रियं नैवं हलादिशब्दैरालपेदिति, दोषाश्चैवमालपनं कुर्वतः सङ्गगर्हातत्प्रद्वेषप्रवचनलाघवादय इति सूत्रार्थः ॥

मू. ( ३१० ) *नामधिज्जेण नं बूआ, इत्थीगुत्तेण वा पुणो ।*
*जहारिहमभिगिज्झ, आलविज्ज लविज्ज वा ॥*

वृ. यदि नैवमालपेत् कथं तर्ह्यालपेदित्याह- 'नामाधिज्जेणं'ति सूत्रं, 'नामधेयेने'ति नाम्नैव एनां ब्रूयात्स्त्रियं क्वचित्कारणे यथा देवदत्ते ! इत्येवमादि ! नामास्मरणादौ गोत्रेण वा पुनर्ब्रूयात्

स्त्रियं यथा काश्यपगोत्रे ! इत्येवमादि, 'यथार्हं' यथायथं वयोदेशैश्वर्याद्यपेक्षया 'अभिगृह्य' गुणदोषानालोच्य 'आलपेत्प्रलपेद्वा' ईषत्सकृद्वा लपनमालपनमतोऽन्यथा लपनं, तत्र वयोवृद्धा मध्यदेशे ईश्वरा धर्मप्रियाऽन्यत्रोच्यते धर्मशीले इत्यादिना, अन्यथा च यथा न लोकोपघात इति।

मू. ( ३११ ) *अज्जए पज्जए वावि, बप्पो चुल्लपिउत्ति अ।*
*माउलो भाइणिज्ज त्ति, पुत्ते नत्तुनिअत्ति अ॥*

वृ. उक्तः स्त्रियमधिकृत्यालपनप्रतिषेधो विधिश्च, साम्प्रतं पुरुषमाश्रित्याह 'अज्जए'त्ति सूत्रं, आर्यकः प्रार्यकश्चापि बप्पश्चुल्लपितेति च, तथा मातुल भागिनेयेति पुत्र नप्त इति च, इह भावार्थः स्त्रियामिव द्रष्टव्यः, नवरं चुल्लबप्पः पितृव्योऽभिधीयते इति सूत्रार्थः ॥

मू. ( ३१२ ) *हे भो हलित्ति अन्नित्ति, भट्टे सामिअ गोमिअ।*
*होल गोल वसुलि त्ति, पुरिसं नेवामालवे॥*

वृ. किंच-'हे भो'त्ति सूत्रं, हे भो हलेति। अन्नेत्ति भर्तः। स्वामिन् गोमिन् होल गोल वसुल इति पुरुषं नैवमालपेदिति, अत्रापि भावार्थः पूर्ववदेवेति सूत्रार्थः ॥

मू. ( ३१३ ) *नामधिज्जेण नं बूआ, पुरिसगुत्तेण वा पुणो।*
*जहारिहमभिगिज्झ, आलविज्ज लविज्ज वा॥*

वृ. यदि नैवमालपेत्, कथं तर्ह्यालपेदित्याह-'नामधिज्जेण'त्ति सूत्रं, व्याख्या पूर्ववदेव, नवरं पुरुषाभिलापेन योजना कार्येति ॥

मू. ( ३१४ ) *पंचिंदिआण पाणाणं, एस इत्थी अयं पुमं।*
*जाव णं न विजाणिज्जा, ताव जाइत्ति आलवे।*

वृ. उक्तः पुरुषमप्याश्रित्यालपनप्रतिषेधो विधिश्च, अधुना पञ्चेन्द्रियतिर्यग्गतं वाग्विधिमाह- 'पंचिंदिआण'त्ति सूत्रं, 'पञ्चेन्द्रियाणां' गवादीनां प्राणिनां 'कंचिद्' विप्रकृष्टदेशावस्थितानामेषा स्त्री गौरयं पुमान् बलीवर्दः, यावदेतद्विशेषेण न विजानीयात् तावन्मार्गप्रश्नादौ प्रयोजने उत्पन्ने सति 'जाति'मिति जातिमाश्रित्यालपेत्, अस्माद्गोरूपजातात्कियद्दूरेणेत्येवमादि, अन्यथाअलिङ्गव्यत्ययसंभवान्मृषावादापत्तिः, गोपालादीनामपि विपरिणाम इत्येवमादयो दोषाः आक्षेपपरिहारौ तु वृद्धविवरणादवसेयौ, तच्चेदम्-जइ लिंगवच्चए दोसो ता कीस पुढवादि नपुंसगत्तेवि पुरिसित्थिनिद्देसो पयट्टइ, जहा पत्थरो मट्टिआ करओ उस्सा मुम्मरो जाला वाओवाउली अंबओ अंबिलिआ किमिओ जलूया मक्कोडाओ कीडिआ भमरओ मच्छिया इच्चेवमादि ?, आयरिओ आह-जनवयसच्चेण ववहारसच्चेण य एवं पयट्टइत्ति न एत्थ दोसो, पंचिंदिएसु पुन न एयमंगीकीरइ, गोवालादीणवि न सुदिट्ठधम्मत्ति विपरिणा-मसंभवाओ, पुच्छिअसामायारिकहणे वा गुणसंभवादिति इति सूत्रार्थः ॥

मू. ( ३१५ ) *तहेव मानुसं पसुं, पक्खिं वावि सरीसवं।*
*थूले पमेइले वज्झे, पायमित्ति अ नो वए॥*

वृ. किंच-'तहेव'त्ति सूत्रं, 'तथैव' यथोक्तं प्राक् 'मनुष्यम्' आर्यादिकं 'पशुम्' अजादिकं 'पक्षिणं वापि' हंसादिकं 'सरीसृपम्' अजगरादिकं 'स्थूलः' अत्यन्तमांसलोऽयं मनुष्यादिः तथा 'प्रमेदुरः' प्रकर्षेण मेदःसंपन्न तथा 'वध्यो' व्यापादनीयः पाक्य इति च नो वदेत्, 'पाक्यः'

पाकप्रायोग्यः, कालप्राप्त इत्यन्ये, 'नो वदेत्' न ब्रूयात् तदप्रीतितदव्यापत्त्याशङ्कादिदोष-प्रसङ्गादिति सूत्रार्थः ॥

मू. (३१६) *परिवूढत्ति नं बूआ, बूआ उवचिअत्ति अ।*
*संजाए पीणिए वावि, महाकायत्ति आलवे ॥*

वृ. कारणे पुनरुत्पन्न एवं वदेदित्याह-'परिवूढ'त्ति सूत्रं, परिवृद्ध इत्येनंस्थूलं मनुष्यादि ब्रूयात्, तथा ब्रूयादुपचित इति च, संजातः प्रीणितश्चापि महाकाय इति चालपेत् परिवृद्धं, पलोपचितं परिहरेदित्यादाविति सूत्रार्थः ॥

मू. (३१७) *तहेव गाओ दुज्झाओ, दम्मा गोरहगत्ति अ।*
*वाहिमा रहजोगित्ति, नेवं भासिज्ज पन्नवं।*

वृ. किं च -'तहेव'त्ति सूत्रं, तथैव गावो 'दोह्या' दोहार्हा दोहसमय आसां वर्तत इत्यर्थः, 'दम्या' दमनीया गोरथका इति च, गोरथकाः कल्होडाः, तथा वाह्याः सामान्येन ये कचित्ताना-श्रित्य रथयोग्याश्चे इति नैवं भाषेत प्रज्ञावान् साधुः, अधीकरणलाघवादिदोषादिति सूत्रार्थः ॥

मू. (३१८) *जुवं गवित्ति नं बूआ, धेनुं रसदयत्ति अ।*
*रहस्से महल्लए वावि, वए संवहनित्ति अ ॥*

वृ. प्रयोजने तु क्वचिदेवं भाषेतेत्याह-'जुवं'ति सूत्रं, युवा गौरिति-दम्यो गौर्युवेति ब्रूयात्, धेनुं गां रसदेति ब्रूयात्, रसदा गौरिति, तथा हृस्वं महल्लकं चापि गोरथकं हृस्वं वाह्यं महल्लकं वदेत्, संवहनमिति रथयोग्यं संवहनं वदेत्, क्वचिद्दिगुपलक्षणादौ प्रयोजन इति सूत्रार्थः ॥

मू. (३१९) *तहेव गंतुमुज्जाणं, पव्वायणि वणाणि अ।*
*रुक्खा महल्ल पेहाए, नेवं भासिज्ज पन्नं ॥*

वृ. 'तहेव'त्ति सूत्रं, 'तथैवे'ति पूर्ववत्, गत्वा 'उद्यानं' जनक्रोडास्थानं तथा पर्वतान् प्रतीतान् गत्वा तथा वनानि च, तत्र वृक्षान् 'महतो' महाप्रमाणान् 'प्रेक्ष्य' दृष्ट्वा नैवं भाषेत 'प्रज्ञावान्' साधुरिति सूत्रार्थः ॥

मू. (३२०) *अलं पासायखंभाणं, तोरणाण गिहाण अ।*
*फलिहऽग्गलनावाणं, अलं उदगदोणिणं ॥*

वृ. किमित्याह-'अलं'ति सूत्रं, 'अलं' पर्याप्ता एते वृक्षाः प्रासादस्तम्भयोः, अत्रैकस्तम्भः प्रासादः, स्तम्भस्तु स्तंभ एव, तयोरलम्, तथा 'तोरणानां' नगरतोरणादीनां 'गृहाणां च' कुटीर-कादीनाम्, अलमिति योगः, तथा 'परिघार्गलानावां वा' तत्र नगरद्वारे परिघः गोपुर-कपाटा-दिष्वर्गला नौः प्रतीतेति आसामलभेते वृक्षाः, तथा उदकद्रोणीनां अलम्, उदकद्रोण्योऽरह-ट्टजलधारिका इति सूत्रार्थः ॥

मू. (३२१) *पीढए चंगबेरे अ, नंगले मइयं सिआ।*
*जंतलट्ठी व नाभी वा, गंडिआ व अलं सिआ ॥*

वृ. तथा 'पीढए'त्ति सूत्रं, पीठकायालमेते वृक्षाः, पीठकं प्रतीतं तदर्थम्, 'सुपां सुपो भवन्ती'ति चतुर्थ्यर्थे प्रथमा, एवं सर्वत्र योजनीयं, तथा 'चंगबेरा ये'ति चङ्गबेराकाष्ठापात्री तथा 'नंगले'त्ति लाङ्गलं-हलं, तथा अलं मयिकाय स्यात्, मयिकम्-उप्तबीजाच्छादनं, तथा

यन्त्रयष्टये वा, यन्त्रयष्टिः प्रतीता, तथा नाभये वा, नाभिः शकटरथाङ्ग, गण्डिकायै वाऽलं स्युरेते वृक्षा इति, नैवं भाषेत प्रज्ञावानिति वर्तते, गण्डिका सुवर्णकाराणामधिकरणी (अहिगरणी) स्थापनी भवतीति सूत्रार्थः ॥

मू. ( ३२२ ) *आसनं सयनं जाणं, हुज्जा वा किंचुवस्सए ।*
*भूओवघाइणिं भासं, नेवं भासिज्ज पन्नवं ॥*

वृ. तथा 'आसनं'ति सूत्रं, 'आसनम्' आसन्दकादि 'शयनं' पर्यङ्कादि 'यानं' युग्यादि भवेद्वा किञ्चदुपाश्रये-वसतावन्यद्-द्वारपात्रादीनेष वृक्षेष्विति 'भूतोपघातिनीं' सत्त्वपीडाकारिणीं भाषां नैव भाषेत प्रज्ञावान् साधुरिति सूत्रार्थः ॥ दोषाश्चात्र तद्वनस्वामी व्यन्तरादिः कुप्येत्, सलक्षणो वा वृक्ष इत्यभिगृह्णीयात्, अनियमितभाषिणो लाघवं चेत्येवमादयो योज्याः ॥

मू. ( ३२३ ) *तहेव गंतुमुज्जाणं, पव्वयाणि वनानि अ ।*
*रुक्खा महल्ल पेहाए, एवं भासिज्ज पन्नवं ॥*

वृ. अत्रैव विधिमाह- 'तहेव'त्ति सूत्रं, वस्तुतः पूर्ववदेव, नवरमेवं भाषेत ॥

मू. ( ३२४ ) *जाइमंता इमे रुक्खा, दीहवट्टा महालया ।*
*पयायसाला विडिमा, वए दरिसणित्ति अ ।*

वृ. 'जाइमंत'त्ति सूत्रं, 'जातिमन्तः' उत्तमजातयोऽशोकादयः अनेकप्रकारा 'एत' उपलभ्यमानस्वरूपया वृक्षा 'दीर्घवृत्ता महालयाः' दीर्घा नालिकेरीप्रभृतयः वृत्ता नन्दिवृक्षादयः महालया वटादयः 'प्रजातशाखा' उत्पन्नडाला 'विटपिनः' प्रशाखावन्तो वदेद्दर्शनीया इति च । एतदपि प्रयोजन उत्पन्ने विश्रमणतदासन्नमार्गकथनादौ वदेन्नान्यदेति सूत्रार्थः ॥

मू. ( ३२५ ) *तहा फलाइं पक्काइं, पायखज्जाइं नो वए ।*
*वेलोइयाइं टालाइं, वेहिमाइ त्ति नो वए ।*

वृ. 'तहा फलाणि'त्ति सूत्रं, तथा 'फलानि' आम्रफलादीनि 'पक्वानि' पाकप्राप्तानि तथा 'पाकखाद्यानि' बद्धास्थीनीति गर्तप्रक्षेपकोद्रवपलालादिना विपाच्य भक्षणयोग्यानीति नो वदेत् । तथा 'वेलोचितानि' पाकातिशयतो ग्रहणकालोचितानि, अतः परं कालं न विषहन्तीत्यर्थः, 'टालानि' अबद्धास्थीनि कोमलानीति तदुक्तं भवति, तथा 'द्वैधिकानी'त्ति पेशीसंपादनेन द्वैधीभावकरणयोग्यानीति नो वदेत् । दोषाः पुनरत्रात ऊर्ध्वं नाश एवामीषां न शोभनानि वा प्रकारान्तर भोगेनेत्यवधार्य गृहिप्रवृत्तावधिकरणादय इति सूत्रार्थः ॥

मू. ( ३२६ ) *असंथडा इमे अंबा, बहुनिव्वडिमाफला ।*
*वइज्ज बहुसंभूआ, भूअरूवत्ति वा पुणो ॥*

वृ. प्रयोजने पुनर्मार्गदर्शनादावेवं वदेदित्याह- 'असंथड'त्ति सूत्रं, असमर्था 'एते' आम्राः, अतिभरेण न शक्नुवन्ति फलानि धारयितुमित्यर्थः, आम्रग्रहणं प्रधानवृक्षोपलक्षणम्, एतेन पक्वार्थ उक्तः, तथा 'बहुनिर्वर्तितफलाः' बहूनि निर्वर्तितानि-बद्धास्थीनि फलानि येषु ते तथा, अनेन पाकखाद्यार्थ उक्तः, वदेद् 'बहुसंभूताः' बहूनि संभूतानि-पाकातिशयतो ग्रहणकालोचितानि फलानि येषु ते तथा, अनेन वेलोचितार्थ उक्तः, तथा भूतरूपा इति वा पुनर्वदेत्, भूतानि रूपाणी-अबद्धास्थीनि कोमलफलस्वरूपाणि येषु ते तथा, अनेन टालद्यर्थ

उपलक्षित इति सूत्रार्थः ॥

मू. ( ३२७ )　तहेवोसहिओ पक्काओ, नीलिआओ छवीइ अ।
लाइमा भज्जिमाउत्ति, पिहुखज्ज त्ति नो वए ॥

वृ. 'तहेव'त्ति सूत्रं, तथा 'ओषधयः' शाल्यादिलक्षणः, पक्वा इति, तथा नीलाश्छव्य इति वा वल्लचवलकादिफललक्षणाः तथा 'लवनवत्यो' लवनयोग्याः 'भर्जनवत्य' इति भर्जनयोग्याः तथा 'पृथकभक्ष्या' इति पृथुकभक्षणयोग्याः, नो वदेदिति सर्वत्राभिसंबध्यते, पृथुका अर्धपक्वशाल्यादिषु क्रियन्ते, अभिधानदोषाः पूर्ववदिति सूत्रार्थः ॥

मू. ( ३२८ )　रूढा बहुसंभूआ, थिरा ओसढावि अ।
गब्भिआओ पसूआओ, संसाराउत्ति आलवे ॥

वृ. प्रयोजने पुनर्मार्गदर्शनादावेवमालपेदित्याह- 'रूढ'त्ति सूत्रं, 'रूढाः' प्रादुर्भूताः 'बहुसंभूता' निष्पन्नप्रायाः 'स्थिरा' निष्पन्नाः 'उत्सृता' इति उपघातेभ्यो निर्गता इति वा, तथा 'गर्भिता' अनिर्गतशीर्षकाः 'प्रसूता' निर्गतशिर्षकाः 'प्रसूता' निर्गतशीर्षकाः 'संसाराः' संजाततन्दुलादिसारा इत्येवमालपेत्, पक्वाद्यर्थयोजना स्वधिया कार्येति सूत्रार्थः ॥

मू. ( ३२९ )　तहेव संखडिं नच्चा, किच्चं कज्जंति नो वए।
तेनगं वावि वज्झित्ति, सुतित्थित्ति अ आवगा ॥

वृ. वाग्विधिप्रतिषेधाधिकारेऽनुवर्तमान इदमपरमाह- 'तहेव'त्ति सूत्रं, तथैव 'संखडिं ज्ञात्वा' संखण्डयन्ते प्राणिनामायूंषि यस्यां प्रकरणक्रियायां सा संखडी तां ज्ञात्वा, 'करणीये'ति पित्रादिनिमित्तं कृत्यैवैषेति नो वदेत्, मिथ्यात्वोपबृंहणदोषात्, तथा स्तेनकं वापि वध्य इति नो वदेत्, तदनुमतत्वेन निश्चयादिदोषप्रसङ्गात्, सुतीर्था इति च, चशब्दाद्दुस्तीर्था इति वा 'आपगा' नद्यः केनचित्पृष्टाः सन्तो वदेत्, अधिकरणविधातादिदोषप्रसङ्गादिति सूत्रार्थः ॥

मू. ( ३३० )　संखडिं संखडिं बूआ, पणिअट्ठ त्ति तेनगं।
बहुसमाणि तित्थाणि, आवगाणं विआगरे ॥

वृ. प्रयोजने पुनरेवं वदेदित्याह- 'संखडि'न्ति सूत्रं, संखडिं संखडिं ब्रूयात्, साधुकथनादौ संकीर्णा संखडीत्येवमादि, पणितार्थ इति स्तेनकं वदेत्, शैक्षकादिकर्मविपाकदर्शनादौ, पणितेनार्थोऽस्येति पणितार्थः, प्राणद्यूतप्रयोजन इत्यर्थः, तथा बहुसमानि तीर्थानि 'आपगानं' नदीनां व्यागृणीयात् साध्वादिविषय इति सूत्रार्थः ॥

मू. ( ३३१ )　तहा नईओ पुण्णाओ, कायतिज्जत्ति नो वए।
नावाहिं तारिमाउत्ति, पाणिपिज्जत्ति नो वए ॥

वृ. वाग्विधिप्रतीषेधाधिकार एवेदमाह- 'तहा नईउ'त्ति सूत्रं, तथा नद्यः 'पूर्णा' भृता इति नो वदेत्, प्रवृत्तश्रवणनिवर्त्तनादिदोषात्, तथा 'कायतरणीयाः' शरीरतरणयोग्या इति नो वदेत्, साधुवचनतोऽविघ्नमिति प्रवर्त्तनादिप्रसङ्गात्, तथा नौभिः- द्रोणीभिस्तरणीयाः- तरणयोग्या इत्येवं नो वदेत्, अन्यथा विघ्नशङ्कया तत्प्रवर्त्तनात्, तथा 'प्राणिपेयाः' तटस्थप्राणिपेया नो वदेदिति, तथैव प्रवर्तनादिदोषादिति सूत्रार्थः ॥

मू. ( ३३२ )　बहुवाहडा अगाहा, बहुसलिलुप्पिलोदगा।

*बहुवित्थडोदगा आवि, एवं भासिज्ज पन्नवं ॥*

वृ. प्रयोजने तु साधुमार्गकथनादावेवं भाषेतेत्याह- 'बहुवाहड'त्ति सूत्रं, बहुभृताः प्रायशो भृता इत्यर्थः, तथा 'अगाधा' इति बह्वगाधाः प्रायोगम्भीराः, तथा 'बहुसलिलोत्पीलोदकाः' प्रतिस्रोतोवाहितापरसरित इत्यर्थः, तथा 'विस्तीर्णोदकाश्च' स्वतीरप्लावनप्रवृत्तजलाश्च, एवं भाषेत प्रज्ञावान् साधुः, न तु तदाऽऽगतपृष्टो न वेद्म्यहमिति ब्रूयात्, प्रत्यक्षमृषावादित्वेन तत्प्रद्वेषादिदोषप्रसङ्गादिति सूत्रार्थः ॥ नदिकिनिप्रतिषेधाधिकारः एवेनक

मू. (३३३) *तहेव सावज्जं जोगं, परस्सट्ठा अ निट्ठिअं ।*
*कीरमाणंति वा नच्चा, सावज्जं न लवे मुणी ॥*

वृ. तहेव'त्ति सूत्रं, तथैव 'सावद्यं' सपापं 'योगं' व्यापारमधिकरणं सभादिविषयं 'परस्यार्थाय' परनिमित्तं 'निष्ठितं' निष्पन्नं तथा 'क्रियमाणं वा' वर्तमानं वाशब्दाद्भविष्यत्कालभाविनं वा ज्ञात्वा 'सावद्यं नालपेत्' सपापं न ब्रूयात् 'मुनिः' साधुरिति सूत्रार्थः ॥

मू. (३३४) *सुकडित्ति सुपक्कित्ति, सुच्छिन्ने सुहडे मडे ।*
*सुनिट्ठिए सुलट्ठित्ति, सावज्जं वज्जए मुनी ॥*

वृ. तत्र निष्ठितं नैवं ब्रूयादित्याह- 'सुकडि'त्ति सूत्रं, 'सुकृत'मिति सुष्ठु कृतं सभादि 'सुपक्व'मिति सुष्ठु पक्वं सहस्रपाकादि 'सुच्छिन्न'मिति सुष्ठु छिन्नं तद्वनादि 'सुहृत'मिति सुष्ठु हृतं क्षुद्रस्य वित्तं 'सुमृत' इति सुष्ठु मृतः प्रत्यनीक इति, अत्रापि सुशब्दोऽनुवर्तते, 'सुनिष्ठित'मिति सुष्ठु निष्ठितं वित्ताभिमानिनो वित्तं 'सुलट्ठि'त्ति सुष्ठु सुन्दरा कन्या इत्येवं सावद्यमालपनं वर्जयेद् मुनिः, अनुमत्यादिदोषप्रसङ्गात्, निरवद्यं तु न वर्जयेत्, यथा- 'सुकृत'मिति सुष्ठु कृतं वैयावृत्त्यमनेन 'सुपक्व'मिति सुष्ठु पक्वं ब्रह्मचर्यं साधोः 'सुच्छिन्न'मिति सुष्ठु छिन्नं स्नेहबन्धनमनेन, 'सुहृत'मिति सुष्ठु हृतं शिक्षकोपकरणमुपसर्गे 'सुमृत' इति सुष्ठु मृतः पण्डितमरणेन साधुरिति, अत्रापि सुशब्दोऽनुवर्तते, 'सुनिष्ठित'मिति सुष्ठु निष्ठितं कर्माप्रमत्तसंयतस्य 'सुलट्ठ'त्ति सुष्ठु सुन्दरा साधुक्रियेत्येवमादीति सूत्रार्थः ॥

मू. (३३५) *पयत्तपक्कत्ति व पक्कमालवे, पयत्तछिन्नत्ति व छिन्नमालवे ।*
*पयत्तलट्ठित्ति व कम्महेउअं, पहारगाढत्ति व गाढमालवे ॥*

वृ. उक्तानुक्तापवादविधिमाह- 'पयत्त'त्ति सूत्रं, 'प्रयत्नपक्व' मिति वा प्रयत्नपक्वमेतत् 'पक्वं' सहस्रपाकादि ग्लानप्रयोजन एवमालपेत् तथा 'प्रयत्नच्छिन्न'मिति वा प्रयत्नच्छिन्नमेतत् 'छिन्नं' वनादि साधुनिवेदनादौ एवमालपेत् तथा 'प्रयत्नलष्टे'ति वा प्रयत्नसुन्दरा कन्या दीक्षिता सती सम्यक् पालनीयेत 'कर्महेतुक'मिति सर्वमेव वा कृतादि कर्मनिमित्तमालपेदिति योगः, तथा 'गाढप्रहार'मिति वा कञ्चन गाढमालपेत्-गाढप्रहारं ब्रूयात् क्वचित्प्रयोजने, एवं हि तदप्रीत्यादयो दोषाः परिहृता भवन्तीति सूत्रार्थः ॥

मू. (३३६) *सव्वुक्कसं परग्घं वा, अउलं नत्थि एरिसं ।*
*अविक्किअमवत्तव्वं, अचिअत्तं चेव नो वए ॥*

वृ. क्वचिद्व्यवहारे प्रक्रान्ते पृष्टोऽपृष्टो वा नैवं ब्रूयादित्याह- 'सव्वुक्कसं'ति सूत्रं, एतन्मध्य इदं 'सर्वोत्कृष्टं' स्वभावेन सुन्दरमित्यर्थः, 'परार्धं वा' उत्तमार्घं वा महार्घं क्रीतमिति भावः

अतुलं नास्तीदृशमन्यत्रापी कश्चित्, 'अविक्किअं'ति असंस्कृतं सुलभमीदृशमन्यत्रापि, 'अवक्तव्य'मित्यनन्तगुणमेतत् अविअत्तं वा-अप्रीतिकरं चैतदिति नो वदेत्, अधिकरणान्तरायादिदोषप्रसङ्गादिति सूत्रार्थः ॥

मू. (३३७) *सव्वमेअं वइस्सामि, सव्वमेअं ति नो वए।*
*अनुवीइ सव्वं सव्वत्थ, एवं भासिज्ज पन्नवं ॥*

वृ. किं च - 'सव्वमेअं'ति सूत्रं, 'सर्वमेतद्वक्ष्यामी'ति केनचित् कस्यचित् संदिष्टे सर्वमेतत्त्वया वक्तव्यमिति सर्वमेतद्वक्ष्यामीति नो वदेत्, सर्वस्य तथास्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वात्, तथा सर्वमेतदिति नो वदेत्, कस्यचित्संदेशं प्रयच्छन् सर्वमेतदित्येवं वक्तव्य इति नो वदेत्, सर्वस्य तथास्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वात्, असंभवाभिधाने मृषावादः, यतश्चैवमतः 'अनुचिन्त्य' आलोच्य सर्वं वाच्यं 'सर्वत्र' कार्येषु यथा असंभवाद्यभिधानादिना मृषावादो न भवत्येवं भाषेत प्रज्ञावान् साधुरिति सूत्रार्थः ॥

मू. (३३८) *सुक्कीअं वा सुविक्कीअं, अकिज्जं किज्जमेव वा।*
*इमं गिण्ह इमं मुंच, पणीअं नो विआगरे ॥*

वृ. किंच- 'सुक्कीअं व'त्ति सूत्रं, 'सुक्रीतं वे'त्ति किञ्चित् केनचित् क्रीतं दर्शितं सत्सुक्रीतमिति न व्यागृणीयात् इति योगः, तथा 'सुविक्रीत'मिति किञ्चित्केनचिद्विक्रीतं दृष्ट्वा पृष्टः सन् सुविक्रीतमिति न व्यागृणीयात्, तथा केनचित् क्रीतें पृष्टः 'अक्रेयं' क्रयार्हमेव न भवतीति न व्यागृणीयात्, तथैवमेव 'क्रेयमेव वा' क्रयार्हमेवेति, तथा 'इदं' गुडादि गृहाणागामिनि काले महार्घं भविष्यति तथा 'इदं' मुञ्च घृताद्यागामिनी काले समर्घं भविष्यतीतिकृत्वा 'पणितं' पण्यं नैव व्यागृहणीयात्, अप्रीत्यधिकरणादिदोषप्रसङ्गादिति सूत्रार्थः ॥

मू. (३३९) *अप्पग्घे वा महग्घे वा, कए वा विक्कएवि वा।*
*पणिअट्ठे समुप्पन्ने, अनवज्जं विआगरे ॥*

वृ. अत्रैव विधिमाह-'अप्पग्घे व'त्ति सूत्रं, अल्पार्घे वा महार्घे वा, कस्मिन्नित्याह-क्रये वा विक्रयेऽपि वा 'पणितार्थे' पण्यवस्तुनि समुत्पन्ने केनचित्त पृष्टः सन् 'अनवद्यम्' अपापं व्यागृणीयात् यथा नाधिकारोऽत्र तपस्विनां व्यापाराभावादिति सूत्रार्थः ॥

मू. (३४०) *तहेवासंजयं धीरो, आस एहि करेहि वा।*
*सय चिट्ठ वयाहित्ति, नेवं भासिज्ज पन्नवं ॥*

वृ. 'तहेव'त्ति सूत्रं, तथैव 'असंयतं' गृहस्थं 'धीरः' संयतः आस्स्वेहैव, एहीतोऽत्र, कुरु वेदं-संचयादि, तथा शेष्वनिद्रया, तिष्ठोर्ध्वस्थानेन, व्रज ग्राममितिनैवं भाषेत प्रज्ञावान् साधुरिति।

मू. (३४१) *बहवे इमे असाहू, लोए वुच्चंति साहुणो।*
*न लवे असाहु साहुत्ति, साहुं साहुत्ति आलवे ॥*

वृ. किंच-'बहवे'त्ति सूत्रं, बहवः 'एते' उपलभ्यमानस्वरूपा आजीवकादयः असाधवः निर्वाणसाधकयोगापेक्षया 'लोके तु' प्राणिसंघाते उच्यन्ते साधवः सामान्येन, तत्र नालपेदसाधुं साधुं, मृषावादप्रसङ्गात्, अपितु साधुं साधुमित्यालपेत्, न तु तमपि नालपेत्, उपबृंहणातिचारदोषप्रसङ्गादिति सूत्रार्थः ॥

मू. ( ३४२ ) *नाणदंसणसंपन्नं, संजमे अ तवे रयं।*
*एवंगुणसमाउत्तं, संजयं साहुमालवे॥*

वृ. किंविशिष्टं साधुं साधुमित्यालपेदित्यत आह- 'नाण'त्ति सूत्रं, ज्ञानदर्शनसंपन्नंसमृद्धं संयमे तपसि च रतं यथाशक्ति एवंगुणसमायुक्तं संयतं साधुमालपेत्, न तु द्रव्यलिङ्गधारिणम - पीति सूत्रार्थः॥

मू. ( ३४३ ) *देवाणं मनुआणं च, तिरिआणं च वुग्गहे।*
*अमुगाणं जओ होउ, मा वा होउ त्ति नो वए॥*

वृ. किंच- 'देवाणं'ति सूत्रं, 'देवानां' देवासुराणां 'मनुजानां' नरेन्द्रादीनां 'तिरश्चां' महिषादीनां च 'विग्रहे' संग्रामे सति 'अमुकानां' देवादीनां जयो भवतु मा वा भवत्विति नो वदेद्, अधिकरण- तत्स्वाम्यादिद्वेषदोषप्रसङ्गादिति सूत्रार्थः॥

मू. ( ३४४ ) *वाओ वुट्ठं च सीउण्हं, खेमं धायं सिवंति वा।*
*कया नु हुज्ज एआणि ?, मा वा होउ त्ति नो वए।*

वृ. किं च - 'वाउ'त्ति सूत्रं, 'वातो' मलयमारुतादिः, 'वृष्टं वा' वर्षणं, शीतोष्णं प्रतीतं 'क्षेमं' राजविड्वरशून्यं 'ध्रातं' सुभिक्षं 'शिव'मिति चोपसर्गरहितं कदा नु भवेयुः 'एतानि' वातादीनि, मा व भयेवुर्रिति धर्माद्यभिभूतो नो वदेद्, अधिकरणादिदोषप्रसङ्गाद्, वातादिषु सत्सु सत्त्वपीडापत्तेः तद्वचनतस्तथाभवनेऽप्यार्तध्यानभावादिति सूत्रार्थः॥

मू. ( ३४५ ) *तहेव मेहं व नहं व मानवं, न देवदेवत्ति गिरं वइज्जा।*
*समुच्छिए उन्नए वा पओए, वइज्ज वा वुट्ठ बलाहय त्ति॥*

वृ. 'तहेव'त्ति सूत्रं, तथैव मेघं वा नभो वा मानवं वाऽऽश्रित्य नो देवदेवत्ति गीरं वदेत्, मेघमुन्नतं दृष्ट्वा उन्नतो देव इति नो वदेत्, एवं 'नभ' आकाशं 'मानवं' राजानं वा देवमिति नो वदेत्, मिथ्यावालाघवादिप्रसङ्गात्। कथं तर्हि वदेदित्याह- उन्नतं दृष्ट्वा संमूर्छित उन्नतो वा पयोद इति, वदेद्वा वृष्टो बलाहक इति सूत्रार्थः॥

मू. ( ३४६ ) *अंतलिक्खत्ति नं बूआ, गुज्झाणुचरिअत्ति अ।*
*रिद्धिमंतं नरं दिस्स, रिद्धिमंतंति आलवे॥*

वृ. नभ आश्रित्याह- 'अंतलिक्ख'त्ति सूत्रं, इह नभोऽन्तरिक्षमिति ब्रूयाद्गुह्यानुचरितमिति वा, सुरसेवितमित्यर्थः, एवं किल मेघोऽप्येतदुभयशब्दवाच्य एव। तथा 'ऋद्धिमन्त' संपदुपेतं नरं दृष्ट्वा, किमित्याह- 'रिद्धिमंत'मिति ऋद्धिमानयमित्येवमालपेत्, व्यवहारतो मृषावादादि- परिहारार्थमिति सूत्रार्थः॥

मू. ( ३४७ ) *तहेव सावज्जणुमोअणी गिरा, ओहारिणी जा य परोवधाइणी।*
*से कोह लोह भय हास मानवो, न हासमाणोऽवि गिरं वइज्जा॥*

वृ. किंच- 'तहेव'त्ति सूत्, तथैव सावद्यानुमोदिनी 'गीः' वाग् यथा सुष्ठु हतो ग्राम इति, तथा 'अवधारिणी' इदमित्थमेवेति, संशयकारिणी वा, या च परोपघातिनी यथामांसमदोषाय 'से' इति तामेवंभूतां क्रोधाल्लोभाद्भयाद्धासाद्वा, मानप्रेमादीनामुपलक्षणमेतत्, 'मानवः' पुमान् साधुर्न हसन्नपि गिरं वदेत्, प्रभूतकर्मबन्धहेतुत्वादिति सूत्रार्थः॥

*मू. ( ३४८ )सवक्कसुद्धिं समुपेहिआ मुणी, गिरं च दुट्ठं परिवज्जए सया।*
*मिअं अदुट्ठे अनुवीइ भासए, सयाण मज्झे लहई पसंसणं ॥*

वृ. वाक्यशुद्धिफलमाह-'सवक्क'त्ति सूत्रं, सद्वाक्यशुद्धिं वा, सतीं शोभनां, स्वामात्मीयां, स इति वक्ता, वाक्यशुद्धिं 'संप्रेक्ष्य' सम्यग् दृष्ट्वा 'मुनिः' साधुः गिरं तु 'दुष्टां' यथोक्तलक्षणां परिवर्जयेत् सदा, किंतु 'मितं' स्वरतः परिमाणतश्च, 'अदुष्टं' देशकालोपपन्नादि 'अनुविचिन्त्य' पर्यालोच्य भाषमाणः सन् 'सतां' साधूनां मध्ये 'लभते प्रशंसनं' प्राप्नोति प्रशंसामिति।

*मू. ( ३४९ )भासाइ दोसे अ गुणे अ जाणिआ, तीसे अ दुट्ठे परिवज्जए सया।*
*छसु संजए सामणिए सया जए, वइज्ज बुद्धे हिअ मानुलोमिअं ॥*

वृ. यतश्चैवमतः-'भासाइ'त्ति सूत्रं, 'भाषाया' उक्तलक्षणाया दोषांश्च गुणांश्च 'ज्ञात्वा' यथावद्-वेत्य तस्याश्च दुष्टाया भाषायाः परिवर्जकः सदा, एवंभूतः सन् षड्जीवनिकायेषु संयतः, तथा 'श्रामण्ये' श्रमणभावे चरणपरिणामगर्भे चेष्टिते 'सदा यतः' सर्वकालमुद्युक्तः सन् वदेद् बुद्धो 'हितानुलोमं' हितं-परिणामसुन्दरम् अनुलोमं-मनोहारीति सूत्रार्थः ॥

*मू. ( ३५० )परिक्खभासी सुसमाहिइंदिए, चउक्कसायावगए अनिस्सिए।*
*से निद्धुणे धुन्नमलं पुरेकडं, आराहए लोगमिणं तहा परं ॥ ति बेमि ॥*

वृ. उपसंहरन्नाह-'परिक्ख'त्ति सूत्रं, 'परीक्ष्यभाषी' आलोचितवक्ता तथा 'सुसमाहितेन्द्रियः' सुप्रणिहितेन्द्रिय इत्यर्थः, 'अपगतचतुष्कषायः' क्रोधादिनिरोधकर्तेति भावः, 'अनिश्रितो' द्रव्यभावनिश्रारहितः, प्रतिबन्धविमुक्त इति हृदयम्, स इत्थंभूतो 'निर्धूय' प्रस्फोट्य 'धून्नमलं' पापमलं 'पुराकृतं' जन्मान्तरकृतं, किमिति ?-'आराधयति' प्रगुणीकरोति लोकम् 'एनं' मनुष्यलोकं वाक्यसंयतत्वेन, तथा 'पर'मिति परलोकमाराधयति निर्वाणलोकं, यथासंभवमनन्तरं पारम्पर्येण वेति गर्भः। ब्रवीमिति पूर्ववत्। नयाः पूर्ववदेव ॥

अध्ययनं ७ समाप्तम्

**मुनि दीपरत्न सागरेण संशोधिता सम्पादिता दशवैकालिकसूत्रे सप्तम्‌अध्ययनस्य भद्रबाहु स्वामि विरचिता निर्युक्तिः एवं हरिभद्रसूरि विरचिता टीका परिसमाप्ता।**

## अध्ययनं - ८ - आचारप्रणिधिः

वृ. व्याख्यातं वाक्यशुद्ध्यध्ययनम्, इदानीमाचारप्रणिध्याख्यामारभ्यते, अस्य चायमभि-सम्बन्धः इहानन्तराध्ययने साधुना वचनगुणदोषाभिज्ञेन निरवद्यवचसा वक्तव्यमित्येतदुक्तम्, इह तु तन्निरवद्यं वच आचारे प्रणिहितस्य भवतीति तत्र यत्नवता भवितव्यमित्येतदुच्यते,

"पणिहाणरहिअस्सेह, निरवज्जंपि भासिअं।
सावज्जतुल्लं विन्नेअं, अज्झत्थेणेह संवुडम् ॥"

इत्यनेनाभिसंबन्धेनायातमिदमध्ययनम्, अस्य चानुयोगद्वारोपन्यासः पूर्ववत्तावद्यावन्नाम-निष्पन्नो निक्षेपः, तत्र चाचारप्रणिधिरिति द्विपदं नाम, तत्राचारनिक्षेपमतिदिशन् प्रणिधिं च प्रतिपादयन्नाह-

नि. [२९४] जो पुव्विं उद्दिट्ठो आयारो सो अहीनमइरित्तो।

दुविहो अ होइ पणिही दव्वे भावे अ नायव्वो ॥

वृ. यः पूर्वं क्षुल्लिकाचारकथायामुद्दिष्ट आचारः सोऽहीनातिरिक्तः-तदवस्थ एवेहापि द्रष्टव्य इति वाक्यशेषः, क्षुण्णत्वान्नामस्थापने अनादृत्य प्रणिधिमधिकृत्याह- द्विविधश्च भवति प्रणिधिः, कथमित्याह-'द्रव्य' इति द्रव्यविषयो 'भाव' इति भावविषयश्च ज्ञातव्य इति गाथार्थः ।

नि. [२९५] दव्वे निहाणमाई मायपउत्ताणि चेव दव्वाणि ।
भाविंदिअनोइंदिअ दुविहो उ पसत्थ अपसत्थो ॥

वृ. 'द्रव्य' इति द्रव्यविषयः प्रणिधिः निधानादि प्रणिहितं निधानं निक्षिप्तमित्यर्थः, आदिशब्दः स्वभेदप्रख्यापकः, मायाप्रयुक्तानि चेह द्रव्याणि द्रव्यप्रणिधिः, पुरुषस्य स्त्रीवेषेण पलायनादिकरणं स्त्रियो वा पुरुषवेषेणेत्यादि । तथा 'भाव' इति भावप्रणिधिर्द्विविधः-इन्द्रियप्रणिधिर्नो-इन्द्रियप्रणिधिश्च, तत्रेन्द्रियप्रणिधिर्द्विविधः-प्रशस्तोऽप्रशस्तश्चेति गाथार्थः ॥

नि. [२९६] सद्देसु अ रूवेसु अ गंधेसु रसेसु तह य फासेसु ।
नवि रज्जइ न वि दुस्सइ एसा खलु इंदिअप्पणिही ॥

वृ. शब्देषु च रूपेषु च गन्धेषु रसेषु तथा च स्पर्शेषु एतेष्विन्द्रियार्थेष्विष्टानिष्टेषु चक्षुरादिभिरिन्द्रियैर्नापि रज्यते नापि द्विष्यते एष खलु माध्यस्थ्यलक्षण इन्द्रियप्रणिधिः प्रशस्त इति गाथार्थः, अन्यथा त्वप्रशस्तः, तत्र दोषमाह-

नि. [२९७] सोइंदिअरस्सीहि उ मुक्काहिं सद्दमुच्छिओ जीवो ।
आइअइ अनाउत्तो सद्दगुणसमुट्ठिए दोसे ॥

वृ. 'श्रोत्रेन्द्रियरश्मिभिः' श्रोतेन्द्रियरज्जुभिः 'मुक्ताभिः' उच्छृङ्खलाभिः, किमित्याह-'शब्दमूर्च्छितः' शब्दगृद्धो जीवः 'आदत्ते' गृह्णात्यनुपयुक्तः सन्, कानित्याह-शब्दगुणसमुत्थितान् दोषान्-शब्द एवेन्द्रियगुणः तत्समुत्थितान् दोषान्-बन्धवधादीन् श्रोत्रेन्द्रियरज्जुभिरादत्त इति गाथार्थः ॥ शेषेन्द्रियातिदेशमाह-

नि. [२९८] जह एसो सद्देसु एसेव कमो उ सेसएहिं पि ।
चउहिंपि इंदिएहिं रूवे गंधे रसे फासे ॥

वृ. यथैष 'शब्देषु' शब्दविषयः श्रोत्रेन्द्रियमधिकृत्य दोष उक्तः, एष एव क्रमः 'शेषैरपि' चक्षुरादिभिश्चतुर्भिरपीन्द्रियैर्दोषाभिधाने द्रष्टव्यः, तद्यथा-चक्खिन्दिअरस्सीहि उ, इत्यादि, अत एवाह-'रूपे गन्धे रसे स्पर्शे' रूपादिविषय इति गाथार्थः ॥ अमुमेवार्थं दृष्टान्ताभिधानेनाह-

नि. [२९९] जस्स खलु दुप्पणिहिआणि इंदिआइं तवं चरंतस्स ।
सो हीरइ असहीणेहिं सारही वा तुरंगेहिं ॥

वृ. 'यस्य खल्वि'ति यस्यापि दुष्प्रणिहितानीन्द्रियाणि विश्रोतोगामीनि 'तपश्चरत' इति तपोऽपि कुर्वतः स तथाभूतो 'ह्रियते' अपनीयते इन्द्रियैरेव निर्वाणहेतोश्चरणात्, दृष्टान्तमाह-'अस्वाधीनैः' अस्ववशैः 'सारथिरिव' रथनेतेव 'तुरङ्गमैः' अश्वैरिति गाथार्थः ॥

नि. [३००] कोहं मानं मायं लोहं च महब्भयाणि चत्तारि ।
जो रुंभइ सुद्धप्पा एसो नोइंदिअप्पणिही ॥

वृ. क्रोधं मानं मायां लोभं चेत्येतेषां स्वरूपमनन्तानुबन्ध्यादिभेदभिन्नं पूर्ववत्, एत एव च

महाभयानि चत्वारि, सम्यग्दर्शनादिप्रतिबन्धरूपत्वात्। एतानि यो रुणद्धि शुद्धात्मा उदय-निरोधादिना 'एष' निरोद्धा क्रोधादिनिरोधपरिणामानन्यत्वान्नोइन्द्रियप्रणिधिः, कुशलपरिणाम-त्वादिति गाथार्थः ॥ एतदनिरोधे दोषमाह-

नि. [३०१] जस्सवि अ दुप्पणिहिआ होंति कसाया तवं चरंतस्स।
सो बालतवस्सीविव गयण्हाणपरिस्समं कुणइ ॥

वृ. यस्यापि कस्यचिद्व्यवहारतस्विनो दुष्प्रणिहिता-अनिरुद्धा भवन्ति 'कषायाः' क्रोधादयः 'तपश्चरतः' तपः कुर्वत इत्यर्थः स बालतपस्वीव उपवासपारणकप्रभूततरारम्भको जीवो(यथा) गजस्नानपरिश्रमं करोति, चतुर्थषष्ठादिनिर्मित्ताभिधानतः प्रभूतकर्मबन्धोपपत्तेरिति गाथार्थः ॥ अमुमेवार्थं स्पष्टतरमाह-

नि. [३०२] सामाण्णमनुचरंतस्स कसाया जस्स उक्कडा होंति।
मन्नामि उच्छुफुल्लं व निप्फलं तस्स सामन्नं ॥

वृ. 'श्रामण्यमनुचरतः' श्रमणभावमपि द्रव्यतः पालयत इत्यर्थः, कषाया यस्योत्कटा भवन्ति क्रोधादयः मन्ये इक्षुपुष्पमिव निष्फलं निर्जराफलमधिकृत्य तस्य श्रामण्यमिति गाथार्थः ॥ उपसंहरन्नाह-

नि. [३०३] एसो दुविहो पणिही सुद्धो जइ दोसु तस्स तेसिं च।
एत्तो पसत्थमपसत्थ लक्खणमज्झत्थनिप्फन्नं ॥

वृ. 'एषः' अनन्तरोदितो 'द्विविधः प्रणिधिः' इन्द्रियनोइन्द्रियलक्षणः 'शुद्धं' इति निर्दोषो भवति, यदि 'द्वयोः' बाह्याभ्यन्तरचेष्टयोः 'तस्य' इन्द्रियकषायवतः 'तेषां च' इन्द्रियकषायाणां सम्यग्योगो भवति, एतदुक्तं भवति-यदि बाह्यचेष्टायामभ्यन्तरचेष्टायां च तस्य च प्रणिधिमत इन्द्रियाणां कषायाणां च निग्रहो भवति ततः शुद्धः प्रणिधिरितरथा त्वशुद्धः, एवमपि तत्त्वनीत्याऽभ्यन्तरैव चेष्टेह गरीयसीत्याह, अत एवमपि तत्त्वे प्रशस्तं चारु, तथाऽप्रशस्तमचारु लक्षणं प्रणिधेः 'अध्यात्मनिष्पन्नम्' अध्यवसानोद्गतमिति गाथार्थः ॥ एतदेवाह-

नि. [३०४] मायागारवसहिओ इंदिअनोइंदिएहिं अपसत्थो।
धम्मत्था अ पसत्थो इंदिअनोइंदिअप्पणिही ॥

वृ. 'मायागारवसहितो' मातृस्थानयुक्त ऋद्ध्यादिगारवयुक्तश्चेन्द्रियनोइन्द्रिय-योर्निग्रहं करोति, मातृस्थानत ईर्यादिप्रत्युपेक्षणं द्रव्यक्षान्त्याद्यासेवनं तथा ऋद्ध्यादिगारवाद्वेति 'अप्रशस्त' इत्ययमप्रशस्तः प्रणिधिः। तथा धर्मार्थं प्रशस्त इति, मायागारवरहितो धर्मार्थमेवेन्द्रिय-नोइन्द्रियनिग्रहं करोति यः स तदभेदोपचारात् 'प्रशस्तः' सुन्दर इन्द्रियनोइन्द्रियप्रणिधिर्निर्जरा-फलत्वादिति गाथार्थः ॥ साम्प्रतमप्रशस्तेतरप्रणिधेर्दोषगुणानाह-

नि. [३०५] अट्ठविहं कम्मरयं बंधइ अपसत्थपणिहिमाउत्तो।
तं चेव खवेइ पुणो पसत्थपणिहीसमाउत्तो ॥

वृ. 'अष्टविधं' ज्ञानावरणीयादिभेदात् कर्मरजो 'बन्धाति' आदत्ते, क इत्याह-'अप्रशस्त-प्रणिधिमायुक्तः' अप्रशस्तप्रणिधौ व्यवस्थित इत्यर्थः, तदेवाष्टविधं कर्मरजः क्षपयति पुनः, कदेत्याह-प्रशस्तप्रणिधिसमायुक्त इति गाथार्थः ॥ संयमाद्यर्थं च प्रणिधिः प्रयोक्तव्य -

नि. [३०६] दंसणनाणचरित्ताणि संजमो तस्स साहणट्ठाए।
पणिही पउंजिअव्वो अनायणाइं च वज्जाइं ॥

वृ. दर्शनज्ञानचारित्राणि संयमः संपूर्णः, 'तस्य' संपूर्णसंयमस्य साधनार्थं प्रणिधिः प्रशस्तः प्रयोक्तव्यः, तथा 'अनायतनानि च' विरुद्धस्थानानि वर्जनीयानि इति गाथार्थः ॥

नि. [३०७] दुप्पणिहिअजोगी पुण लंछिज्जइ संजमं अयाणंतो ।
वीसत्थनिसट्ठंगोव्व कंटइल्ले जह पडंतो ॥

वृ. 'दुष्प्रणिहितयोगी पुनः' सुप्रणिधिरहितः, प्रव्रजित इत्यर्थः, [illegible] संयममजानानः संयत एवेति। दृष्टान्तमाह-विश्रब्धो निसृष्टाङ्गस्तथा अयत्नपरः कंटकवति श्वभ्रादौ यथा पतन् कुश्चिल्लञ्छ्यते तद्वदसौ संयत इति गाथार्थः ॥ व्यतिरेकमाह-

नि. [३०८] सुप्पणिहिअजोगी पुण न लिप्पई पुव्वभणिअदोसेहिं।
निद्दहइ अ कम्माइं सुक्खतणाइं जहा अग्गी ॥

वृ. 'सुप्रणिहितयोगी पुनः' सुप्रणिहितः प्रव्रजितः पुनः न लिप्यते 'पूर्वभणितदोषैः' कर्मबन्धादिभिः, संवृताश्रवद्वारत्वात्, निर्दहति च कर्माणि प्राक्तनानि तपःप्रणिधिभावेन, दृष्टान्तमाह-शुष्कतृणानि यथा अग्निर्निर्दहति तद्वदिति गाथार्थः ॥

नि. [३०९] तम्हा उ अप्पसत्थं पणिहाणं उज्झिऊण समणेणं।
पणिहाणंमि पसत्थे भणिओ आयारपणिहित्ति ॥

वृ. यस्मादेवमप्रशस्तप्रणिधिर्दुःखद इतरश्च सुखदस्तस्माद् 'अप्रशस्तं प्रणिधानम्' अप्रशस्तं प्रणिधीम् 'उज्झित्वा' परित्यज्य 'श्रमणेन' साधुना 'प्रणिधाने' प्रणिधौ 'प्रशस्ते' कल्याणे, यत्नः कार्य इति वाक्यशेषः। निगमयन्नाह-भणित आचारप्रणिधिरिति गाथार्थः ॥

उक्तो नाम-निष्पन्नो निक्षेपः, साम्प्रतं सूत्रालापकनिष्पन्नस्यावसर इत्यादिचर्चः पूर्ववत्ता-वद्यावत्सूत्रानुगमेऽस्खलितादिगुणोपेतं सुत्रमुच्चारणीयं, तच्चेदम्-

*मू. (३५१) आयारप्पणिहिं लद्धुं, जहा कायव्व भिक्खुणा।*
*तं भे उदाहरिस्सामि, आनुपुव्विं सुणेह मे ॥*

वृ. व्याख्या-'आचारप्रणिधिम्' उक्तलक्षणं 'लब्ध्वा' प्राप्य 'यथा' येन प्रकारेण कर्तव्यं विहितानुष्ठानं 'भिक्षुणा' साधुना 'तं' प्रकारं 'भे' भवद्भयः 'उदाहरिष्यामि' कथयिष्यामि 'आनुपूर्व्या' परिपाट्या शृणुत ममेति गौतमादयः स्वशिष्यानाहुरिति सूत्रार्थः ॥

*मू. (३५२) पुढविदगअगनिमारुअ, तणरुक्खस्सबीयगा।*
*तसा अ पाणा जीवत्ति, इइ वुत्तं महेसिणा ॥*

वृ. तं प्रकारमाह-'पुढवि'त्ति सूत्रं पृथिव्युदकाग्निवायवस्तृणवृक्षसबीजा एते पञ्चैकेन्द्रिय-कायाः पूर्ववत्, त्रसाश्च प्राणिनो द्वीन्द्रियादयो जीवा इत्युक्तं 'महर्षिणा' वर्धमानेन गौतमेन चेति।

*मू. (३५३) तेसिं अच्छणजोएण, निच्चं होअव्वयं सिआ*
*मनसा कायवक्केणं, एवं हवइ संजए ॥*

वृ. यतश्चैवमतः 'तेसिं'ति सूत्रं, अस्य व्याख्या-'तेषां' पृथिव्यादीनाम् 'अक्षणयोगेन' अहिंसाव्यापारेण नित्यं 'भवितव्यं' वर्तितव्यं स्यात् भिक्षुणा मनसा कायेन वाक्येन एभिः

करणैरित्यर्थः, एवं वर्तमानोऽहिंसकः सन् भवति संयतो, नान्यथेति सूत्रार्थः ॥

मू. ( ३५४ ) *पुढवि भित्तिं सिलं लेलुं, नेव भिंदे न संलिहे ।*
*तिविहेण करणजोएणं, संजए सुसमाहिए ॥*

वृ. एवं सामान्येन षड्जीवनिकायाहिंसया संयतत्वमभिधायाधुना तद्गत विधीन्विधानतो विशेषेणाह- 'पुढवि'त्ति सूत्रं, पृथिवीं शुद्धां 'भित्तिं' तटीं 'शिलां' पाषाणात्मिकां 'लेष्टुम्' इष्टलखण्डं नैव भिन्द्यात् नो संलिखेत्, तत्र भेदनं द्वैधीभावोत्पादनं 'संलेखनम्' ईषल्लेखनं 'त्रिविधेन करणयोगेन' न करोति मनसेत्यादिना 'संयतः' साधुः 'सुसमाहितः' शुद्धभाव इति।

मू. ( ३५५ ) *सुद्धपुढवीं न निसीए, ससरक्खंमि अ आसने ।*
*पमज्जित्तु निसीइज्जा, जाइत्ता जस्स उग्गहं ॥*

वृ. तथा 'सुद्ध'त्ति सूत्रं, 'शुद्धपृथिव्याम्' अशस्त्रोपहतायामनन्तरितायां न निषीदेत्, तथा 'सरजस्के वा' पृथ्वीरजोऽवगुण्ठिते वा 'आसने' पीठकादौ न निषीदेत्, निषीदनग्रहणात्स्थानत्वग्वर्तनपरिग्रहः, अचेतनायां तु प्रमृज्यतां रजोहरणेन निषीदेत् 'ज्ञात्वे'त्यचेतनां ज्ञात्वा 'याचयित्वाऽवग्रह'मिति यस्य संबन्धिनी पृथिवी तमवग्रहमनुज्ञाप्येति सूत्रार्थः ॥

मू. ( ३५६ ) *सीओदगं न सेविज्जा, सिलावुट्ठं हिमाणि अ ।*
*उसिणोदगं तत्तफासुअं, पडिगाहिज्ज संजए ॥*

वृ. उक्तः पृथिवीकायविधिः, अधुना अप्कायविधिमाह-

'सीओदगं'ति सूत्रं, 'शीतोदकं' पृथिव्युद्भवं सच्चित्तोदकं न सेवेत, तथा शिलावृष्टं हिमानि च न सेवेत, तत्र शिलाग्रहणेन करकाः परिगृह्यन्ते, वृष्टं वर्षणं, हिमं प्रतीतं प्राय उत्तरापथे भवति। यद्येवं कथमयं वर्त्ततेत्याह- 'उष्णोदकं' क्वथितोदकं 'तप्तप्रासुकं' तप्तं सत्प्रासुकं त्रिदण्डोद्वृत्तं, नोष्णोदकमात्रं, प्रतिगृह्णीयाद्वृत्त्यर्थं 'संयतः' साधुः, एतच्च सौवीराद्युपलक्षणमिति।

मू. ( ३५७ ) *उदउल्लं अप्पणो कायं, नेव पुंछे न संलिहे ।*
*समुप्पेह तहाभूअं, नो नं संघट्टए मुनी ॥*

वृ. तथा 'उदउल्लं'ति सूत्रं, नदीमुत्तीर्णो भिक्षाप्रविष्टो वा वृष्टिहतः 'उदकार्द्रम्' उदकबिन्दुचितमात्मनः 'कायं' शरीरं स्निग्धं वा नैव 'पुञ्छयेद्' वस्त्रतृणादिभिः 'न संलिखेत्' पाणिना, अपितु 'संप्रेक्ष्य' निरीक्ष्य 'तथाभूतम्' उदकार्द्रादिरूपं नैव कायं 'संघट्टयेत्' मुनिर्मनागपि न स्पृशेदिति सूत्रार्थः ॥

मू. ( ३५८ ) *इंगालं अगनिं अच्चिं, अलायं वा सजोइअं ।*
*न उंजिज्जा न घट्टिज्जा, नो नं निव्वावए मुनी ॥*

वृ. उक्तोऽप्कायविधिः, तेजःकायविधिमाह- 'इंगालं'ति सूत्रं, 'अङ्गारं' ज्वालारहितम् 'अग्निम्' अयःपिण्डानुगतम् 'अर्चिः' छिन्नज्वालम् 'अलातम्' उल्मुकं वा 'सज्योतिः' साग्निकमित्यर्थः, किमित्याह-नोत्सिञ्चेत् न घट्टयेत्, तत्रोञ्जनमुत्सेचनं प्रदीपादेः, घट्टनं मिथश्चालनं, तथा नैनम्-अग्निं 'निर्वापयेद्' अभावमापादयेत् 'मुनिः' साधुरिति सूत्रार्थः ॥

मू. ( ३५९ ) *तालिअंटेण पत्तेण, साहाए विहुणेण वा ।*
*न वीइज्जऽप्पणो कायं, बाहिरं वावि पुग्गलं ॥*

